अराजान्वयिने[1] दत्ता नेयं साम्राज्यहारिणी । मत्वेति प्रददौ कन्यां न कस्मैचन भूभुजे ॥४८८॥

हेतुं स रूपतामात्रं कृत्वा जामातरं[1] नृपः । अथाश्वघासकायस्थं चक्रे दुर्लभवर्धनम् ॥४८९॥

490 मातुः कार्कोटनागेन सुस्नातायाः समीयुषा[1] । राज्यायैव हि संजातो राज्ञा नाज्ञायि तेन सः[2] ॥४९०॥

निश्चिन्वते हि शंमन्या यमेवायोग्यमाग्रहात् । जिगीषयेव तत्रैव निदधाति विधिः शुभम् ॥४९१॥

मात्सर्येण जहन्नहान्विसदृशे[1] धूमध्वजे योग्यतां ज्ञात्वा स्वां निदधत्त्विषं दिनपतिर्हास्यः प्रशान्त्युन्मुखः ।
दैवं वेत्ति न यः शिखी तु[2] परतो[3] नामास्तु तत्संभवाः स्युर्दीपा अपि यद्वशेन जगतस्तिग्मांशुविस्मारकाः ॥४९२॥

धिया भाग्यानुगामिन्या चेष्टमानो नयोचितम् । अभूत्सर्वस्य चक्षुष्यः स तु दुर्लभवर्धनः ॥४९३॥

प्रज्ञया द्योतमानं तं प्रज्ञादित्य इति प्रथाम् । कौबेरभाग्यस्वाम्यं च शनकैः श्वशुरोनयत् ॥४९४॥

495 पित्रोः प्रेयस्तयोद्वृत्ता[1] तारुण्यादिमदेन च । राजपुत्री यथावत्तु गणयामास नैव तम् ॥४९५॥

स्वैरिणीसंगमो भोगा युवानोमे पितुर्गृहम् । पत्युर्मृदुत्वमित्यस्याः किं नाभूच्छीलविप्लकृत् ॥४९६॥

सा नित्यदर्शनाभ्यासाच्छनकैर्विशता मनः । अनङ्गलेखा खङ्खेन संप्रायुज्यत[1] मन्त्रिणा ॥४९७॥

छन्नप्रेमसुखाभ्यासनष्टह्रीभीतिसंभ्रमा । धार्ष्ट्यं दिनादिनं यान्ती ततस्तन्मयतां ययौ ॥४९८॥

स मन्त्री दानमानाभ्यां वशीकृतपरिच्छदः । अन्तःपुरे यथाकामं विजहार तया सह[1] ॥४९९॥

500 उपलेभे च शनकैस्तस्यास्तं शीलविप्लवम् । विरागलिङ्गैरुपलक्षैर्धीमान्[1]दुर्लभवर्धनः ॥५००॥

सखीमध्ये रहः स्मेरा विवर्णा भर्तृदर्शने । अकाण्ड एव प्रोत्थाय पश्यन्ती सस्मितं पथः ॥५०१॥

पत्युः कोपे कृतावज्ञा भ्रूनेत्रचिबुकाञ्चनैः । तदप्रियं भाषमाणे सस्मितं न्यस्तलोचना ॥५०२॥

तत्तुल्यगुणनिर्विण्णा तद्विपक्षस्तुतौ रता । रिरंसां तस्य संलक्ष्य सखीभिर्बद्धसंकथा ॥५०३॥

तच्चुम्बने भुग्नकण्ठी तदाश्लेषसहाङ्कुका । तत्संभोगे त्यक्तहर्षा तत्तल्पे व्याजनिद्रिता[1] ॥५०४॥

505 भर्त्रेङ्गि प्रायशो योषित्प्रेमविक्रीतचेतना । निवेदयन्ती दौःशील्यपिशाचावेशवैकृतम् ॥५०५॥ कुलकम् ॥

निगूढदारदौरात्म्यचिन्ताकृशवपुस्ततः । शुद्धान्तमविशज्जातु निशि दुर्लभवर्धनः ॥५०६॥

सोपश्यत्सुरतक्लान्तिसुलभस्वापनिःसहाम् । दुर्जार[1]भर्तुरङ्गेषु प्रसुप्तामिव वल्लभाम्[2] ॥५०७॥

श्वासैरगलितावेगैः कम्पयद्भिः कुचाङ्कुरौ । निवेदयन्तीं[1] तत्कालमेव निर्वहणं रतेः ॥५०८॥

अन्यस्यापि क्रुधो हेतुं पुनरप्यक्षमावहाम् । तां तथावस्थितां वीक्ष्य स प्रजज्वाल मन्युना ॥५०९॥

510 प्रजिहीर्षुः स रोषेण विमर्शेन निवारितः । प्रहस्येव प्रहस्येव निवृत्तं स्वममन्यत ॥५१०॥

ततस्तथाविधः क्षुभ्यत्प्रकोपावेशसागरः । विचारवेलया तस्य बलाच्छममनीयत ॥५११॥

नमस्तस्मै ततः कोन्यो गण्यते वशिनां धुरि । जीर्यन्ते येन पर्याप्ता ईर्ष्याविषविषूचिकाः ॥५१२॥

सोचिन्तयदहो कष्टाश्चेष्टा[1] रागानुगा इमाः । विचारवन्ध्याः क्षिप्यन्ते क्षिप्रं याभिरधो नराः ॥५१३॥

---

४८८. [1]) $A_3$ gloss न्यूनकुलोद्भवाय दत्ता. ४८९. [1]) कृत्वा जामा supplied by $A_3$ in space left by $A_1$. ४९०. [1]) Thus corr. by $A_3$ from $A_1$ समेयुषा.—[2]) Thus corr. by $A_3$ from $A_1$ सा. ४९२. [1]) Emended; A R G जहन्म°.—[2]) Thus $A_3$; $A_1$ स.—[3]) $A_3$ gloss दूरे इत्यर्थः. ४९५. [1]) $A_3$ gloss उल्लंघितमर्यादा. ४९७. [1]) Emended; A संप्रयु°. ४९९. [1]) $A_3$ समम्. ५००. [1]) The text from मान्दुर्लभवर्धनः to the end of verse 507 below has been supplied by $A_3$, partly in space left by $A_1$, partly in margin. ५०४. [1]) Emended with Edd.; A °निद्रता. ५०७. [1]) $A_3$ दुर्जात°, with *v. l.* as above.—[2]) See note to verse 500 above. ५०८. [1]) Thus corr. by $A_3$ from $A_1$ °यन्ती. ५१३. [1]) Thus corrected by $A_3$ from $A_1$ कष्टाः श्रेष्ठा°.

स्त्रीति नामेन्द्रियार्थोयमिन्द्रियार्था यथा परे । तथैव सर्वसामान्या वशिनामत्र काः क्रुधः ॥५१४॥
निसर्गतरला नारीः को नियन्त्रयितुं क्षमः । नियन्त्रणेन किं वा स्याद्यत्सतां स्मरणोचितम् ॥५१५॥ 515
यः शुनोरिव संघर्ष एकार्थाभिनिविष्टयोः । रागिणोर्यदि मानः स कोवमानस्ततः परः ॥५१६॥
ममकारो मृगाक्षीषु क इवायं सचेतसाम् । स्वदेहेनुपपन्नोपि यः सोन्यत्र कथं मतः ॥५१७॥
उद्वेगोत्पादनाद्वेषा वध्या चेत्प्रतिभाति मे । रागस्तद्विस्मृतः कस्मान्मूलमुद्वेगशाखिनः ॥५१८॥
सप्तपातालनिक्षिप्तमूलो रागमहीरुहः । भूमिभूतमनुत्पाद्य द्वेषमुन्मूल्यते कथम् ॥५१९॥
द्वेषो नामैव दुर्धर्षो जितो येन विवेकिना । क्षणार्धेनैव रागस्य तेन नामापि नाशितम् ॥५२०॥ 520
वीक्ष्यैतद्विज्यया दृष्ट्या रागिणां वाच्यमौषधम् । ईर्ष्या जेया ततो रागः स्वयमाद्याः पलायते ॥५२१॥
इति ध्यात्वालिखद्वर्णान्खङ्गस्यांशुकपल्लवे । वध्योपि न हतो यत्त्वं स्मर्तव्यं तत्त्वयेत्यसौ ॥५२२॥[1]
जनैरलक्ष्यमाणेथ याते दुर्लभवर्धने । त्यक्तनिद्रः स मन्त्री तं दृष्ट्वा वर्णानवाचयत् ॥५२३॥
दाक्षिण्यात्प्राणदस्यास्य खङ्खः स मनसा तदा । विसस्मारानङ्गलेखां दध्यौ तु प्रत्युपक्रियाम् ॥५२४॥
तस्योपकर्तुरुचितं प्रतिकारमिच्छोश्चिन्ताविशन्न तु मनः स्मरबाणपङ्क्तिः ।
दृग्गोचरे परिचयप्रणयं प्रपेदे निर्निद्रता न तु कदाचन राजपुत्री ॥५२५॥ 525
भुक्त्वा सप्तत्रिंशतिमब्दान्स चतुर्भिर्मासैर्वन्ध्यौ मूर्धनि रत्नं नृपतीनाम् ।
तस्मिन्काले लोकमवापोज्ज्वलकृत्यो बालादित्यो बालशशाङ्काङ्कितमौलिः ॥५२६॥
पूर्वं विपन्नतनयेभिजनस्य शेषे गोनन्दसंततिरजायत तत्र शान्ते ।
प्राग्दन्तिभुग्ननलिनाथ हठप्रविष्टतोयौघपाटितबिसा नलिनीव दीना ॥५२७॥
अथ शिथिलितमुख्यामात्यवैमत्यविघ्नः कनकघटविमुक्तैः पावनं तीर्थतोयैः ।
कथमपि स कृतज्ञो राजजामातुरुच्चैर्व्यधित विधिवदिष्टं मूर्धि राज्याभिषेकम् ॥५२८॥
कार्कोटप्रभवः प्रभुः स मुकुटप्रत्युप्तमुक्ताकणद्योतश्रेणिफणाङ्कुराङ्कितबृहद्बाहुर्महीमुद्वहन् ।
ज्ञातिप्रीतिसतोषशेषफणभृत्संफुल्लदृक्पल्लवन्यासावर्जकहाटकाब्जपटलस्रग्धामशोभोभवत् ॥५२९॥
अथ विगलिता गोनन्दोर्वीभुजोभिजनाच्छुचेरतिशुचिनि भूः कार्कोटाहेः कुले व्यधित स्थितिम् ।
चिरपरिचितात्स्वर्गाभोगाध्वनः पतनं श्रिता त्रिभुवनगुरोः शंभोर्मौलाविवामरनिम्नगा ॥५३०॥ 530

**१० ॥ ५३६ ॥ आदितः ५३ ॥ ग्रं १०६९॥**

**इति श्रीकाश्मीरिकमहामात्यश्रीचण्पकप्रभुसूनोः कल्हणस्य कृतौ राजतरङ्गिण्यां तृतीयस्तरङ्गः ॥**[1]

---

५१६. [1]) $A_3$ gloss विरोधः. ५२२. [1]) Thus corr. by $A_3$ from $A_1$ °न्खड्गस्या°. ५२३. [1]) मन्त्री त supplied by $A_3$ in space left by $A_1$. ५२४. [1]) तदा वि supplied by $A_3$ in space left by $A_1$. ५२६. [1]) Thus $A_1$; altered by $A_5$ to समार्धि°.— [2]) $A_1$ gloss ऊनामित्यर्थः. ५२७. [1]) $A_3$ gloss तस्मिन्. ५२८. [1]) $A_1$ gloss खङ्खः. ५२९. [1]) Thus corr by $A_3$ from $A_1$ कर्कोट°. *Colophon.* [1]) $A_1$ adds here लिखितश्चैष मया राजानकरत्नकण्ठेन.

## ॥ चतुर्थस्तरङ्गः ॥

तद्गीतव्यतिरेकमद्रितनयादेहेन मिश्रीभवन्निष्प्रत्यूहमिह व्यपोहतु वपुः स्थाणोरभद्राणि वः ।
वेण्या भोगिवधूशरीरकुटिलश्यामत्विषा वेष्टिता जूटाहेरपि यत्र भाति दयितामूर्त्येव पृक्ता तनुः ॥१॥
स महीं राजकन्यां च प्राप्यानेकतः कुलात् । रत्नानां च सुतानां च राजाभूद्भाजनं शनैः ॥२॥
पतिगोपितदौःशील्या तुल्यसौभाग्यगौरवा । अनङ्गभवनं चक्रे विहारं नृपतिप्रिया ॥३॥
शिशुरेवायुषोल्पत्वं दैवज्ञोक्तं विचिन्तयन् । राज्ञः सुतो मल्हणाख्यो मल्हणस्वामिनं व्यधात् ॥४॥
5 पारेविशोककोटादौ प्रदत्तप्रतिपत्तिना । अदीयत द्विजेन्द्रेभ्यश्चन्द्रग्रामः क्षमाभुजा ॥५॥
श्रीनगर्यां प्रतिष्ठाप्य दुर्लभस्वामिनं हरिम् । षट्त्रिंशता स वर्षाणां क्ष्मावृषास्तमुपाययौ ॥६॥
अनङ्गदेव्यां संभूतस्तस्य दुर्लभकः सुतः । शशास वासवसमस्ततो वसुमतीं कृती ॥७॥
मातामहस्य यो मात्रा दौहित्रस्तनयीकृतः । प्रतापादित्य इत्याख्यां तत्कुलानुगुणां दधे ॥८॥
औडेनैडबिडाल्याग्रभिधा यन्मन्त्रिणा कृताः । अग्रहारा हनुमता पुण्यानुमतसंपदा ॥९॥
10 प्रतापतापितारातिः प्रतापपुरं[1]पत्तनम् । मघवन्नगरस्पर्धि दीर्घबाहुर्व्यधत्त सः ॥१०॥
नानादिगन्तरायाततत्तत्क्रयिकसंकुले । नोणाभिधोवसत्तस्य देशे रौहीतको वणिक् ॥११॥
रौहीतदेशो जातानां निवेशायं[1] द्विजन्मनाम् । महागुणो नोणमठं पुण्यज्येष्ठ चकार सः ॥१२॥
स जातु राजभवने राज्ञा प्रीत्या निमन्त्रितः । अर्चितोभवदेकाहमुपचारैर्नृपोचितैः ॥१३॥
प्रातः सुखासिकां प्रेम्णा पृष्टोथ पृथिवीभुजा । शीर्षव्यथामकथयत्प्रजातां[1] दीपकज्जलैः ॥१४॥
15 ततः क्रमेण नृपतिस्तेन जातु कृतार्थनः । वसंस्तदास्पदेद्राक्षीत्क्षपायां मणिदीपकान् ॥१५॥
विलासित्वेन लक्ष्म्या च तादृश्या तस्य विस्मितः । अथ द्वित्राण्यहान्यासीत्तत्रैव स कृतार्हणः ॥१६॥
एकदा तेन तत्कान्ता व्यलोकि ललिताकृतिः । श्रीनरेन्द्रप्रभा नाम हर्म्ये हिमकरानना ॥१७॥
उरोजपूर्णकुम्भाङ्का सद्दूर्वाहितविभ्रमा । मूर्तिमन्मङ्गलमिव स्मरस्य[2] च गृहस्य च ॥१८॥
हर्म्यस्य निर्जनतया स निःशङ्कविहारिणीम् । तां विलोक्यानवद्याङ्गीमभिलाषेण पस्पृशे ॥१९॥
20 सापि दर्शितमालीभिः किंचित्साचीकृतानना । अपश्यत्काश्यपीकान्तं भ्रान्तविभ्रान्तया दृशा ॥२०॥
प्राग्जन्मप्रेमबन्धाद्वा निदेशाद्वा मनोभुवः । सपक्षपातं सा तस्य दृष्ट्यैव विदधे मनः ॥२१॥
क्षणादलब्धस्पर्शोपि तां सौभाग्यसुधामयीम् । मज्ज्ञानम[1]पि संस्पृश्य स्थितामिव विवेद सः ॥२२॥

---

१०. [1]) $A_3$ gloss तापद्. १२. [1]) $A_3$ gloss स्थितये. १४. [1]) Thus corr. by $A_3$ from $A_1$ प्रजानां. १९. [1]) Thus corr. by $A_3$; $A_1$ seems to have read कृतानन. १८. [1]) $A_3$ gloss सन्तो च तावूक सदूक ताभ्यां आहितो विभ्रमो यया.—[2]) च स्मरस्य supplied by $A_3$ in space left by $A_1$. २१. [1]) Thus corr. by $A_3$ from $A_1$ निर्देशाद्वा. २२. [1]) Thus corr. by later hand from $A_1$ मज्ज्ञानामपि

हर्म्यस्तम्भच्छन्नगात्री क्षणं भूत्वा जगाम सा । व्यावर्त्य वक्त्रं पश्यन्ती पार्थिवं तं मुहुर्मुहुः ॥२३॥
गृहीतहृदयस्तन्व्यास्तावतैव महीपतिः । स चिन्ताजिह्मनयनो राजधानीं शनैर्ययौ ॥२४॥
तत्र तस्य तदाकारध्यानावहितचक्षुषः । सममन्तःपुरप्रीत्या प्रपेदे तानवं तनुः ॥२५॥ 25
अचिन्तयत्स धिक्कष्टं रूढोयमशुभावहः । अस्मिन्मे मानसोद्याने रागनामा विषद्रुमः ॥२६॥
अहो नु सुभगा रागवृत्तिभिस्तं विजित्य या । विवेकादीन्व्यधाद्दूरे सुहृदः परिपन्थकान् ॥२७॥
भाव्यं कौलीनभीतेन येन भूमिभृता सता । तस्य मे दुःसहः कोयं सदाचार[1]विपर्ययः ॥२८॥
यत्र दारापहरणं राजैव कुरुते विशाम् । परः को नाम तत्रास्तु शासिता[1] नीत्यतिक्रमे ॥२९॥
विमृश्यन्निति भूपालो[1] विस्मर्तुमभवत्क्षमः । न पद्धतिं साधुसेव्यां न च तां दीर्घलोचनाम् ॥३०॥ 30
तमथ प्रथितास्वास्थ्यं नेदीयोमरणं वणिक् । स जनाज्ज्ञातवृत्तान्तः सुजनो विजनेब्रवीत् ॥३१॥
इमामवस्थां प्राप्नोसि किं धर्मेण निरुध्यसे । न प्राणसंशये जन्तोरकृत्यं नाम किंचन ॥३२॥
यन्मतानि प्रतीक्ष्यन्ते विबुधैर्धर्मसंशये । तेषामपीदृशे कृत्ये श्रूयते संयमव्ययः ॥३३॥
यशोनुरोधादुचितं[1] नापि देहमुपेक्षितुम् । स्वकीर्तिर्न परासूनां कीर्णा[2] कर्णरसायना ॥३४॥
माभून्मदनुरोधस्ते त्वत्प्रियार्थं हि पार्थिव । प्राणा अपि न मे गण्या इन्द्रियार्थेषु का कथा ॥३५॥ 35
एवमुक्तोपि नादत्से तां चेत्तत्सा[1] सुरास्पदात्[2] । गृह्यतां नर्तकीभूत्वा नृत्तज्ञत्वान्मयार्पिता ॥३६॥
तेनेति प्रेर्यमाणः स बलिना च मनोभुवा । प्राग्लज्जामथ जग्राह कथंचित्तां सुलोचनाम् ॥३७॥
कृत्यैरुदात्तैः सापास्ततादृक्चारित्रलाघवा । नरेन्द्रमहिषी चक्रे श्रीनरेन्द्रेश्वरं हरम् ॥३८॥
क्रमेण च प्रजापुण्यैश्चन्द्रापीडाभिधं सुतम् । प्रासोष्ट पार्थिववधूर्निधानमिव मेदिनी ॥३९॥
तस्याभिजनमालिन्यं[1] स्वच्छैरच्छेदि तद्गुणैः । शाणाश्मकषणैः[2] कार्ष्ण्यमाकरोत्थं मणेरिव ॥४०॥ 40
धूमाभ्राद्[1]मलीमसाच्छुचि पयः सूते घनस्योद्गमो लोहस्यातिशितस्य जातिरचलात्कुण्ठाश्ममालामयात् ।
किंचात्यन्तजडाज्जलाद्द्युतिमतो ज्वालाध्वजस्योद्भवो[2] जन्मावन्य[3]नुकारिणो न महतां सत्यं स्वभावाः क्वचित् ॥४१॥
तारापीडोपि तनयः क्रमात्तस्यामजायत । अविमुक्तापीडनामा मुक्तापीडोपि भूपतेः ॥४२॥
वज्रादित्योदयादित्यललितादित्यसंज्ञकाः । प्रतापादित्यजाः ख्याताश्चन्द्रापीडादयोपि ते ॥४३॥
वर्षान्पञ्चाशतं भुक्त्वा भुवं दुर्लभभूपतिः । पुण्यनिःश्रेणिभिः पुण्यामारुरोह दिवं शनैः ॥४४॥
राजचूडामणिः श्रीमांश्चन्द्रापीडस्ततोभवत् । पीडितेन्दुत्विषा कीर्त्या कलेः पीडां चकार यः ॥४५॥ 45
एकपादाकृतिर्धर्मः समस्यैर्वोज्झितो नृपैः । शुद्धश्लोककृता येन पादैः संयोजितस्त्रिभिः ॥४६॥
यं क्षमाविक्रममुखाः परस्परविरोधिनः । सिषेविरे गुणास्तुल्यं दिव्योद्यानमिवर्तवः ॥४७॥
स्थाने स्थाने यदीया श्रीस्तुल्यमाप्याययन्त्यभूत् । द्रुमानुद्यानकुल्येव निखिलाननुजीविनः ॥४८॥
दोषांस्त्यक्त्वान्यभूपेषु यं शुद्धा श्रीरशिश्रियत् । मार्गाश्लिष्टौघकालुष्यं क्षिप्त्वा सिन्धुरिवार्णवम् ॥४९॥

२८. 1) चार supplied by $A_2$ in space left by $A_1$. २९. 1) सिता supplied by $A_2$ in space left by $A_1$. ३०. 1) पालो supplied by $A_2$ in space left by $A_1$. ३४. 1) Thus corr. by $A_1$ from $A_1$ °दुचित.—2) Thus corr. by $A_1$ from $A_1$ कीर्णक° ३६. 1) $A_1$ तता.—2) $A_2$ gloss देवगृहात् ४०. 1) $A_2$ gloss कुलवंश.—2) Thus corr. by $A_1$ from $A_1$ °कषणैः. ४१. 1) Thus corr. by $A_1$ from धूमोद्गा°.—2) Thus corr. by $A_1$ from $A_1$ °ध्वजस्यो°—3) Thus $A_1$ with $A_2$ gloss भूमि R C Edd. wrongly जन्मावध्य°.

50 कार्यज्ञो यो न तच्चक्रे यत्फलेभूद्विमर्शधीः । परं समाचरं[1]स्तुल्यं स्तूयमानस्त्रपां दधे ॥५०॥
व्यनीयत न योमात्यै[1]र्विनयं तान्स्वाशिक्षयत् । वज्रं न भिद्यते कैश्चिद्भि[2]नत्त्यन्यान्मणींस्तु तत् ॥५१॥
यस्या[1]धर्मभयादासीत्संत्याज्यो धर्मसंशये । निजोपि पक्षः कुलिशत्रासादिव गरुत्मतः[2] ॥५२॥
न्याय्यं दर्शयता वर्त्म तेन राज्ञा प्रवर्तिताः । स्थितयो वीतमन्देहा[1] भास्वतेव दिनक्रियाः ॥५३॥
नियन्त्रितां यद्गणितिस्तद्गुणोदीरणादियम् । अतिप्रसङ्गभङ्गात्तन्नेयत्तावाप्तितः पुनः ॥५४॥
55 तस्य त्रिभुवनस्वामिप्रासादारम्भकर्मणि । चर्मकृत्कोपि न प्रादात्कुटीं क्षेत्रोपयोगिनीम् ॥५५॥
शश्वत्प्रतिश्रुतार्थानां नवकर्माधिकारिणाम् । नैसर्गिकामदमस्तः सूत्रापातं न चक्षमे ॥५६॥
विज्ञापितोथ तैरेत्य तमर्थं पृथिवीपतिः । तानेव सागसो मेने चर्मकारं न तं पुनः ॥५७॥
सोभ्यधात्तान्धिगेतेषामप्रेक्षापूर्वकारिताम् । प्रागेव यैरपृष्ट्वा तं प्रविष्टं नवकर्मणि ॥५८॥
नियम्यतां विनिर्माणं यद्वान्यत्र विधीयताम् । परभूम्यपहारेण सुकृतं कः कलङ्कयेत् ॥५९॥
60 ये द्रष्टारः सदसतां ते धर्मविगुणाः क्रियाः । वयमेव विदध्मश्चेद्यातु न्याय्येन कोध्वना ॥६०॥
इत्युक्तवति भूपाले प्रेषितो मन्त्रिपर्षदा । पार्श्वात्पादुकृतस्तस्य दूतः प्राप्तो व्यजिज्ञपत् ॥६१॥
इच्छति स्वामिनं द्रष्टुं स च ब्रूते न चेन्मम । युक्तः प्रवेश आस्थाने बाह्यालयवसरेस्तु तत् ॥६२॥
अन्येद्युरथ भूपेन स बहिर्दत्तदर्शनः । पुण्यकर्मणि नो विघ्नः किं त्वमेवेत्यपृच्छ्यत ॥६३॥
प्रतिभाति गृहं तच्चेद्रम्यं तत्र ततोधिकम् । तदर्थ्यतां धनं वापि भूयैव चाभ्यधीयत ॥६४॥
65 तूष्णीं स्थितं ततो भूपं चर्मकारो व्यजिज्ञपत् । दन्तांशुसूत्रैस्तत्सत्त्वमानं ज्ञातुमिवोद्यतः ॥६५॥
राजन्विज्ञाप्यते[1] किंचिद्यदस्माभिर्यथाशयम् । न स्थेयमवलिप्तेन तत्र द्रष्ट्रा सता त्वया ॥६६॥
नाहमूनः श्वनो नास्ति[1] काकुत्स्थात्पार्थिवः पृथुः । क्षुभ्यन्तीवाद्य तत्सभ्याः संलापेस्मिन्किमावयोः ॥६७॥
जातस्य जन्तोः संसारे भङ्गुरः कायकञ्चुकः । अहंताममताख्याभ्यां शङ्कुभ्यामेव बध्यते ॥६८॥
कङ्कणाङ्गदहारादिशोभिनां भवतां यथा । निष्किंचनानामस्माकं स्वदेहेहंक्रिया तथा ॥६९॥
70 देवस्य राजधान्येषा यादृशी सौधहासिनी । कुटी घटमुखानद्धतमोरिस्तादृशी मम ॥७०॥
आ जन्मनः साक्षिणीयं मातेव सुखदुःखयोः । मठिका लोठ्यमानाद्य नेक्षितुं क्षम्यते मया ॥७१॥
नृणां यद्वेश्महरणे दुःखमाख्यातुमीश्वरः । तद्विमानच्युतोमर्त्यो राज्यभ्रष्टोथ पार्थिवः ॥७२॥
एवमप्येत्य[1] मद्वेश्म सा चेद्देवेन[2] याच्यते । सदाचारानुरोधेन दातु तदुचितं मम ॥७३॥
इति तेनोत्तरे दत्ते भूभृद्गत्वा तदास्पदम् । कुटीं जग्राह वित्तेन नाभिमानः शुभार्थिनाम् ॥७४॥
75 अवोचच्चर्मकारस्तं तत्र[1] स व्यञ्जिताञ्जलिः । राजन्धर्मानुरोधेन परवत्ता तवोचिता ॥७५॥
श्वविग्रहेण धर्मेण पाण्डुसूनोः पुरा यथा । धार्मिकत्वं तथा तेद्य मयास्पृश्येन[1] वीक्षितम् ॥७६॥
स्वस्ति तुभ्यं चिरं स्थेया धर्म्या वृत्तान्तपद्धतीः । दर्शयन्नीदृशीः शुद्धाः श्रद्धेया धर्मचारिणाम् ॥७७॥

---

५०. [1]) Thus $A_3$, $A_1$ °चरंस्तुल्यं. ५१. [1]) Thus $A_3$; $A_1$ माम्यैर्वि° G R Edd follow $A_3$.—[2]) $A_3$ gloss रत्नैः.
५२. [1]) Thus corr by $A_1$ from $A_1$ यस्य ध° —[2]) Thus $A_3$ $A_1$ °त्मता. ५३. [1]) $A_1$ gloss मन्देहा नाम राक्षसविशेषाश्च.
५४. [1]) $A_3$ gloss अस्माभि . ६१ [1]) $A_1$ gloss चर्मकारस्य. ६६. [1]) $A_3$ विज्ञप्यसे —[2]) Thus corr. by $A_1$ from यथायथम्.
६७. [1]) $A_3$ नास्ति. ७३. [1]) $A_3$ उपेत्य.—[2]) Thus corr by later hand from $A_1$ देव न ; $A_3$ gloss नृपेण ७५. [1]) $A_3$ ततः.
७६. [1]) $A_1$ मयाऽस्पृश्येन , $A_3$ gloss अधमेन

एवं निष्कल्मषाचारः स चक्रे पावनीं भुवम् । राजा त्रिभुवनस्वामिकेशवस्य प्रतिष्ठया ॥७८॥
कृत्यैः प्रकाशदेव्याख्या प्रकाशाकाशकान्तिभिः । प्रकाशिकाविहारस्य तत्पत्नी कारयित्र्यभूत् ॥७९॥
गुर्वामिहिरदत्ताख्यस्तस्योदात्तगुणोभवत् । विश्वंभरस्य[1] गम्भीरस्वामिनाम्नो[2] विधायकः ॥८०॥ 80
सर्वाधिकरणस्थैर्योच्छेत्ता छलितकाभिधः । नगराधिकृतस्तस्य छलितस्वामिनं व्यधात् ॥८१॥
कदाचन सभासीनं पृष्टा धर्माधिकारिभिः । प्रायोपविष्टा राजानं ब्राह्मणी काचिदब्रवीत् ॥८२॥
त्वयि प्रशासति महीमहो गर्हानिबर्हणे । सुखसुप्तस्य मे पत्युर्हृतं[1] केनापि जीवितम् ॥८३॥
एषैव महती लज्जा सदाचारस्य भूपतेः । यदकालभवो मृत्युस्तस्य संस्पृशति प्रजाः ॥८४॥
कलिकालबलात्सचेत्त्वादृशैरपि दृश्यते । पापात्पापतरेमुष्मिन्दोषे[1] कथमुदास्यते ॥८५॥ 85
चिन्तयन्त्यपि नावैमि भर्तुः कंचिद्विरोधिनम् । निर्दोषस्य हि तस्यासन्सर्वतः शीतला दिशः ॥८६॥
अनसूयो निरुत्सेकः[1] प्रियवाग्गुणवत्सलः । पूर्वाभिभाषी निर्लोभो न विद्वेष्यो हि कस्यचित् ॥८७॥
तस्य तुल्यवया बाल्यात्प्रभृत्यध्ययनेधमः । माक्षिकस्वामिवास्तव्यो विप्रः शङ्क्योभिचारवित् ॥८८॥
गुणदारिद्र्यनिर्भिन्नैः[1] क्षुद्रैः कौशलशालिनाम् । प्रसिद्धिस्पर्धया वन्ध्यैर्बाध्यन्तेसूययासवः ॥८९॥
नापुंश्चलेयो दुःशीलो नाद्रोहो नित्यशङ्कितः । नावाचालो मृषाभाषी नाकायस्थः कृतघ्नधीः ॥९०॥ 90
नादातृगृहजो लुब्धो नानीर्ष्यो नित्यदुःखितः । नास्त्रीजितः सर्वहास्यो नावृद्धः स्निग्धभाषितः ॥९१॥
नानन्त्यजः पितृद्वेषी नारागी निरपत्रपः । नाक्षुद्रविद्यः पापीयानिति भूतार्थसंग्रहः ॥९२॥ तिलकम् ॥
इत्युक्तवत्यां ब्राह्मण्यां तच्छङ्कावसतिं द्विजम् । आनीय परिशुध्यस्वेत्यभ्यधाद्वसुधाधिपः ॥९३॥
भूयो ब्राह्मण्यवादीत्तं ख्यातः खार्वोदरविद्यया । निःसंभ्रमः स्तम्भयितुं देव दिव्यक्रियामयम् ॥९४॥
म्लायद्वक्त्र इवावादीत्ततस्तां[1] मेदिनीपतिः । अदृष्टदोषे किं कुर्मो वयमत्राधिकारिणः ॥९५॥ 95
नान्यस्मिन्नपि[1] दण्डस्य प्रसङ्गोनिश्चितागसि । किं पुनर्ब्राह्मणो दण्ड्यो यो दोषेपि[2] वधं विना ॥९६॥
उक्त्वेति विरते तस्मिन्द्विजजायाब्रवीत्पुनः । चतस्रः क्षणदाः क्षीणा राजन्ननशनस्य मे[1] ॥९७॥
नान्वगां परिणेतारं हन्तुः[1] प्रतिचिकीर्षया । तत्राविहितदण्डेस्मिन्स्त्यजाम्यनशनैरसून् ॥९८॥
तथा स्थितायां ब्राह्मण्यां कृतप्रायोपवेशनः । स्वयं त्रिभुवनस्वामिपादानुद्दिश्य सोभवत् ॥९९॥
त्रिरात्रोपोषितं तत्र राजानं रजनीक्षये । स्वप्नेस्वप्नोत्तमोवोचत्सत्योक्तिं सत्ववाहनः[1] ॥१००॥ 100
ईदृङ्न युज्यते राजन्सत्यस्यान्वेषणं कलौ । निशीथे[1] कस्य सामर्थ्यं कर्तुं दिवि विकर्तनम्[2] ॥१०१॥
भवच्छत्त्यनुरोधेन[1] सकृदेतत्प्रवर्त्यते । मत्प्रासादाङ्गनेमुष्मिन्शालिचूर्णं[2] विकीर्यताम् ॥१०२॥
प्रदक्षिणं कुर्वतोस्य त्रिरत्र यदि दृश्यते । ब्रह्महत्यापादमुद्रा[1] पादमुद्रानुयायिनी[2] ॥१०३॥

८०. ¹) $A_3$ gloss नारायणस्य.—²) $A_2$ gloss गम्भीरसङ्गम्. ८३. ¹) $A_1$ *varia lectio* मत्पत्युः. ८५. ¹) $A_3$ gloss अकालमरणं. ८७. ¹) $A_3$ gloss निरहङ्कार. ८९. ¹) $A_3$ gloss रहितैः. ९५. ¹) Thus corr. by later hand from $A_1$ ते. ९६. ¹) $A_3$ gloss शूद्रादौ.—²) $A_3$ gloss सति. ९७ ¹) Thus $A_3$; $A_1$ राजन्नपि न शस्यते. ९८. ¹) $A_3$ gloss हन्तरि. १००. ¹) $A_3$ glosses नारायणः and सत्यस्तु गरुडे ध्रुवे. १०१. ¹) Thus corr. by $A_3$ from $A_1$ निषीथे.—²) $A_3$ gloss सूर्य. १०२. ¹) $A_3$ भवच्छत्त्य°.—²) $A_3$ gloss पिष्टम्. १०३. ¹) A later hand, not met with elsewhere, adds in margin of A the following note: ब्रह्महत्या इति । यः कश्चिद्ब्रह्महत्यां करोति तस्य ब्रह्महत्या मूर्तिमती अदृष्टा वा अनुगामिनी भवति । द्रुहिणशिरश्छेदेन महादेववत् । इत्यभिप्रायवानाह ब्रह्महत्यादि विकीर्णे शालिचूर्णे प्रासादाङ्गने त्रिः परिक्रम्य यदि ब्रह्महत्यायाः कृत्याविशेषस्य पादमुद्रा चरणस्थापनमुद्रायुगलं अस्य वधकस्य पादमुद्रानुगामिनी दृश्यते । ब्रह्महत्याचरणद्वयमुद्रा वधकद्विजपादद्वयमुद्रा च यद्यनुभवविषयीभवति तर्हि एष एव द्विजो वधकः तर्हि शालिचूर्णयुक्तेङ्गने पादचारोवश्यं कारयितव्यः तेनानुमानं । अनेनैव वधः कृतः यतः पादमुद्राद्वयं अधिकं जातं । एवं ब्रह्महत्याचरणमुद्रा युगच्छतीति स्वयं भगवता उपायः सूचितः.—²) $A_3$ gloss द्विजसंबन्धि

तदेव वधको भूत्वा सदृशं दण्डमर्हति । रात्रावेव विधिः कार्यो दिने पापहदर्यमा ॥१०४॥

105 अथ तत्कारयित्वा स दृष्टदोषे द्विजन्मनि । दण्डं दण्डधरश्चक्रे द्विजत्वाद्वधवर्जितम् ॥१०५॥

महीमघोना भर्तृघ्ने तस्मिन्विहितशासने । ततो द्विजन्मजाया सा कृताशीरभ्यधादिदम् ॥१०६॥

इयत्यवनिभृत्सर्गे गूढपापानुशासनम् । कार्तवीर्यस्य वा दृष्टं तव वा पृथिवीपते ॥१०७॥

दण्डधारे त्वयि क्ष्माप क्षितिमेतां प्रशासति । को वैरस्नेहयोः पारमनासाद्यावसीदति ॥१०८॥

इत्थं कृतयुगध्येयैर्धर्म्यवृत्तान्तवस्तुभिः । स्वल्पोपि राज्यकालोस्य पर्याप्तैः पर्यपूर्यत ॥१०९॥

110 स्रष्टुर्विष्टरपाथोजसंसर्गेण निरर्गलः । निविडं जडिमा जाने व्यधत्त धियि संनिधिम् ॥११०॥

विभक्तवर्णशोभस्य तस्यासावन्यथा[1] कथम् । माहेन्द्रस्येव धनुषो विदधे दृष्टनष्टताम्[2] ॥१११॥

कारयित्वाभिचारं तं निग्रहोग्रतपं द्विजम् । तं यशःशेषतामीशं तारापीडोनुजोनयत् ॥११२॥

दुष्कर्मदुर्भगान्भोगान्भोक्तुं पापा गुणोन्नतम् । मृद्नन्ति कण्टकान्प्राप्तुं करभा इव केतकम् ॥११३॥

ततः प्रभृति भूपानां राज्येच्छूनां गुरून्प्रति । दुष्टाः प्रवृत्ता राज्येस्मिन्नभिचारादिकाः क्रियाः ॥११४॥

115 श्रीचन्द्रापीडदेवस्य तत्क्षामित्वमपश्चिमम् । संस्मर्यमाणं कुरुते न कस्योत्पुलकं वपुः ॥११५॥

मुमूर्षुर्यत्स लब्ध्वापि तं कृत्या[1]धायिनं द्विजम् । वराकेन्यप्रयुक्तेस्मिन्को दोष इति नावधीत् ॥११६॥

विस्मृतः स कृतक्ष्माभृत्पङ्क्तिमध्येऽ[1]व वेधसा । दत्त्वा काकपदं[2] नूनं न्यस्तः कलिनृपावली ॥११७॥

अष्टौ वर्षान्साष्टमासाननुगृह्येति मेदिनीम् । प्रविवेश वशी स्वर्गमनिशं[1] च सतां मनः ॥११८॥

भ्रातृद्रोहात्स्वसुहृदां[1] प्रतापेन भयावहः । उवाह[2] तारापीडः स चण्डः क्ष्मामण्डलं[3] ततः ॥११९॥

120 पूर्णपात्रप्रतिभटं[1] द्विषां लुण्टयता यशः । शिशोः प्रतापस्योत्पत्तौ कबन्धा येन नर्तिताः ॥१२०॥

तस्यातिदुष्टचेष्टस्य लक्ष्मीर्दीप्तापि[1] सर्वतः । अभूदुद्वेगजननी श्मशानाग्नेरिव द्युतिः ॥१२१॥

मन्त्रैः प्रभावसांनिध्यं देवानां क्रियते द्विजैः । मत्वेति देवद्वेषी स द्विजानां दण्डमत्यजत्[1] ॥१२२॥

मासं[1] षड्भिर्दिनैरूनं चतस्रश्च समा भुवि । स प्राभवद्गुरुद्रोहप्ररोहत्सुकृतात्ययः[2] ॥१२३॥

अथ गूढाभि[1]चारेण विहितायुःक्षयो द्विजैः । स भ्रातुः सदृशीं शान्तिं प्रपेदे न पुनर्गतिम् ॥१२४॥

योयं परापकरणाय सृजत्युपायं तेनैव तस्य नियमेन भवेद्विनाशः ।

125 धूमं प्रसौति नयनान्ध्यकरं यम[1]ग्निर्भूत्वाम्बुदः स शमयेत्सलिलैस्तमेव ॥१२५॥

राजा श्रीललितादित्यः सार्वभौमस्ततोभवत् । प्रादेशिकेश्वरस्रष्टुर्विधेर्बुद्धेरगोचरः ॥१२६॥

प्रतापांशुच्छटाकूटैः पटवाससधर्मभिः । जम्बुद्वीपद्विपेन्द्रस्य येनातन्यत मण्डनम् ॥१२७॥

नयाञ्जलिषु बद्धेषु राजभिर्विजयोद्यमे । पार्थिवः पृथुविक्रान्तिर्युधि क्रोधं मुमोच यः ॥१२८॥

विनिःसरज्जनतया भयाद्गर्भानिवामुचन् । द्विषां वसतयो यस्य निशम्यास्कन्ददुन्दुभिम् ॥१२९॥

---

१११. [1]) A$_3$ gloss अन्यथा जाड्यं विना.—[2]) A$_3$ gloss आदौ दृष्टः पश्चान्नष्टः. ११६. [1]) A$_3$ gloss उच्चाटना. ११७. [1]) A$_3$ gloss चन्द्रापीडः कृतयुगराजपङ्क्तिमध्ये.—[2]) A$_3$ gloss काकपदं कावछेरो । इति भाषया लिपिर्यथा +. ११८. [1]) A$_3$ स्वर्गं त्रिषदं (*त्रिषाद). ११९. [1]) A$_3$ भ्रातृद्रोहात्सुसुहृदा.—[2]) Thus corr. by A$_3$ from A$_1$ उवाच.—[3]) Thus A$_1$; A$_3$ मण्डलीं. १२०. [1]) A$_3$ gloss सदृशं. १२२. [1]) A$_3$ gloss अक्षिपदित्यर्थः. १२३. [1]) Thus corr. by A$_3$ from A$_1$ मासैः.—[2]) A$_3$ gloss पुण्यनाशः. १२४. [1]) The text from here to नयनान्ध्यकरं यम in following verse has been supplied by A$_3$ in space left by A$_1$. १२५. [1]) See note to preceding verse.

विलोलतिलकान्तैर्यः सनेत्राम्भोभिराननैः । निवापाञ्जलिदानानि द्विषां नारीरकारयत्[1] ॥१३०॥ 130

क्षितिं प्रदक्षिणयतो रवेरिव महीपतेः । जिगीषोः प्रायशस्तस्य यात्रास्वेव वयो ययौ ॥१३१॥

करं पूर्वदिशो गृह्णन्प्रतापानलसंनिधौ । अन्तर्वेद्यां[1] महाराजः स्वकीर्त्युष्णीषभृद्बभौ ॥१३२॥

कन्यानां यत्र कुब्जत्वं[1] व्यधाद्गाधिपुरे मरुत् । तत्रैव शंसनीयः स पुंसां चक्रे भयस्पृशाम् ॥१३३॥

यशोवर्माद्रिवाहिन्याः क्षणात्कुर्वन्विशोषणम् । नृपतिर्ललितादित्यः प्रतापादित्यतां[1] ययौ ॥१३४॥

मतिमान्कन्यकुब्जेन्द्रः प्रत्यभात्कृत्यवेदिनाम् । दीप्तं यल्ललितादित्ये पृष्ठं दत्त्वा न्यषेवत ॥१३५॥ 135

तत्सहायास्ततोऽप्यासन्निकाममभिमानिनः । कुसुमाकरतोऽप्युच्चैः सुरभिश्चन्दनानिलः ॥१३६॥

श्रीयशोवर्मणः संधौ सांधिविग्रहिको न यत् । नयं नियमनालेखे मित्रशर्मास्य चक्षमे ॥१३७॥

सोऽभूत्संधिर्यशोवर्मललितादित्ययोरिति । लिखितेनादिनिर्देशादनर्हत्वं विदन्प्रभोः ॥१३८॥ युगलकम्[2] ॥

सुदीर्घविग्रहाशान्तैः सेनानीभिरसूयिताम्[1] । औचित्यापेक्षतां[2] तस्य क्षितिभृद्बहमन्यत ॥१३९॥

[1]प्रीतः पञ्चमहाशब्दभाजनं तं व्यधत्त सः । यशोवर्मनृपं तं तु समूलमुदपाटयत् ॥१४०॥ 140

अष्टादशानामुपरि प्राक्सिद्धानां तदुद्भवैः । कर्मस्थानैः स्थितिः प्राप्ता ततः प्रभृति पञ्चभिः ॥१४१॥

महाप्रतीहारपीडा[1] स महासंधिविग्रहः । महाश्वशालापि महाभाण्डागारश्च पञ्चमः ॥१४२॥

महासाधनभागश्चेत्येता यैरभिधाः श्रिताः । शाहिमुख्या येऽत्रभवन्नध्यक्षाः पृथिवीभुजः ॥१४३॥

कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः । जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम् ॥१४४॥

किमन्यत्कन्य[1]कुब्जोर्वी यमुनापारतोऽस्य सा[2] । अभूदाकालि[3]कातीरं[2] गृहप्राङ्गणवद्वशे ॥१४५॥ 145

यशोवर्माणमुल्लङ्घ्य हिमाद्रिमिव जाह्नवी । सुखेन प्राविशत्तस्य वाहिनी पूर्वसागरम् ॥१४६॥

पश्यद्भिर्जन्मवसुधां सेर्ष्याधोरणभर्त्सितैः । तन्मातङ्गैः कलिङ्गेभ्यः कथंचित्प्रस्थितं पथि ॥१४७॥

आकृष्टलक्ष्मीपर्यङ्कदन्तिसख्यादिवागताः । आशिश्रयंस्तं निःशेषा दन्तिनो गौडमण्डलात् ॥१४८॥

कटकेभघटाहस्तकृतवीचिकचग्रहः । अदृश्यताग्रगैस्तस्य गृहीतः पूर्ववारिधिः ॥१४९॥

वनराजिश्यामलेन दिशं वैवस्वताङ्किताम्[1] । स प्रतस्थेऽब्धितीरेण तत्कृपाणेन[2] तु द्विषः ॥१५०॥ 150

तस्योर्ध्वजूटाः कर्णाटाः कृतप्रणतयोऽनयन् । सुवर्णकेतकीस्त्यक्त्वा प्रतापमवतंसताम् ॥१५१॥

तस्मिन्प्रसङ्गे रट्टा[1]ख्या कर्णाटी चटुलेक्षणा । अपासीन्नृपतिर्भूत्वा पृथुश्रीर्[2]दक्षिणापथम् ॥१५२॥

विन्ध्याद्रिमार्गाः पर्याप्ता निष्पर्यन्तप्रभावया । दुर्गयेव तया देव्या कृता निहतकण्टकाः ॥१५३॥

ललितादित्यपादाब्जनखदर्पणमण्डले । स्वमूर्तिं वीक्ष्य संक्रान्तां प्रणता सापि पिप्रिये ॥१५४॥

---

१३० [1]) Thus corr. by $A_3$ from $A_1$ °कारयन. १३२ [1]) $A_3$ gloss प्रयागदेशो गङ्गायमुनयोरन्तरालभूमिरन्तर्वेदिः. १३३. [1]) $A_3$ gloss कुब्जत्वं. १३४. [1]) $A_3$ प्रलयादित्यतां. १३८ [1]) $A_3$ gloss स मित्रशर्मा.—[2]) युगलकम् added by $A_3$. १३९. [1]) Thus corr. by later hand from $A_1$ °तम्.—[2]) Thus A G R; Edd. °क्षितां. १४०. [1]) $A_1$ has left before this verse a blank space for four lines, writing in the middle न किंचित्पतितम. १४२. [1]) Thus A G R: perhaps to be emended to °पीडं. Cf. महाप्रतीहारपीटाधिकारं iv. 485. १४५. [1]) Thus corr. by later hand from $A_1$ कान्य°.—[2]) तोऽस्य सा and कातीर supplied by $A_3$ in spaces left by $A_1$.—[3]) Thus $A_2$; $A_1$ अभूदशालि°, altered by later hand to अभूदाशालि°. १४९. [1])-[1]) These words have been written twice by $A_1$, at the end of fol. 62 (here struck out again) and at the head of fol. 63. १५० [1]) [2]) $A_1$ gives the notes यमाधिष्ठितां दक्षिणां दिशं and तस्य राज्ञः कृपाणेन खड्गेन न पुनर्द्विषो रिपवो वैवस्वताङ्कां दिशं प्रतस्थिरे इत्यर्थः. १५२. [1]) ट्टा supplied by $A_3$ in space left by $A_1$.—[2]) $A_1$ पृथुर्भोदक्षि°, corr. by later hand into °श्रीः.

155 तालीतरुतलाचान्तनारिकेरासवोर्मयः । कावेरीतीरपवनैस्तद्योधाः क्लममत्यजन् ॥१५५॥

चन्दनाद्रेस्तदारूढत्रासभ्रश्यदहिच्छलात् । श्रीखण्डद्रुमदोःषण्डान्मण्डलाग्रा इवापतन् ॥१५६॥

उत्तराश्मस्थितं पदं क्षिप्त्वा द्वीपेष्वविघ्नतः । स कुल्याया इवाम्भोधेः क्षिप्रं चक्रे गतागतम् ॥१५७॥

ततोऽब्धिवीचिनिर्घोषैर्गृहीतजयमङ्गलः । प्रतस्थे पश्चिमामाशां जिगीषूणामपश्चिमः ॥१५८॥

आक्रम्यं क्रमुकान्सम्नं कौङ्कणान्स्म तापयन् । तुरगानिव तिग्मांशोः प्रतापस्तस्य पप्रथे ॥१५९॥

160 पश्चिमाब्धेर्मरुद्ध्वस्तवीचेराविर्भवन्त्यभूत् । द्वारका तस्य सैन्यानां प्रवेशौत्सुक्यदायिनी ॥१६०॥

विन्ध्याद्रिस्तद्बलक्षुण्णधातुरेण्वावृताम्बरः । प्रत्यभात्त्यक्तमर्यादः कोपताम्र इवोन्नमन् ॥१६१॥

विशतां दशनश्रेण्यस्तस्यावन्तिषु दन्तिनाम् । महाकालकिरीटेन्दुज्योत्स्नया खण्डिताः परम् ॥१६२॥

सर्वतादिक्कमालोक्य जितप्रायांस्ततो नृपान् । स प्राविशत्सुविस्तीर्णमपथेनोत्तरापथम् ॥१६३॥

राजभिस्तस्य तत्रोग्रैः संग्रामोऽभूत्पदे पदे । कुलाद्रिभिरिवेन्द्रस्य पक्षच्छेदोद्यमस्पृशः ॥१६४॥

165 काम्बोजानां वाजिशाला जायन्ते स्म हयोज्झिताः । ध्वान्तच्छलात्तद्द्विरदैर्निरुद्धा महिषैरिव ॥१६५॥

तुःखाराः शिखरश्रेणीर्यान्तः संत्यज्य वाजिनः । कुण्ठभावं तदुत्कण्ठां निन्युर्दृष्ट्वा हयाननान् ॥१६६॥

त्रीन्वारान्समरे जित्वा जितं मेने स मुम्मुनिम् । सकृज्जयमरेर्वीरा मन्यन्ते हि घुणाक्षरम् ॥१६७॥

चिन्ता न दृष्टा भौट्टानां वक्त्रे प्रकृतिपाण्डुरे । वनौकसामिव क्रोधः स्वभावकपिले मुखे ॥१६८॥

तस्य प्रतापो दरदां न सेहेनारतं मधु । दरीणामोषधिज्योतिः प्रत्यूषार्क इवोदितः ॥१६९॥

170 कस्तूरीमृगसंस्पर्शी धूतकुङ्कुमकेसरः । सैन्यसीमन्तिनीस्तस्य संचस्कारोत्तरानिलः ॥१७०॥

शून्ये प्राग्ज्योतिषपुरे निर्जिहानं ददर्श सः । धूपधूमं वनप्लुष्टात्कालागुरुवनात्परम् ॥१७१॥

मरीचिकावितीर्णार्णोविभ्रमे वालुकाम्बुधौ । तद्गजेन्द्रा महाग्राहसमूहसमतां ययुः ॥१७२॥

तद्योधान्विगलद्धैर्यान्स्त्रीराज्ये स्त्रीजनोकरोत् । तुङ्गौ स्तनौ पुरस्कृत्य न तु कुम्भौ कवाटिनाम् ॥१७३॥

स्त्रीराज्यदेव्यास्तस्याग्रे वीक्ष्य कम्पादिविक्रियाम् । संत्रासमभिलाषं वा निश्चिकाय न कश्चन ॥१७४॥

175 उत्तराः कुरवोविक्षंस्तद्भयाज्जन्मपादपान् । उरगान्तकसंत्रासाद्बिलानीव महोरगाः ॥१७५॥

जयार्जितधनः सोथ प्रविवेश स्वमण्डलम् । भिन्नेभमौक्तिकापूर्णपाणिः सिंह इवाचलम् ॥१७६॥

जालंधरं लोहरं च मण्डलानीतराणि च । प्रसादीकृत्य विदधे राजत्वं सोनुजीविनाम् ॥१७७॥

पराजयव्यञ्जनार्थं नाना लिङ्गानि पार्थिवाः । उग्रेण माज्ञास्तेन वहन्त्यद्यापि निर्मदाः ॥१७८॥

बन्धमुद्राभिधानाय पश्चाद्बाहू तदाज्ञया । तुरुष्का दधते व्यक्तं मूर्धानं चार्धमुण्डितम् ॥१७९॥

180 क्षितिभृद्दाक्षिणात्यानां तिर्यक्त्वज्ञापनाय सः । पुच्छं महीतलस्पर्शि चक्रे कौपीनवाससि ॥१८०॥

न तत्पुरं न स ग्रामो न सा सिन्धुर्न सोर्णवः । न स द्वीपोस्ति यत्रासौ प्रतिष्ठां न विनिर्ममे ॥१८१॥

१५५. [1]) Thus $A_1$, $A_1$ °रसोर्मय १५६ [1]) $A_3$ gloss मलयात्.—[2]) $A_3$ gloss प्रसभमवमर्दनमास्कन्दः.—[3]) $A_3$ gloss श्रीखण्डद्रुमा चन्दनवृक्षा एव दोष्षण्डा भुजसमूहा यस्य स. तथाविधात्.—[4]) $A_3$ gloss खड्गा. १५७. [1]) $A_3$ gloss उत्तरणार्थे अश्मानः उत्तराश्मान ये कुल्यायां मध्ये भवन्ति, to this gloss $A_3$ has added उदघटपल इति भाषया. १५९. [1]) Thus $A_1$, $A_3$ क्रमुकश्यामान्कौ° —[2]) Thus $A_3$, $A_1$ तिग्माशु १६१. [1]) Thus corr by $A_2$ from $A_1$ °रेणुवृता°. १६६. [1]) $A_1$ त×खाराः, $A_3$ G R तुखाराः.—[2]) Thus corr. by later hand from $A_1$ °भावां —[3]) Thus $A_3$; $A_1$ ननाम्. १६७ [1]) Thus A; misread दुस्सनिम् in G R and Edd. $A_4$ gloss ग्रुमेम् खान्. Cf. iii 332, v. 516, viii 2180 (C) १६८. [1]) Thus $A_1$, corr. by later hand into भोट्टाना —[2]) $A_3$ gloss वानराणां.

कंचिद्भ्रष्टसमुत्थितं कंचिच्च समयानुगम् । बाहुल्येन प्रतिष्ठानां स मानी[1] नाम संदधे ॥१८२॥
सुनिश्चितपुरं चक्रे दिग्जये कृतनिश्चयः । सगर्वो दर्पितपुरं कृतवान्कृतकेशवम् ॥१८३॥
फलं गृह्णन्फलपुरं पर्णोत्सं पर्णमाददत् । क्रीडारामविहारं च क्रीडन्राजा विनिर्ममे ॥१८४॥
एकमूर्ध्वं नयन्नन्नमधः कर्षंस्तथापरम् । बद्ध्वा व्यधान्निरालम्बं स्त्रीराज्ये नृहरिं च सः ॥१८५॥ 185
दिगन्तरस्थे भूपाले तस्मिंस्तत्कर्मकृत्किल । पुरं विधाय तन्नाम्ना तत्कोपफलमन्वभूत् ॥१८६॥
ललिताख्यं पुरं तस्मिन्नादित्याय स भूपतिः । सग्रामां कान्यकुब्जोर्वीमभिमानोर्जितो ददौ ॥१८७॥
तेन हुष्कपुरे श्रीमान्मुक्तस्वामी व्यधीयत । बृहद्विहारो भूपेन सस्तूपश्च महात्मना ॥१८८॥
एकां कोटिं गृहीत्वा स दिग्जयाय विनिर्गतः । भूतेशाय ददौ शुद्ध्यै कोटीरेकादशागतः ॥१८९॥
स तत्र ज्येष्ठरुद्रस्य शिलाप्रासादयोजनम् । भूमिग्रामप्रदानं च विदधे वसुधाधिपः ॥१९०॥ 190
चक्रे चक्रधरे तेन वितस्ताम्भःप्रतारणम् । विनिर्मायारघट्टालीस्तांस्तान्ग्रामान्प्रयच्छता ॥१९१॥
सोऽखण्डिताश्मप्राकारं प्रासादान्तर्व्यधत्त च । मार्तण्डस्याद्भुतं दाता द्राक्षास्फीतं च पत्तनम् ॥१९२॥
लोकपुण्ये पुरं कृत्वा नानोपकरणावलीम् । प्रतिपादितवाञ्जिष्णुर्ग्रामैः साकं स विष्णवे ॥१९३॥
ततः परं परीहासशीलो भूलोकवासवः । विहसद्वासवावासं परिहासपुरं व्यधात् ॥१९४॥
विरेजे राजतो देवः श्रीपरीहासकेशवः । क्षिप्तो रत्नाकरस्यापि मुक्ताज्योतिर्भरैरिव ॥१९५॥ 195
नाभीनलिनकिञ्जल्कपुञ्जेनेवानुरञ्जितः । अचकात्काञ्चनमयः श्रीमुक्ताकेशवो हरिः ॥१९६॥
महावराहः शुशुभे काञ्चनं कवचं दधत् । पाताले तिमिरं हन्तुं वहन्निव रवेः प्रभाः ॥१९७॥
गोवर्धनधरो देवो राजतस्तेन कारितः । यो गोकुलपयःपूरैरिव पाण्डुरतां दधे ॥१९८॥
चतुष्पञ्चाशतं हस्तानारोपयित्वा महाशिलाम् । ध्वजाग्रे दितिजारातेस्तार्क्ष्यस्तेन निवेशितः ॥१९९॥
चक्रे बृहच्चतुःशालाबृहच्चैत्यबृहज्जिनैः । राजा राजविहारं स विरजाः सततोर्जितम् ॥२००॥ 200
तोलकानां सहस्राणि चतुर्भिरधिकानि सः । अशीतिं निदधे हेम्नो मुक्ताकेशवविग्रहे ॥२०१॥
तावन्त्येव सहस्राणि पलानां रजतस्य च । संधाय शुद्धधीश्चक्रे श्रीपरीहासकेशवम् ॥२०२॥
रीतिप्रस्थसहस्रैस्तु तेन तावद्भिरेव सः । व्योमव्यापिवपुः श्रीमान्बृहद्बुद्धो व्यधीयत ॥२०३॥
चतुःशालां च चैत्यं च तावता तावता व्यधात् । धनेनैवेति तस्यासन्पञ्च निर्मितयः समाः ॥२०४॥
राजतान्कापि सौवर्णान्कापि देवान्विनिर्ममे । पार्श्वेषु मुख्यदेवानां पार्षदो[1] धनदोपमः ॥२०५॥ 205
कियन्ति तत्र रत्नानि ग्रामान्परिकरांस्तथा । स प्रादादिति कः शक्तः परिच्छेत्तुमियत्तया ॥२०६॥
अवरोधैरमात्यैश्च सेवकैश्च नरेश्वरैः । तत्र प्रतिष्ठाः शतशो विहिता भुवनाद्भुताः ॥२०७॥

---

१८२. [1]) Thus corr. by $A_2$ from $A_1$ मुनी. १८३. [1]) $A_2$ सगर्वो.—[2]) $A_2$ कृतधीः. १८४. [1]) $A_2$ क्रीडाराजवि°. १८५. [1]) Thus corr. by $A_2$ from $A_1$ नृहरा. १८६. [1]) $A_2$ पुरनिर्माणाधिकारी.—[2]) त्को and न्व supplied by $A_2$. १८७. [1]) $A_2$ gloss ललितपुर. १९०. [1]) Thus corr. by later hand from $A_1$ भूमिग्रामे. १९१. [1]) Thus $A_2$; $A_1$ °धरस्तेन. १९३. [1]) Thus corr. by $A_2$ from $A_1$ पुरे.—[2]) Thus $A_2$; $A_1$ जिष्णुग्रामैः. १९४. [1]) Thus corr. by later hand from $A_1$ °पारं.—[2]) Over हासपुरं $A_2$ has written सपुर (for परिसपुर). १९६. [1]) $A_2$ अचकचत, with gloss काच दीप्तिबन्धनयोः. १९७. [1]) Thus corr. by $A_2$ from $A_1$ हन्तुं.—[2]) Thus G *sec. manu*; A रविप्रभा. १९९. [1]) Thus corr. by later hand from $A_1$ हस्तान्रो°. २०१. [1]) The words from चतुर्भिर° to सहस्राणि in the following verse have been omitted by $A_1$ and supplied by $A_2$ in margin. २०५. [1]) Thus $A_1$; $A_2$ पार्थिवो. २०६. [1]) Thus $A_2$; $A_1$ °करं तथा.

राज्ञी कमलवत्य[1]स्य कमलाहट्टकारिणी । राजतं विपुलाकारं कमलाकेशवं व्यधात् ॥२०८॥

अमात्यो मित्रशर्मापि चक्रे मित्रेश्वरं हरम् । श्रीकय्यस्वामिनं चक्रे लाटः कय्याभिधो नृपः ॥२०९॥

210 श्रीमान्कय्यविहारोपि तेनैव विदधेऽद्भुतः । भिक्षुः सर्वज्ञमित्रोभूत्क्रमाद्यत्र जिनोपमः ॥२१०॥

तुः[1]खारश्चङ्कुणश्चक्रे स चङ्कुणविहारकृत । भूपचित्तोन्नतं स्तूपं जिनान्हेममयांस्तथा ॥२११॥

ईशानदेव्या तत्पत्न्या खाताम्बु प्रतिपादितम् । सुधारसमिव[1] स्वच्छमारोग्याधायि रोगिणाम् ॥२१२॥

ललितादित्य[1]भूभर्तुर्वल्लभा चक्रमर्दिका । सहस्राण्योकसां सप्त तत्र चक्रपुरं व्यधात् ॥२१३॥

आचार्यो भप्पटो[1] नाम विदधे भप्पटेश्वरम् । अन्येपि रक्कुटेशा[2]द्या बहवो बहुभिः कृताः ॥२१४॥

215 अधिष्ठानान्तरेप्यत्र चङ्कुणेनाप्यमन्त्रिणा । सचैत्यः सुकृतोदारो विहारो निरमीयत ॥ २१५॥

भिषगीशानचन्द्राख्यः स्यालश्चङ्कुणमन्त्रिणः । विहारमकरोल्लब्ध्वा तक्षकानुमहाद्धियम् ॥ २१६॥

एवं हेममयीमुर्वी[1] स कुर्वन्नुर्वरापतिः । गुणैरौदार्यशौर्याद्यैर्मत्वानमलङ्घयत् ॥२१७॥

हेलयापि विनिर्यान्ती वक्त्राद्वसुमतीपतेः । न कदाचन तस्याज्ञा देवैरप्युदलङ्घ्यत ॥२१८॥

तथाहि पूर्वपाथोधेस्तटे सकटको वसन् । आनीयन्तां कपित्थानीत्यादिदेश स जातु चित् ॥२१९॥

220 किंकर्तव्यतयान्धेषु[1] पुरोगेषु स्थितेष्वथ । उपानय[2]त्कपित्थानि दिव्यः कोपि पुमान्पुरः ॥२२०॥

अमातु[1]पायनं गृह्णन्कृतसंज्ञो भ्रुवा प्रभोः । कस्य त्वमिति पप्रच्छ प्रतीहारः प्रसृत्य तम् ॥२२१॥

सोभ्यधात्तं कपित्थानि दत्त्वा राज्ञः प्रियाण्यहम् । प्रहितोद्य महेन्द्रेण नन्दनोद्यानपालकः ॥२२२॥

रहो महेन्द्रसंदिष्टं वक्तव्यं किंचिदस्ति मे । इति श्रुत्वा प्रतीहारः सभां चक्रे स निर्जनाम् ॥२२३॥

ततो दिव्यः पुमानूचे शक्रस्त्वां वक्ति भूपते । क्षन्तव्यं पथ्यमप्येतत्सौजन्यान्निष्ठुरं वचः ॥२२४॥

225 तुर्ये युगेपि भूपाल दिक्पाला अपि ते वयम् । बिभृमो यत्प्रणम्याज्ञां श्रूयतां तत्र कारणम् ॥२२५॥

पुरा ग्राम[1]गृहस्थस्य कस्यचित्पृथुसंपदः । जन्मान्तरे कर्मकरो हालिकोभूद्भवान्किल ॥२२६॥

एकदा तस्य ते ग्रीष्मे वाहयित्वा महावृषान् । श्रान्तस्य निर्जलेरण्ये क्षीणप्रायमभूदहः ॥२२७॥

ततः स्वामिगृहात्क्षुत्तृट्खिन्नस्य भवतोन्तिकम् । वारिकुम्भीमपूपं च गृहीत्वा कश्चिदाययौ ॥२२८॥

निर्धौतपाणिपादस्त्वं भोक्तुं संप्रस्तुतस्ततः । विप्रं कण्ठगतप्राणमपश्यः पुरतोतिथिम् ॥२२९॥

230 स त्वामवोचन्मा भुङ्क्ष्व[1] दुर्भिक्षोपहतस्य मे । कण्ठे यियासवः प्राणा वर्तन्ते भोजनं विना ॥२३०॥

वारितः पार्श्वगेनापि तस्मै त्वं प्रीतिपूर्वकम् । पूपार्धं वारिकुम्भीं च प्रादाः प्रियमुदीरयन् ॥२३१॥

पात्रे प्रसन्नचित्तस्य काले दानेन तेन ते । अखण्डितानामाज्ञानां शतमासीत्त्रिविष्टपे ॥२३२॥

तेन वारिप्रदानेन वाञ्छामात्रेपि दर्शिते । प्रादुर्भवन्ति सुस्वादा नद्यो मरुपथेष्वपि ॥२३३॥

सत्क्षेत्रप्रतिपादितः[1] प्रियवचोबद्धालवालावलिर्निर्दोषेण मनःप्रसादपयसा निष्पन्नसेकक्रियः ।

[2]दातुस्तत्तदभीप्सितं किल फलन्कालेतिबालोप्यसौ राजन्दानमहीरुहो विजयते कल्पद्रुमादीनपि ॥२३४॥

---

२०८. [1]) Thus $A_1$; $A_3$ कमलदेव्य°. २११. [1]) $A_1$ तु×खार°. २१२. [1]) Thus corr. by $A_3$ from $A_1$ सुधासरमिव. २१३. [1]) Thus $A_3$; $A_1$ वल्लभादित्य°. G R copy both readings, Edd. follow $A_3$. २१४. [1]) Emended with Edd.; A भप्पटो.—[2]) Thus $A_1$; $A_3$ कर्कोटेशा°. २१७. [1]) Thus corr. by $A_3$ from $A_1$ उर्वरी°. २२०. [1]) $A_1$; $A_3$ °यार्तेषु.—[2]) Thus corr. by $A_3$ from $A_1$ °नय आपि°. २२१. [1]) $A_1$ gloss राज्ञोमे इत्यर्थः. २२६. [1]) Thus corr. by later hand from $A_1$ ग्रामे. २३०. [1]) Thus $A_3$; $A_1$ भुङ्क्ता (for भुङ्क्ष्वा?). २३४. [1]) $A_3$ °प्रतिरोपितः.—[2]) A. वक्ते मत्तदभीप्सितं किल फलं काले इत्यन्यादर्शे.

अल्पावशेषास्तास्त्वद्य सन्त्याशास्तव भूपते । बद्धोलक्ष्यं क्षपयतो यत्र तत्राविचारतः ॥२३५॥ 235

अपि चेतर्भूपालसुलभं महतः सतः । कस्माद्विचारशून्यत्वं तवापि हृदि रोहति ॥२३६॥

दिनानि कतिचिद्यानि कश्मीरेषु घनागमे । जायन्ते तानि पूर्वाब्धौ फलानि शिशिरे कुतः ॥२३७॥

विगाहसे दिशं यां यां तत्र तत्रैव तत्पतेः । स्वदाशाग्रहणे यत्नः पूर्वदानप्रभावतः ॥२३८॥

आशां श्रितस्य माहेन्द्रीमाशा स्वल्पापि तेऽधुना । गृहीता कथमप्येषा शक्रेणाभग्नशक्तिना ॥२३९॥

विना प्रयोजनं मुख्यं तस्मादाशास्त्वया क्वचित् । नैवमेव पुनर्देया विरलाः सन्ति ता यतः ॥२४०॥ 240

इत्युक्त्वान्तर्हिते तस्मिन्भूपालो विपुलाशयः । चिन्तयन्दानमाहात्म्यं परं विस्मयमाययौ ॥२४१॥

ततः प्रभृति तादृक्षयोग्यार्थप्राप्तिलालसः । परिहासपुरे चक्रे स्थिरां गुर्वीं स पर्विणीम् ॥२४२॥

सहस्रभक्तमित्येवं प्रख्यातायां सदक्षिणम् । लक्षमेकोत्तरं भक्तपात्राणां यत्र दीयते ॥२४३॥

अभिप्रायेण तेनैव पत्तनान्यूषरेषु सः । चक्रे यथेषु तृष्णार्तः कश्चिज्जातु पिबेदपः ॥२४४॥

संजग्राह स देशेभ्यस्तांस्तानन्तरविज्जनान् । विकचान्सुमनःस्तोमान्पादपेभ्य इवानिलः ॥२४५॥ 245

तेन कङ्कणवर्षस्य रससिद्धस्य सोदरः । चङ्कुणो नाम भुःखार[1]देशान्नीतो[2] गुणोन्नतः ॥२४६॥

स रसेन समातन्वन्कोशे बहुसुवर्णताम् । पद्माकर इवाब्जस्य भूभृतोऽभूच्छुभावहः ॥२४७॥

रुद्धः पञ्चनदे जातु दुस्तरैः सिन्धुसंगमैः । तटे स्तम्भित[1]सैन्योऽभूद्राजा चिन्तापरः क्षणम् ॥२४८॥

ततोऽम्बुतरणोपायं तस्मिन्पृच्छति मन्त्रिणः । अगाधेऽम्भसि रोधःस्थश्चङ्कुणो मणिमक्षिपत् ॥२४९॥

तत्प्रभावाद्द्विधाभूतं सरिन्नीरं ससैनिकः । उत्तीर्णो नृपतिस्तूर्णं परं पारं समासदत् ॥२५०॥ 250

मणिमन्येन मणिना चङ्कुणोऽप्याचकर्ष तम् । सलिलं प्रागवस्थं च क्षणेन सरितामभूत् ॥२५१॥

परिभाव्याद्भुतं तत्स प्रशंसामुखराननः । प्रणयाच्चङ्कुणं राजा मणियुग्ममयाचत ॥२५२॥

स तमाह स्म विहसन्कर्मेमौ कुरुतो मणी । योग्यौ मत्पाणिगावेव किं स्यात्स्वीकरणेन वः ॥२५३॥

सामान्येष्वेव लभते सोत्कर्षं वस्तु संप्रथाम् । महत्सु तस्य का शोभा विविधोत्कृष्टवस्तुषु[1] ॥२५४॥

प्रस्यन्दनं शशिमणेर्[1]गणयन्ति तावद्यावत्स्थितो जलनिधेः पुलिनैकदेशे ।
स[2] स्वीक्रियेत यदि तेन[3] ततस्तदास्य स्यन्दः[4] स्फुरन्नपि न तत्सलिले विभाव्यः[5] ॥२५५॥ 255

इत्युक्त्वा विरते तस्मिन्राजा सस्मितमब्रवीत् । संभावयसि किं रत्नमाभ्यामभ्यधिकं मम ॥२५६॥

अतो[1]ऽधिकतरं यद्वा किंचित्स्वं[2] मम पश्यसि । तदादाय प्रयच्छेदं निष्क्रयेण मणिद्वयम् ॥२५७॥

ततो महान्प्रसादोऽयमित्युक्त्वा चङ्कुणोऽब्रवीत् । स्वायत्ते स्वामिनो रत्ने मह्यमिष्टं तु दीयताम् ॥२५८॥

गजस्कन्धाधिरोप्यैतन्मागधेभ्यो यदाहृतम् । दत्त्वा सुगत[1]बिम्बं तज्जनोऽयमनुगृह्यताम् ॥२५९॥

सलिलोत्तरणोपायो मणी देवेन गृह्यताम्[1] । संसारोत्तरणोपायः सुगतो मह्यमर्प्यताम् ॥२६०॥ 260

---

२३६. [1]) Thus $A_3$; $A_1$ चेतसि भूपाल सु°. २३८. [1]) $A_2$ gloss तद्दिक्पालस्य. २४०. [1]) Thus $A_3$; $A_1$ °दाशा त्वया. २४६. [1]) A भु×खार°.—[2]) Thus corr. by $A_3$ from $A_1$ °देशानीतो. २४८. [1]) Thus $A_1$; $A_3$ स्तिमित°. २५२. [1]) $A_3$ प्रतिभाव्या°. २५४. [1]) $A_3$ °त्कृष्टभूमिषु. २५५. [1]) $A_2$ gloss चन्द्रकान्तस्य.—[2]) $A_2$ gloss शशिमणिः.—[3]) $A_2$ gloss जलनिधिना.—[4]) Thus corr. by $A_3$ from $A_1$ स्यन्दं.—[5]) Thus corr. by $A_3$ from $A_1$ वभाव्यः. २५७. [1]) Thus $A_3$; $A_1$ ततो.—[2]) Thus $A_1$; $A_3$ in margin कोशे स्वं. २५९. [1]) $A_2$ gloss बुद्ध. २६०. [1]) $A_2$ gloss मणी एव संसारतरणोपाय इत्यारोपः । अत एव गृह्यतामित्येकवचनान्तं क्रियापदम् मणी एव संसारतरणोपायस्त्वया गृह्यतामित्यन्वयः.

इति तेनार्थितो युक्त्या जिनबिम्बं ददौ नृपः । वाग्मिनां कस्य सामर्थ्यं परिपन्थयितुं वचः ॥२६१॥

स्वविहारेथ भगवान्स तेन विनिवेशितः । कपिशाभिः सकाषाय इव यो भाति कान्तिभिः ॥२६२॥

दृश्यतेद्यापि कटकैरायसैः परिवेष्टितः । गजस्कन्धनिबद्धस्य सूचको[2] यस्य विष्टरः ॥२६३॥

अभिप्रायानुसारेण प्रकटीकुरुते प्रियम् । अहो महाप्रभावाणां भूपतीनां वसुंधरा ॥२६४॥

265 अशिक्षितं कदाचित्स स्वयं दमयितुं हयम् । निनायारण्यमेकाकी हयविद्याविशारदः ॥२६५॥

दूरान्निर्मानुषे तत्र ललनां ललिताकृतिम् । एकां ददर्श गायन्तीं नृत्यन्तीमपरामपि ॥२६६॥

क्षणाच्च ते समापत्य गीतनृत्ते मृगीदृशौ । प्रणम्य किंचिल्लज्जन्त्यावपश्यद्भ्रमयन्हयम् ॥२६७॥

तुरगं तं समारुह्य तत्रागच्छद्दिने दिने । दृष्ट्वा तथैव ते कान्ते गत्वापृच्छत्सविस्मयः ॥२६८॥

तमूचतुस्ते नर्तक्याचावां देवगृहाश्रिते । यः शूरवर्धमानोयं ग्रामस्तत्रावयोर्गृहम् ॥२६९॥

270 इहत्यजीवनभुजां मातृणामुपदेशतः । अस्मत्कुलेन[1] नियतं नृत्तमत्र[2] विधीयते ॥२७०॥

रूढिः परंपरायाता सेयमस्मद्गृहे स्थिता । आवामन्योपि वा नात्र निमित्तं ज्ञातुमीश्वरः ॥२७१॥

एवं वचस्तयोः श्रुत्वा नृपोन्येद्युः सविस्मयः । तदुक्तयां[1] मेदिनीं कृत्स्नां[2] कारुभिर्निरदारयत् ॥२७२॥

दूरं निर्हतमृद्भिस्तैरथाद्राक्षीन्निवेदितम् । नृपतिः पिहितद्वारं जीर्णं देवगृहद्वयम् ॥२७३॥

उद्घाटितारैरिर्वर्णैः पीठोत्कीर्णैर्निवेदितौ । अपश्यत्केशवौ तत्र रामलक्ष्मणनिर्मितौ ॥२७४॥

275 परिहासहरेः पार्श्वे पृथक्कृत्वा शिलागृहम् । स रामस्वामिनः श्रीमान्प्रतिष्ठाकर्म निर्ममे ॥२७५॥

देवोपि लक्ष्मणस्वामी तथैवाभ्यर्थ्य पार्थिवम् । चक्रमर्दिकया चक्रेश्वरपार्श्वे निवेशितः ॥२७६॥

दिग्जये पुरुषः कश्चिद्भूतप्रत्ययमनिग्रहः । अग्रे न्यक्षिपदात्मानं गजारूढस्य भूभुजः ॥२७७॥

तं कृत्तपाणिघ्राणादिव्रणैः शोणितवर्षिणम् । त्राणार्थिनं कारुणिकः स्वोदन्तं पृष्टवान्नृपः ॥२७८॥

स तस्मै सिकतासिन्धुसविधस्थस्य भूपतेः । प्रख्यातमूचे सचिवमात्मानं हितकारिणम् ॥२७९॥

280 प्रणतिर्ललितादित्यनृपतेः क्रियतामिति । [1]हितं कथयतः स्वस्य निग्रहं च ततो नृपात् ॥२८०॥ युग्मम् ॥

प्रतिजज्ञे च भूपेन ततस्तत्स्वामिनिग्रहः । रूढव्रणोगदंकारैः स चाकार्यत सत्कृतैः ॥२८१॥

ततो विहितयात्रं तं स मन्त्री कृतसत्क्रियः । कदाचिदेवमवदद्विजने[1] जगतीभुजम् ॥२८२॥

एवंविधस्य कायस्य राजन्यत्परिरक्षणम् । तत्र वैरविशुद्ध्याशा विडम्बयति मामियम् ॥२८३॥

बाष्पैर्जलाञ्जलिं दत्त्वा दुःखाय च सुखाय च । कृतकृत्यो ध्रुवं ज[1]ह्यामवमानहतानसून् ॥२८४॥

285 अपकृत्याधिकं शत्रोरपकारं जयेन्मितम् । गम्भीरं प्रतिनद्येव निनादं नदतो गिरिः ॥२८५॥

इतो मासैस्त्रिभिर्गम्या भूः प्राप्या त्वरितं कथम् । यदा वा प्राप्यते वैरी तदा तत्रैव किं वसेत् ॥२८६॥

मासार्धलङ्घ्यं पन्थानं[1] तस्मादुपदिशामि ते । गृहीत्वा स्वं जलं गम्यथमूनां किं तु निर्जलः ॥२८७॥

तद्भूमिजा बन्धवो मे न वक्ष्यन्ति त्वदागमम् । सामात्यान्तःपुरो राजा छद्मनानेन गृह्यते ॥२८८॥

---

२६१. [1]) Thus corr. by $A_3$ from $A_1$ यस्य. २६३. [1]) Thus emended with Edd.; $A_1$ °स्कन्न°.—[2]) Thus $A_1$; $A_3$ सूचकैर्यस्य. २७०. [1])[2]) $A_4$ glosses अस्मत्कुलयोन and देवगृहे. २७२. [1]) Thus corr. by $A_1$ from तदुक्तौ; $A_3$ °क्तां.—[2]) Thus $A_3$; $A_1$ कृच्छ्रां. २७३. [1]) Thus $A_1$; altered by later hand to दूरनि°. २७४. [1]) $A_1$ gloss अक्षरैः. २७९. [1]) Thus corr. by $A_3$ from $A_1$ माख्यातं २८० [1]) $A_4$ gloss ललितादित्याय प्रणामं कुर्विति मदुक्तं हितमहितं श्रुत्वा तेन राज्ञा मम कर्णनासाद्यवयवाः कृत्ताः, २८२. [1]) Thus $A_3$; $A_1$ °द्विजेन. २८४. [1]) Thus $A_3$, $A_1$ जह्याद°. २८७. [1]) $A_2$ gloss पन्थाः.

इत्युक्त्वा सोकरोत्तस्य प्रवेशं वालुकार्णवे । पक्षे क्षीणे च कटको निस्तोयः समपद्यत ॥२८९॥
तत्राप्यहानि द्वित्राणि वहन्नेवाभवन्नृपः । तृष्णार्तं वीक्ष्य सैन्यं च मन्त्रिणं तमभाषत ॥२९०॥ 290
उक्तकालाधिका यावद्वासरा गमिताः पथि । मुमूर्षु तृष्णया सैन्यं तदध्वा शिष्यते कियान् ॥२९१॥
ततो विहस्य सोवादीज्जिगीषो शेषमध्वनः । किं पृच्छस्यरिराष्ट्रस्य यमराष्ट्रस्य वा भवान् ॥२९२॥
त्वं हि स्वामिहितायैव समुपेक्ष्य स्वजीवितम् । मृत्युवक्त्रं सकटको मया युक्त्या प्रवेशितः ॥२९३॥
नेदं मरुमहीमात्रं भीमोयं वालुकार्णवः । नाम्भोत्र लभ्यते क्वापि कस्त्राता तेन भूपते ॥२९४॥
श्रुत्वेति पृतना कृत्स्ना समभूद्धीतसौष्ठवा । करका[1]भ्रंशितफला स्तम्भशेषेव शालिभूः ॥२९५॥ 295
संत्यक्तजीविताशानां भीरूणां क्रन्दितध्वनिम् । भुजमुद्यम्य शमयंस्ततो नृपतिरब्रवीत् ॥२९६॥
अमात्य तव कृत्येन प्रीताः स्वामिहितैषिणः । मरावप्यत्र शीतार्ता इव रोमाञ्चिता वयम् ॥२९७॥
अभेद्यसारे मयि तु व्यक्तमेवंविधोपि ते । प्रयासः[2] कुण्ठतां यातो लोहं वज्रमणाविव ॥२९८॥
मणिभ्रमाद्वह्नि[1]कणं गृह्णन्दग्धा इवाङ्गुलीः । त्वं मिथ्याव्ययवांल्लूनानथ शोचिष्यसि ध्रुवम् ॥२९९॥
निदेशेनै[1]व मे पश्य पयः सूतेद्य मेदिनी । रसितेनाम्बुवाहस्य रत्नं वैदूर्यभूरिव ॥३००॥ 300
इत्युक्त्वा सोम्बु निष्क्रष्टुं कुन्तेनोर्वीं व्यदारयत् । उज्जिहीर्षुर्बिलस्ताम्भः शूलेनेव त्रिलोचनः ॥३०१॥
अथोज्जगाम पाताललक्ष्मीलीलास्मितच्छविः । रसातलात्सरित्साकं सैन्यानां जीविताशया ॥३०२॥
तस्य सेनाचराणां सा श्रमं चिच्छेद वाहिनी । वृथाव्ययीकृताङ्गस्य मन्त्रिणस्तस्य चेप्सितम् ॥३०३॥
लूनाङ्गोमङ्गलाशंसी स मन्त्री विफलश्रमः । स्वस्य भर्तुर्विशेषादौ नगरीमन्तक[1]स्ततः ॥३०४॥
राज्ञापि कुटिलाचारो निगृह्य स महीपतिः । निजस्य मन्त्रिणस्तस्य तुल्यावस्थो व्यधीयत ॥३०५॥ 305
यथोपयोगं तेनैव स्थाने स्थाने प्रवर्तिताः । अद्यापि कुन्तवाहिन्यः प्रवहन्त्युत्तरापथे ॥३०६॥
सहस्रशः संभवन्तोप्यपरे भुवनाद्भुताः । अतिप्रसङ्गभङ्गेन तद्वृत्तान्ता न दर्शिताः ॥३०७॥
यन्निःशब्दजला घनाश्मपरुषे देशेतिघोरारवा यच्चाच्छाः समये पयोदमलिने कालुष्यसंदूषिताः ।
दृश्यन्ते कुलनिम्नगा अपि परं दिग्देश[1]कालाविमौ तत्सत्यं महतामपि स्वसदृशाचारप्रवृत्तिप्रदौ ॥३०८॥
कलेर्वायं प्रभावः स्यादमरनाथासनस्य वा । यत्सोपि भीमकलुषाः प्रवृत्तीः समदर्शयत् ॥३०९॥ युग्मम् ॥
अवरोधसखो राजा परिहासपुरे स्थितः । स जातु मदिराक्षीवः सचिवानेवमन्वशात् ॥३१०॥ 310
कृतं प्रवरसेनेन यदेतत्प्रवरं पुरम् । तन्निर्दहथ मन्यध्वे मत्पुरस्येव[1] चेच्छ्रियम् ॥३११॥
घोरामलङ्घिताज्ञस्य श्रुत्वेत्याज्ञां महीपतेः । गत्वाश्व[1]घासकूटानि तेदहन्वातुलानके ॥३१२॥
हर्म्याग्राद्वीक्षमाणस्तद्वह्निज्वालोज्ज्वलाननः । उल्कामुख इवाभूत्स हर्षाट्टहसितोत्कटः ॥३१३॥
द्वेषादिवैकृतवतः प्रतिभासतैन्यो मिथ्यैव चित्रमधिको विशदात्मनोपि ।
चन्द्रादि पश्यति पुरो द्विगुणं प्रकृत्या तेजोमयं तिमिरदोषहतं हि चक्षुः ॥३१४॥

---

२९५. [1]) $A_3$ gloss इक्षुवर्षणं. २९८. [1]) Thus corr. by $A_2$; $A_1$ °मेवीविधोपि तु.—[2]) Thus $A_3$, $A_1$ प्रयोग. २९९. [1]) Thus corr by $A_3$ from $A_1$ वज्जकणं. ३००. [1]) Thus Edd. and G *sec. manu*; A R and G *prima manu* दिनेशेनैव. ३०४. [1]) $A_3$ gloss ललितादित्य एव यमः. ३०८. [1]) Thus corr. by $A_2$ from $A_1$ चिग्देश°. $A_2$ gloss दिशि देशः दिग्देशः स च कालश्च तौ. ३११. [1]) Thus $A_1$, $A_3$ मत्पुरस्यैव. ३१२. [1]) Thus corr. by $A_3$ from $A_1$ गत्वाभ्रुपास°

315 नैवं चेदेकमपि तत्पुरं प्रवरभूपतेः । असंख्यपुरनिर्माता स विवेदाधिकं कुतः ॥३१५॥ युग्मम् ॥

क्षीणक्षैब्योथ निर्ध्याय नगरप्लोषकिल्बिषम् । उष्णनिःश्वासधुहृदा पस्पर्शेनुशयाग्निना ॥३१६॥

तत्कुर्वतेन्तःसुषिरां गूढं येनाननुक्षयम् । दह्यन्ते जीर्णतरवः कोटरस्थानला इव ॥३१७॥

प्रातस्तमथ शोचन्तं सदुःखं वीक्ष्य मन्त्रिणः । चिन्तानिवर्तनायोचुः पुरप्लोषं मृषैव तत् ॥३१८॥

श्रुतेप्रनष्टे नगरे निःशोकोभून्महीपतिः । स्वप्नान्तर्हारिते पुत्रे प्रबुद्धोम इव स्थिते ॥३१९॥

320 कार्यं न जातु तद्वाक्यं यत्क्षीबेन मयोच्यते । तान्युक्तकारिणोमात्यान्प्रशंसन्निति सोब्रवीत् ॥३२०॥

प्रियमनुचितं क्ष्मापण्यस्त्रीक्षणप्रभुरीश्वरो रमयति यतो धिक्तान्भृत्यान्स्ववृत्तिसुखार्थिनः ।

नृपमपथगं पान्ति प्राणानुपेक्ष्य निजानपि प्रसभमिह ये तैः पूतेयं महात्मभिरुर्वरी ॥३२१॥

अतीन्द्रमपि माहात्म्यं राज्ञस्तस्याधितिष्ठतः । अयमन्योपि दोषोभूदितरक्षितिपोचितः ॥३२२॥

दत्त्वापि यस्त मध्यस्थं श्रीपरीहासकेशवम् । जघान तीक्ष्णपुरुषैस्त्रिग्राम्यां गौडपार्थिवम् ॥३२३॥

गौडोपजीविनामासीत्सत्त्वमत्यद्भुतं तदा । जहुर्ये जीवितं धीराः परोक्षस्य प्रभोः कृते ॥३२४॥

325 शारदादर्शनमिषात्कश्मीरान्संप्रविश्य ते । मध्यस्थदेवावसथं संहताः समवेष्टयन् ॥३२५॥

दिगन्तरस्थे भूपाले प्रविविक्षूनवेक्ष्य तान् । परिहासहरिं चक्रुः पूजकाः पिहितारिरम् ॥३२६॥

ते रामस्वामिनं प्राप्य राजतं विक्रमोर्जिताः । परिहासहरिभ्रान्त्या चक्रुरुत्पाद्य रेणुशः ॥३२७॥

तिलं तिलं तं कृत्वा च चिक्षिपुर्दिक्षु सर्वतः । नगरान्निर्गतैः सैन्यैर्हन्यमानाः पदे पदे ॥३२८॥

श्यामला रक्तसंसिक्तास्तेपतन्निहता भुवि । अञ्जनाद्रिदृषत्खण्डा धातुस्यन्दोज्ज्वला इव ॥३२९॥

330 तदीयरुधिरासारैः समभूदुज्ज्वलीकृता । स्वामिभक्तिरसामान्या धन्या चेयं वसुंधरा ॥३३०॥

वज्राद्रत्नकृतं भयं विरमति श्रीः पद्मरागाद्भवेन्नानाकारमपि प्रशाम्यति विषं गारुत्मतादश्मनः ।

एकैकं क्रियते प्रभावनियमात्कर्मेति रत्नैः परं पुंरत्नैः पुनरप्रमेयमहिमोन्नद्धैर्न किं साध्यते ॥३३१॥

क्व दीर्घकाललङ्घ्योध्वा शान्ते भक्तिः क्व च प्रभौ । विधातुरप्यसाध्यं तद्गौडैर्विहितं तदा ॥३३२॥

लोकोत्तरस्वामिभक्तिप्रभावाण्यि पदे पदे । तादृशानि तदाभूवन्भृत्यरत्नानि भूभृताम् ॥३३३॥

राज्ञः प्रियो रक्षितोभूद्गौडराक्षसविप्लवे । रामस्वाम्युपहारेण श्रीपरीहासकेशवः ॥३३४॥

335 अद्यापि दृश्यते शून्यं रामस्वामिपुरास्पदम् । ब्रह्माण्डं गौडवीराणां सनाथं यशसा पुनः ॥३३५॥

एवं नानाविधोदन्तैर्वासराः क्ष्मापतेर्ययुः । विरलाः स्वपुरे तस्य भूयांसस्तु दिगन्तरे ॥३३६॥

अनन्याक्रान्तपृथिवीसमालोकनकौतुकी । अपारं प्रविवेशाथ पुनरेवोत्तरापथम् ॥३३७॥

कर्तुं प्रभावजिज्ञासां प्रहितैर्धनदादिभिः । नैर्ऋतैः सह वृत्तान्तास्तस्य ते ते तदाभवन् ॥३३८॥

नाद्यापि या भुवो दृष्टा जाने भानुकरैरपि । राज्ञस्तस्य बभूवाज्ञा तत्र स्वैरविहारिणी ॥३३९॥

340 चिरमज्ञातवृत्तान्तैर्मन्त्रिभिः प्रहितस्ततः । प्रत्यावृत्तस्तस्य पार्श्वीभूतस्तानेवमुक्तवान् ॥३४०॥

---

३१७. 1) $A_3$ gloss अन्तश्छिद्राः.—2) $A_3$ gloss मध्ये एव.—3) $A_3$ gloss क्रियाविशेषणम्.—4) $A_3$ gloss कर्मकर्तरि लकारः स्वयमेव दह्यन्ते। अन्तश्छिद्राः पुरुषास्तत्कार्यं कुर्वते। येन कार्येण अननुक्षयं यथा भवति तथा स्वयमेव दह्यन्ते। यथा कोटरस्थाग्नयस्तरवः स्वयमेव गूढं अन्तरेव दह्यन्ते ॥. ३३१. 1) Thus corr. by $A_3$ from $A_1$ कर्मोति°.—2) Thus corr. by $A_3$ from $A_1$ परम° ३३३. 1) र supplied by $A_3$. ३३७. 1) Thus corr. by $A_3$ from $A_1$ अनन्यका° ३३९. 1) $A_3$ तान्नु.

इत्यादिशति वः स्वामी कोयं मोहो भवादृशाम् । क्ष्मामिमां मे प्रविष्टस्य प्रतीक्षध्वे[1] यदागमम् ॥३४१॥
नवं नवं प्रतिदिनं संत्यज्य विजयार्जनम् । स्वराष्ट्रं संप्रविष्टस्य किं कार्यं मम पश्यत ॥३४२॥
विनिर्गतानां स्वभुवः सरितां सलिलाकरः । न निर्व्याजजिगीषूणां दृश्यते ह्यवधिः क्वचित् ॥३४३॥[1]
तस्मादाचारसारं वो वक्ष्ये स्वविषयोचितम् । राज्यं तदनुसारेण निर्विघ्नं कुरुतानघाः ॥३४४॥
अत्रस्थैः सर्वदा रक्ष्यः स्वभेदः प्रभविष्णुभिः । चार्वाकाणामिवैषां हि भयं न परलोकतः ॥३४५॥ 345
अपराधं विनाप्यत्र दण्ड्या गह्वरवासिनः । ते हि संभृतवित्ताः स्युर्दुर्भेद्या[1] दुर्गसंश्रयाः ॥३४६॥
वर्षोपभोग्यान्यन्नानि क्षेत्रभूसंमिता वृषाः । ग्राम्याणां नातिरिच्यन्ते यथा कार्यं तथासकृत् ॥३४७॥
अधिकीभूतवित्ता हि वत्सरेणैव ते भृशम् । भवेयुर्डामराः क्रूरा नृपाज्ञातिक्रमक्षमाः ॥३४८॥
वस्त्रं स्त्रियः क्षुधा भोज्यमलंकारा हया गृहाः । आसाद्यन्ते यदा जातु ग्रामीणैर्नगरोचिताः ॥३४९॥
महादुर्गाण्युपेक्ष्यन्ते संरक्ष्याणि यदा नृपैः । यदा चानन्तरज्ञत्वं तेषां भृत्येषु दृश्यते ॥३५०॥ 350
प्रदेशादेकतो रूढा यदा वृत्तिश्च शस्त्रिणाम् । अन्योन्योद्वाहसंबन्धैः कायस्थाः संहता यदि ॥३५१॥
कर्मस्थानानि वीक्षन्ते क्ष्मापाः कायस्थवद्यदा । तदा निःसंशयं ज्ञेयः प्रजाभाग्यविपर्ययः ॥३५२॥ चक्कलकम् ॥
चेष्टानुसारेणोन्नीय गूढमाशयसंविदम् । मयोक्तं हृदये कार्यमन्तरं राजबीजिनाम् ॥३५३॥
प्रत्यासत्तिं मदकरटिनो दानगन्धेन वायुर्गर्जोद्भूतिं[1] प्रकटितरुचिश्चञ्चलैवाम्बुदस्य ।
चेष्टा स्पष्टं वदति मतिमन्नैपुणोन्नेयतत्त्वा जन्तोर्जन्मान्तरपरिचितां निश्चलां चित्तवृत्तिम् ॥३५४॥
पुत्रः कुवलयादित्यो वज्रादित्यश्च मे समौ । भिन्नशीला तयोर्भ्रात्रोर्धात्रीमातुरयोः पुनः ॥३५५॥ 355
ज्यायान्[1]राज्येभिषेक्तव्यः[2] स च स्याद्दुर्बलश्चान्यदा । तस्याज्ञातिक्रमः कार्यो भवद्भिर्नियमात्तदा ॥३५६॥
उत्सृजञ्जीवितं वापि राज्यं वापि स पार्थिवः । शोचनीयो न केनापि स्मरतेदं वचो मम ॥३५७॥
कार्यः कनीयान्न नृपः प्रमादात्क्रियते यदि । नोल्लङ्घनीया तस्याज्ञा रक्ष्यश्च विषमोपि सः ॥३५८॥
पौत्रेषु मे कनीयान्यो जयापीडोस्ति दारकः । पितामहसमो भूया इति वाच्यः स सर्वदा ॥३५९॥
भर्तुर्गृहीतनैराश्याः साभिप्रायां प्रणम्य ताम् । आनर्चुः पश्चिमामाज्ञां ते बाष्पार्धककगल्यजः ॥३६०॥ 360
उवाच चङ्कुणो जातु संनिपत्याखिलाः प्रजाः । बाष्पैः पतिवियोगाग्नितप्तां सिञ्चन्वसुंधराम् ॥३६१॥
राज्ये कुवलयापीडो राजपुत्रोभिषिच्यताम् । सुगृहीताभिधो राजा गतः स सुकृती दिवम् ॥३६२॥
ससृजे यस्य कृतिनो दैवतैः कोशवृद्धये । रससिद्धिरकस्मान्मे यस्मात्मास्तमुपागता ॥३६३॥
दूरस्थोपि हि भूभृत्स भाग्यशक्त्या कयाचन । कार्याणि घटयन्नासीद्दुर्घटान्यपि हेलया ॥३६४॥
अम्भोजानि घनाघनव्यवहितोप्युल्लासयत्यंशुमान्दूरस्थोपि पयोधरोतिशिशिरस्पर्शी करोत्यातपम् ।
शक्तिः काप्यपरीक्षितास्ति महतां स्वैरं दविष्ठान्यहो यन्माहात्म्यवशेन यान्ति घटनां कार्याणि निर्यन्त्रणाम्[1] ॥३६५॥ 365
सैकादशदिनान्सप्त मासान्षट्त्रिंशतं समाः । एवमाहृत्य स महीं प्रजाचन्द्रोस्तमाययौ ॥३६६॥

---

३४१. [1]) The words from प्रतीक्षध्वे to संप्रविष्टस्य in the following verse have been omitted by $A_1$ and supplied in margin by $A_3$. ३४३. [1]) Thus corr. by later hand from $A_1$ निर्व्याजं. ३४६. [1]) Thus $A_1$; altered by later hand to दुर्भेद्या which is found in R G. ३५४ [1]) $A_3$ gloss करटी हस्ती. ३५६ [1]) $A_4$ gloss कुवलयापीड.—[2]) Emended, A °षिक्तव्य. ३६५. [1]) Thus corr. by $A_3$ from $A_1$ °यन्त्रणम.

संधिबन्धे समुत्पन्ने ततस्तदनुरोधतः । दंपती संप्रविष्टौ तौ सार्धं मासद्वयं पुरम् ॥४०१॥
जयानन्दादिबुद्ध्याथ बुद्ध्वा बन्धोद्यतं सुतम् । भूयोपि ययतुः खेदान्निर्गत्य विजयेश्वरम् ॥४०२॥
तस्याश्वत्रासकूटानि पुत्रो रात्रावदाहयत् । व्यापादयत्पदातींश्च विषशस्त्राभियुक्तिभिः ॥४०३॥
तथा प्रवर्धमानेपि विरोधे सत्यरोधयत् । वात्सल्यविवशा राज्ञी भर्तुः प्रतिचिकीर्षितम् ॥४०४॥
लुड्डाभिधाभूत्कैवर्तबन्धकी तद्विधेयधीः । थक्कडामरनामा च तज्जारः खलतिस्तदा ॥४०५॥ 405
स तत्रान्नैव दुष्टात्मा कथ्यमानौ समीपगैः । शुश्राव पितरौ[1] नित्यं लीलास्मितसिताननः ॥४०६॥ युग्मम् ॥
तौ दंपती पुनर्हैमतुलापुरुषयुग्मदौ । चित्राभिर्धर्मचर्याभिर्मनस्तापममुञ्चताम् ॥४०७॥
यदा पुनस्तयोर्दार्ढ्यमाद्यत्राप्त व्यहीयत । तदा सेर्ष्यः स दुष्पुत्रो रात्रौ वह्निमदापयत् ॥४०८॥
तेनाग्निनोर्वरीशस्य सर्वोपकरणैः समम् । भस्मावशेषमभवद्विजयेश्वरपत्तनम् ॥४०९॥
सर्वनाशशुचा दीना राज्ञी मर्तुं समुद्यता । तन्वङ्गपुत्रैश्चकृपे कथंचिज्ज्वलतो गृहात् ॥४१०॥ 410
त्यक्तांशुकानि शय्याभ्यो निशायां सुप्तमुत्थितम् । निःशेषं राजसैन्यं तदजायत दिगम्बरम् ॥४११॥
तद्राजधानीसौधाग्रात्पश्यन्कलशभूपतिः । तोषादनृत्यज्ज्वालौघैर्गगनालिङ्गिभिः समम् ॥४१२॥
अतरन्नष्टसर्वस्वः स पारं सरितो नृपः । निममज्ज सजानिस्तु दुस्तरे शोकसागरे ॥४१३॥
संप्राप्य प्रातरभ्रष्टं रत्नलिङ्गं नृपाङ्गना[1] । व्यक्रीणा[2]ल्लक्षसंख्या टङ्कानां पार्श्वमी[3]युषाम् ॥४१४॥
क्रीत्वा च[1] प्रददौ पूर्वं भृत्यानां भोजनांशुके । धनेन तेन निर्दग्धान्यपि धामान्यशोधयत् ॥४१५॥ 415
भस्मकूलतलात्तावल्लब्धं स्वर्णादि भूभुजा । कथापि यावतो हन्त मथयत्यद्य कौतुकम् ॥४१६॥
राजा शून्याटवीभूते पत्तने तत्र सानुगः । नडत्वग्[1]ग्रथितच्छत्रपटलाच्छादितेवसत् ॥४१७॥
तावत्यप्यर्थसामर्थ्ये चिकीर्षोस्तत्पुरं नवम् । विना राजोचितामाज्ञां न सिद्धं वृद्धभूपतेः ॥४१८॥
भट्टाभिभवो मातुरानुकूल्यान्नवो नृपः । परितापं पितुस्तैस्तैर्दुःसंदेशैः सदाकरोत् ॥४१९॥
निर्बन्धादथ पुत्रेण पर्णोत्सगमनं पिता । निर्वासनोत्सुकेनोक्तः शश्वद्दूतमुखैर्यदा ॥४२०॥ 420
प्रभवन्त्या यदा चासीत्पत्न्या तस्यैव वस्तुनः । निष्पत्तये[1] प्रेर्यमाणः साधिक्षेपं क्षणे क्षणे ॥४२१॥
तदा जातु रहः कुप्यंस्तन्वङ्गे थक्कने स्थिते । उवाचानुक्तपूर्वं तामेवं स परुषं वचः ॥४२२॥ तिलकम् ॥
अभिमानो यशः शौर्यं राज्यमोजो मतिर्धनम् । मया जायाविधेयेन हन्त किं किं न हारितम् ॥४२३॥
मिथ्योपकरणं नारीर्गणयन्ति नृणां जनाः । परिणामे तु नारीणां क्रीडोपकरणं नराः ॥ ४२४ ॥
द्वेषोन्मेषात्प्रसक्ताभिर्विरक्ताभिरसूयया । के नाम नात्र कान्ताभिः कृतान्तस्यातिथीकृताः ॥४२५॥ 425
रूपं काश्चिद्बलं काश्चित्प्रज्ञां काश्चिच्च कार्मणैः । पुंस्त्वं काश्चिदसून्काश्चिन्नृणां जहुरङ्गनाः ॥४२६॥
हरन्ति मातृभिरिव क्ष्मां पुत्रैरन्यगोत्रजैः । मत्ताः पयोधरौन्नत्यात्तरङ्गिण्य इवाङ्गनाः ॥४२७॥
पर्यन्ते वेतनमिमे किं जीर्णैरीदृशैरिति । पोषयन्ति सुतान्भर्तृञ्शोषयन्ति तु योषितः ॥४२८॥
सर्वकालं विदित्वापि दोषान्योषित्कृतानमून् । प्रतिपद्यन्ननुरोधेन मयेयं नावधीरिता ॥४२९॥

---

४०६. [1]) $A_2$ gloss पितराविति पितरौ राजा राज्ञी च राजा थक्कडामरनाम्ना समीपगैः कथ्यमानः राज्ञी च लुड्डाभिधा कैवर्ती नाम्ना कथ्यमाना उपहासार्थमित्यर्थः. ४१४. [1]) Thus corr. by $A_2$ from $A_1$ नृपात्मजा.—[2]) Thus corr. by $A_2$ from $A_1$ विक्री°. [3]) Thus $A_2$; $A_1$ पूर्वमीशु°. ४१५. [1]) Thus $A_1$; $A_2$ तत्प्र°. ४१७. [1]) नडत्वक् । पिचु इति भाषया. ४२१. [1]) समुत्काश्चि supplied by $A_2$ in space left by $A_1$.

430 प्रभविष्णुर्निहन्त्येयमैहिकीः सुखसंपदः । परलोकसुखस्याशामपि हन्तुं ममोद्यता ॥४३०॥
वलीपलितयुक्तस्य नेदीयोमरणावधेः । विहाय विजयक्षेत्रं कुत्र गन्तुं ममोचितम् ॥४३१॥
क्षपाकरकलामौलेः किल्बिषक्षपणक्षमा । द्वारोपकण्ठसंसेवोत्कण्ठा कुण्ठीभवेत्कथम् ॥४३२॥
पुत्रो लोकद्वयत्राता कस्यान्यस्येदृशो भवेत् । तीर्थात्प्रस्थापयन्मां यत्कुपथे मृतमिच्छति ॥४३३॥
प्रतिभात्यवगीतोयं प्रवादो मेद्य चेतसि । अनयान्यकुलोद्भूतो यदयं संप्रवेशितः ॥४३४॥
435 विसंवादिनमाकाराचारैर्बन्धुविरोधिनम् । पुत्रं पितुरसंदिग्धं आनीयादन्यरेतसम् ॥४३५॥
सुचिराविष्कृताकूतां त्यक्त्वा प्राणाय यन्त्रणाम् । एवं वदन्पतिस्तस्याश्चक्रे मर्मसु ताडनम् ॥४३६॥
गोत्रजस्य पुरः पुत्रोत्पत्तिगुह्ये प्रकाशिते । आमृष्टविप्रियालापा साभूदधिकलज्जिता ॥४३७॥
महत्तमस्य पुत्रो हि प्रशस्ताख्यस्य सोभवत् । विपन्नापत्ययोपात्तस्तयेत्यासीज्जनश्रुतिः ॥४३८॥
उत्सिक्तभाषितं भर्तुर्योषितो जितभर्तृकाः । जानन्त्यन्त्याङ्घ्रिसंवृत्तशिरस्ताडनसंनिभम् ॥४३९॥
440 अतः सा सुदृढं प्रौढिसंस्कारपरुषं वचः । प्राकृतप्रमदेवोच्चैरित्युवाच रुषा पतिम् ॥४४०॥
गतभीस्तापसो मन्दो जातभाग्यविपर्ययः । वृथा वृद्धः क्व किं वाच्यमिति मूढो न वेत्त्ययम् ॥४४१॥
खात्रोत्थितस्य यस्यास्य नाभूत्प्रावरणं पुरा । लोको जानात्ययं किं न तेन मां प्राप्य हारितम् ॥४४२॥
स्वकुलस्त्रीसमुचितं यत्किंचिन्मामभाषथाः । क्रियते किं न कालोयं यत्प्रायश्चित्तसेवने ॥४४३॥
अकर्मण्यो गतवया देशात्पुत्रेण वारितः । पत्न्यापि त्यक्त इत्यस्मात्परित्यागाद्धि मे भयम् ॥४४४॥
445 कुलदोषादिवृत्तान्तगर्भोपालम्भनिर्भरैः । वचोभिर्व्यथितस्तस्यास्तस्थौ तूष्णीं यदा नृपः ॥४४५॥
तदा तस्यासनप्रान्तनिःसृतः प्रसरन्बहिः । निर्विकाराकृतेर्व्यक्तं ददृशे रक्तनिर्झरः ॥४४६॥
संभ्रान्तायां ततो राज्ञ्यामपश्यत्स्थक्कनो रुदन् । असिधेनुं गुदे तेन क्रुधा राज्ञा प्रवेशिताम् ॥४४७॥
ततोतिधीरो राजैव तं लज्जाचकितोन्वशात् । राज्ञो रक्तातिसरणं जातमित्युच्यतां बहिः ॥४४८॥
विधेया नारीणां तनयनिहिताशेषविभवाः कृतम्लानौ भृत्ये पुनरुदितविस्रम्भरभसाः ।
नयन्तो गण्यत्वं प्रसभमभियोगैर्लघुमरिं नयत्यक्ताः क्ष्मापाः प्रलयमुपगच्छन्ति न चिरात् ॥४४९॥
450 नृपतिर्वाहितहयः शरदातपखेदितः । तृष्यन्निपीय धान्याम्बु च्युतासुर्जात इत्यभूत् ॥ ४५०॥
गम्भीरै राजपुरुषैस्तथा वार्ता प्रवर्तिता । यथा नाबुद्ध वृत्तान्तमेतं कोपि बहिर्जनः ॥४५१॥ युग्मम् ॥
वत्सरे सप्तपञ्चाशे पौर्णमास्यां स कार्तिके । विजयेशाश्रमतो राजा जीवितेन व्ययुज्यत ॥४५२॥
पत्न्याः पुत्रस्य चोद्वेगैस्त्यक्तो राजा सुखोचितः । प्रसार्य पादौ निद्रातुं प्राप सोवसरं चिरात् ॥४५३॥
चुकोपासौ न कस्मैचिच्चुकोपास्मै न कश्चन । चक्रे सुखी विमन्युश्च मरणेन महामनाः ॥४५४॥
455 संग्रामराजदायादो न कस्यचिदिव प्रियः । अंशुकाच्छादितो भूमावनाथ इव सोस्वपत् ॥४५५॥
न प्रियाक्रन्दितैः खिन्नश्च कुप्यन्नप्रियोक्तिभिः । सर्वत्यागी ययौ राजा दीर्घनिद्रारसज्ञताम् ॥४५६॥
दाक्षिण्योल्लङ्घनप्रायश्चित्तायेव त्यजन्नसून् । कृतज्ञया पतिः पत्न्या ततो निन्ये सनाथताम् ॥४५७॥

---

४४९. [1]) Thus A₂; A₁ °योगं लघु°. ४५०. [1]) A₂ gloss धान्याम्बु धनिका धान्यवल् इति भाषया । तदम्बु: ४५२. [1]) Thus corr. by A₂ from A₁ सपान्तिके. ४५५. [1]) Thus corr. by A₂ from A₁ सोभवत्.

आराजपुत्रचण्डालं देयं प्रत्यहवेतनम् । ददौ स्वस्येव भृत्येभ्यः सा कर्तुमनृणं पतिम् ॥४५८॥
गृहीतवेतना भृत्याः कोशं[1] सर्वे तया स्वयम् । पुरस्ताद्विजयेशस्य नप्तुः क्षेमाय पायिताः ॥४५९॥
पादन्यस्तशिराः पौत्रो हदर्पितकोशया । मूर्धन्याघ्राय कथितो मा पितुर्विश्वसीरिति ॥४६०॥
उत्थितैव[1] ततो भूत्वा स्वयमात्तलतां[2] सती । प्रातिहार्यं[3] व्यधाद्भर्तुः कारयन्त्यन्तमण्डनाम् ॥४६१॥
सादिनां शतमादिश्य नप्तुस्तत्रैव रक्षणे । सा पुनः शिबिकारूढमथ प्रास्थापयत्पतिम् ॥४६२॥
क्षपामेकां दिनार्धं च स्थित्वैवं पतिदेवता । प्रणम्य विजयेशानं युग्यारूढा विनिर्ययौ ॥४६३॥
निर्यान्तौ वीक्ष्य तौ प्रेततूर्यकल्लोलमिश्रितैः । लोकस्याक्रन्दतुमुलैर्भग्ना इव दिशोभवन् ॥४६४॥
विमानस्योत्पताकस्य परिष्कारेषु बिम्बिताः । प्रजा राज्ञोन्तिके रेजुरनुगन्तुमिवोद्यताः ॥४६५॥
राज्ञां विकीर्णस्कन्धानां मरुल्लोलाः शिरोरुहाः । विमानस्थस्य नृपतेरवहंश्चामरश्रियम् ॥४६६॥
पश्यन्ती[1] पश्चिमां सेवां सैन्यानां नृपतिप्रिया । अस्ताभिलाषिणि दिने प्रपेदे पितृकाननम् ॥४६७॥
दुस्त्यजात्सुतवात्सल्याद्यद्वा केनापि हेतुना । सा बभूव क्षणे तस्मिंस्तनयालोकनोत्सुका ॥४६८॥
जानन्ती पवनोद्धूतं रजः सेनासमुत्थितम् । चकितोत्कण्ठिता साभूत्कलशागमनाशया[1] ॥४६९॥
तस्मिन्क्षणे जनाः केचिदायाता नगराध्वना । अङ्ग किं कलशः प्राप्त इति पृष्टास्तया स्वयम् ॥४७०॥
स तु पुत्रः क्षणे तस्मिन्यियासुर्मातुरन्तिकम् । दत्त्वा विभीषिकास्तास्ता निरुद्धो द्वैधकारिभिः ॥४७१॥
ततो गृहीतनैराश्या राज्ञी पुत्रावलोकने । सा प्रार्थयित्वा वैतस्तं वारि श्लोकमथापठत् ॥४७२॥
वैतस्तेन तु तोयेन जठरस्थेन ये मृताः । मोक्षं गच्छन्त्यसंदेहं ते यथा ब्रह्मवादिनः ॥४७३॥
उपनीतं वितस्ताम्बु पीत्वोपस्पृश्य चाथ सा । एवं शशाप पिशुनान्स्नेहसंक्षयकारिणः ॥४७४॥
जनितं प्राणहृद्वैरं यैः पुत्रेण सहावयोः । सान्वयानां क्षयस्तेषां भूयात्परिमितैर्दिनैः ॥४७५॥
तस्यास्तेनोपतप्तायाः शापेनाव्यभिचारिणा । क्षिप्रमेव जयानन्दजिन्दुराजादयो मृताः ॥४७६॥
चक्रे हलधरापत्यजातकौलीनशान्तये । परलोकं पणीकृत्य युक्तया च शपथं सती ॥४७७॥
एवं विशुद्धशीलत्वं संप्रकाश्य शुचिस्मिता । कर्णीरथाददाज्झम्पां ज्वलिते जातवेदसि ॥४७८॥
अजायत नभो वह्निज्वालावलयमालितम् । तदागमोत्सवे दत्तसिन्दूरमिव निर्जरैः ॥४७९॥
साक्रन्दैर्न चटत्कारी दुःखोत्तप्तैर्न चोष्मलः । परमालेख्यलिखित इव जज्ञे शिखी जनैः ॥४८०॥
गङ्गाधरष्टक्किबुद्धो युग्यवाहश्च दण्डकः । तावुद्वा नोनिका वल्गा चेति दास्यस्तदान्वयुः ॥४८१॥
बप्पटोद्भटयोः कुल्यौ सेनटक्षेमटावुभौ । भूपालवल्लभावास्तां वैराग्याद्विजयेश्वरे ॥४८२॥
भावा यन्त्वनिसर्गभङ्गुरतरास्तिष्ठन्ति नैते चिरं चेतःकाचघटस्य[1] तस्य घटते दीर्घोऽयमेको गुणः ।
यत्तस्मिन्निहितप्ररूढि न गलत्यायाति न म्लानतां धत्ते नापचयं चमत्कृतिवचो गीर्वाणगङ्गापयः ॥४८३॥
एकषष्टिमतिक्रम्य वर्षान्भूपतिरायुषः । सपत्नीकः पुरारातिगौरीसायुज्यमासदत् ॥४८४॥

---

४५९. 1) $A_3$ gloss निश्चं. ४६१. 1) उत्थि supplied by $A_2$ in space left by $A_1$.— 2) $A_3$ gloss आत्ता गृहीता लता यया.— 3) $A_3$ gloss द्वारस्थत्वं. ४६६. 1) $A_3$ gloss विकीर्णाः हृता स्कन्धाः भुजशिरांसि शिबिकावाहनार्थं यै तेषां. ४६७. 1) Thus corr. by $A_3$ from $A_1$ पश्यन्त्यपश्चि°. ४६९. 1) Thus corr. by $A_3$ from $A_1$ °गमाशया. ४८३. 1) $A_3$ gloss चेतोरूपे काचघटे शीशा इति प्रसिद्धे.

485 अथास्थीनि समादाय चतुर्थे दिवसे तयोः । पुत्रास्तन्वङ्गराजस्य सर्वे गङ्गां प्रतस्थिरे ॥४८५॥

पैतामहेन कोशेन परिवारेण चान्वितः । पित्रा विरोधं जग्राह हर्षस्तु विजयेश्वरे ॥४८६॥

आद्ये पिता पुरवरे[1] पिता श्रीविजयेश्वरे । तस्मिन्पुत्रस्तु तत्रासीत्पिता तु नगरान्तिके ॥४८७॥

ततोतिव्यथिनं पुत्रं दरिद्रो नीतिमान्पिता । अभ्यर्थ्यानर्थभीतश्च संधिं दूतैरयाचत ॥४८८॥

स तैरसकृदायातैरुत्सिक्तो युक्तवादिभिः । राजपुत्रः समं पित्रा संधिं निन्ये कथंचन ॥४८९॥

490 रक्षां पैतामहे कोशे शरीरे चात्मजन्मने । प्रतिशुश्राव जनकः कृतप्रत्ययहृचेतनैः ॥४९०॥

नृपतेः पुत्रमानेतुं विशतो विजयेश्वरम् । दृष्टिः क्रुष्टैर्गृहैर्दग्धा श्रुतिश्च जनगर्हया ॥४९१॥

स पीतकोशः संगृह्य तनयं प्राविशत्पुरम् । कोशं चास्यापयन्मुद्रां दत्त्वा तदभिधाङ्किताम् ॥४९२॥

अत्रान्तरे तस्य राज्ञो धार्मिकी धीरजायत । दारिद्र्यच्छेदिनी धर्म्या धनबुद्धिश्च सर्वतः ॥४९३॥

तनयो नयनाख्यस्य कल्यः सेल्यपुरौकसः । कुटुम्बिनो जय्यकाख्यः क्रमाच्छ्रामरतामगात् ॥४९४॥

495 स्थलोत्पत्तिः स दिग्देशविक्रीताम्नो वणिज्यया । संभृतार्थः शनैर्लुब्धो धनेशस्पर्धितां दधे[2] ॥४९५॥

सार्धं क्रोशं खनित्वा स नित्यं दीनारराशिभिः । पूरितायाः क्षितेः पृष्ठे बहून्व्रीहीनवापयत् ॥४९६॥

दीनारन्यसनं भृत्यैः कारयित्वा प्रतिक्षपम् । बहवो भेदभीतेन तेन गूढं निपातिताः ॥४९७॥

स भाङ्गिलं लब्धुमिच्छन्बलेकस्मात्पलायिते । द्राक्षालतानिरुद्धाश्वो हतः केनापि पक्षिना ॥४९८॥

तदीयेनोपलब्धेन धनेन वसुधातलात् । पर्याप्तेनात्यजद्राजा यावदायुर्दरिद्रताम् ॥४९९॥

500 समृत्स्नं क्षाल्यमानेषु तद्दीनारेष्वहर्निशम् । कलुषाम्भा बहून्मासान्वितस्ता समपद्यत ॥५००॥

दानोपभोगरहिताः काले क्लेशेन भूयसा । अन्यार्थमर्थान्रक्षन्ति चित्रं लुब्धा महाशयाः ॥५०१॥

प्राणान्धारयते निपीय मरुतः शेते तमोन्धे बिले संभोगे परदत्तमिच्छति पटं नमस्त्रपाशान्तये ।

विस्तार्येति कदर्यतामहिरवत्यन्यस्य हेतोर्निधीनान्यः कोपि परं परोपकृतिषु प्रौढोस्ति लुब्धं विना ॥५०२॥

अन्यैश्च बहुभिर्मार्गैर्नद्यः सिन्धुमिवाविशन् । नानार्थसंपदस्तास्तां भाग्यभाजं महीभुजम् ॥५०३॥

अर्था भाग्योदये जन्तुं विशन्ति शतशः स्वयम् । दिग्भ्योभ्युपेत्य सर्वाभ्यः सायं तरुमिवाण्डजाः ॥५०४॥

स्रोतांसि प्रबलत्वमेत्य वसुधां मूलेषु पुष्णन्त्यधो व्योम्नोम्भः पतति त्यजन्ति हरितो वारि प्रणालीमुखैः ।

505 इत्थं शुष्कसरः पयोदसमये संपूर्यते सर्वतो भाग्यानामुदये विशन्ति शतशो द्वारैर्न कैः संपदः ॥५०५॥

जनरक्षणदाक्षिण्ये ततः[1] पितुरिवान्वहम्[2] । कुशला कलशस्यासीत्प्रजापुण्योदयैर्मतिः ॥५०६॥

स्वयं वणिगिवार्थानां गणनाकुशलोपि सः । विश्वेक्ता सत्पथत्यागे मुक्तहस्तः सदाभवत् ॥५०७॥

उपस्थितौ भाविनौ च पश्यन्नायव्ययौ स्वयम् । अन्तिकान्नात्यजज्जूर्जखटिकादि नियोगिवत् ॥५०८॥

तस्य स्वरूपमूल्येन रत्नादि क्रीणतः स्वयम् । नाशकन्वञ्चनां कर्तुं केपि विक्रयकारिणः ॥५०९॥

510 त्रिवर्गं सेवमानः स विभज्य समयं सुखी । मध्याह्नादूर्ध्वमभवद्दृश्यः सर्वकार्यिणाम् ॥५१०॥

तस्य स्वेषां परेषां च कृत्यमन्विष्यतश्चरैः । अज्ञातः स्वप्नवृत्तान्तः प्रजानामभवद्यदि ॥५११॥

---

४८७. [1]) Thus emended with G; A पुरवरे. ४९५ [1]) दास्य supplied by $A_3$ in space left by $A_1$.—[2]) Thus corr. by $A_2$ from $A_1$ धेतामगात्. ५००. [1]) Emended; A तद्दीना°. ५०३. [1]) Thus corr. by $A_2$ from $A_1$ °स्ताता. ५०६. [1]) ततः supplied by $A_2$ in space left by $A_1$.—[2]) Thus corr. by $A_2$ from $A_1$ °वान्तिकम्.

स्ववेश्मेव गृहस्थस्य व्यायतश्चास्य मण्डलम् । जनो जनपदे जातु न कश्चिन्न्यमस्पृशत् ॥५१२॥
कौलीनचकितो राजा कुर्वन्कण्टकशोधनम् । प्रकटं नात्यजद्दण्डं चौरेभ्योपि स जातु चित् ॥५१३॥
न तस्यार्थः कोपि नष्टो मन्त्रिणो यमयोजयन् । मन्त्रिणां स पुनश्चक्रे नष्टस्यार्थस्य योजनम् ॥५१४॥
विवाहयज्ञयात्रादिमहोत्सवशताकुलः । नित्यप्रहृष्टो निर्दैन्यस्तद्राज्ये ददृशे जनः[1] ॥५१५॥ 515
तेन नीतिविदाक्रान्ताः क्ष्माभुजः क्षित्यनन्तराः । आहाराचरणेप्यासंस्तदध्यक्षान्विनाक्षमाः ॥५१६॥
तन्त्वङ्गस्थस्थक्कनादींस्त्रीनायातान्दिगन्तरात्[1] । व्यधितैकानुजान्मल्लप्रमुखान्गुङ्गजानपि ॥५१७॥
अप्रीणयद्बन्धुभृत्यान्स भव्याभिर्विभूतिभिः । कलाभिरमृतार्द्राभिः सोमः[1] सुरपितॄनिव ॥५१८॥ युग्मम् ॥
अप्राप्तपरिपाकोपि दौःशील्येन न भूपतिः । कुदैशिकोपदिष्टेन दुष्टाचारेण चोज्झितः ॥५१९॥
टक्केन तुल्लियाख्येन कन्यकाः समुपाहृताः । क्रीतास्तस्य तुरुष्केभ्यो[1] नानादिग्देशसंभवाः ॥५२०॥ 520
स ताभिः परदारैश्च रूपलोभादुपाहृतैः । अवरोधपुरंध्रीणां द्वासप्ततिमढौकयत् ॥५२१॥
बह्वीः कामयमानस्य योषितः प्रतिवासरम् । मत्स्ययूषादिभिर्वृष्यैर्[1]नास्य पुष्टिरहीयत ॥५२२॥
महासमयपूजासु व्यग्रः स गुरुभिः समम् । महाचरुणमाहारं नीतिमुत्सृज्य चाकरोत् ॥५२३॥
एवं शबलकृत्येन पुरं तेन नवीकृतम् । निर्दग्धे विजयक्षेत्रे शिलावेश्म न[1] शूलिनः ॥५२४॥
विजयेशशिलावेश्ममौलावातपवारणम् । नृपोम्बरशिरश्चुम्बि जाम्बूनदमयं व्यधात् ॥५२५॥ 525
व्ययस्थितिं चानपायां व्यधत्त त्रिपुरेश्वरे । पिनाकिनश्च प्रासादं स स्वर्णामलसारकम् ॥५२६॥
ततः सत्कर्मकुशलश्चकार कलशेश्वरम् । निःसंख्यहाटकघटीपटलाङ्कशिलागृहम् ॥५२७॥
कलशेशोपरि छत्रं चिकीर्षोः काञ्चनाञ्चितम् । तुरुष्कदेशजः शिल्पी राज्ञोभ्यर्णमुपाययौ ॥५२८॥
सहस्रैर्भूरिभिर्हेमच्छत्रसिद्धिं वदन्कलाम् । स छादयन्निजां ताम्रे काञ्चनारोपणं विदन् ॥५२९॥
कानिचिद्दिवसान्यासीत्प्राप्नुवन्नृपसत्क्रियाम् । ततोतितीक्ष्णप्रज्ञेन नोनकाख्येन मन्त्रिणा ॥५३०॥ 530
अभ्यूह्य शिक्षितकलो विलक्षोगाद्यथागतम् । तच्च छत्रं ययौ सिद्धिमत्यल्पैरेव काञ्चनैः ॥५३१॥
अनन्तेशाभिधं बाणलिङ्गमन्यांश्च भूपतिः । प्रतिष्ठा विविधाश्चक्रे स शक्राधिकवैभवः ॥५३२॥
नृपे सहजपालाख्ये शान्तिं यातेभ्यषिच्यत । ततः संग्रामपालाख्यो राजपुर्यां[1] तदात्मजः ॥५३३॥
राज्यं जिहीर्षुर्बालस्य पितृव्यस्तस्य भूपतेः । भेजे मदनपालाख्यो बलीयानुद्यमं मदात् ॥५३४॥
तद्भयाच्छरणं प्रायान्नृपं साहायकार्थिनी । स्वसा संग्रामपालस्य[1] जस्सराजश्च ठक्कुरः ॥५३५॥ 535
कृतप्रसादो नृपतिः साहायककृते ददौ । तयोः पश्चाज्जयानन्दं भूरिविज्जादिभिः समम् ॥५३६॥
तत्र विद्रावितामित्रः स[1] स्फूर्जन्क्रान्तमण्डलः । संग्रामपालामात्यानां कार्यान्ते शङ्कुतां[2] ययौ ॥५३७॥
काङ्क्षन्तो गमनं तस्य दत्त्वा तास्ता विभीषिकाः । ते त्रासमैच्छन्नाधातुं स वीरो न व्यकम्पत ॥५३८॥
मतिं राजपुरीयाणामसावेतामदादिति । शङ्कमानेन तेनाथ विज्जे मन्युरुपाहृतः ॥५३९॥

५१५. [1]) Thus corr. by $A_1$ from जनैः. ५१७. [1]) Doubtful; thus A. ५१८. [1]) मः supplied by $A_3$ in space left by $A_1$. ५२०. [1]) Thus $A_3$; $A_1$ तुरुष्केन. ५२२. [1]) $A_3$ gloss वृष्यैः वाजीकरणैः. $A_3$ quotes: वृष्यकल्पतरौ पारिभद्ररसेनैव हिङ्गुलं वाममाचकम् । मर्दयित्वा पारदस्यातयेत्पूर्वमुक्तितः । योजयेत्सर्वयोगेषु लसकञ्चुकवर्जितम् ॥. ५२४. [1]) न supplied by $A_3$ in space left by $A_1$. ५३३. [1]) $A_3$ gloss राजविद् इति भाषया. ५३५. [1]) Thus corr. by $A_3$ from $A_1$ संग्रामराजस्य. ३७. [1]) $A_4$ gloss अवाप्नुवन्.—[2] Thus emended with G *sec. manu*; A शङ्कतां.

540 तैस्तत्र दत्तद्रविणैः प्रार्थितोथ महामतिः । रक्षापदेशात्स्वं सैन्यं स्थापयित्वा न्यवर्तत ॥५४०॥
एवं राजपुरीं तस्मिन्स्वीकृत्यान्तिकमागते । तुतोष कार्यमर्मज्ञः प्राज्ञः कलशभूपतिः ॥५४१॥
क्रमाद्राजायमानेषु बिज्जादिष्वथ पस्पृशे । आमयेन जयानन्दो दैवात्प्रमयहेतुना ॥५४२॥
स्वास्थ्यवार्तोपलम्भाय भूपतिं गृहमागतम् । वाच्यमस्ति रहः किंचिदित्यूचे स कथान्तरे ॥५४३॥
निर्यातेष्वथ सर्वेषु किंचिन्नैवाब्रवीद्यदा । तदा ताम्बूलतिरयक्षाव्याजाद्बिज्जो विनिर्ययौ ॥५४४॥
545 आप्तेनोक्तोपि निर्गच्छन्किं प्रयासीति भूभुजा । मन्त्रिणा चैत्य स प्राज्ञो बहिरेव व्यलम्बत ॥५४५॥
जयानन्दोभ्यधाद्रूपमुक्त्वा राजपुरीकथाम् । व्यक्तं नास्त्येव ते राज्यं बिज्जे वृद्धिमुपागते ॥५४६॥[1]
आदीयमानाद्बिज्जेन कार्येभ्यो वेतनादपि । दर्शयामास गणनां बहुमूल्यां महीभुजे ॥५४७॥
प्राप्तः कलुषतां राजा प्रयातः स्वगृहांस्ततः । याचितो गमनानुज्ञां बिज्जेनेङ्गितवेदिना ॥५४८॥
निषेधमिव दाक्षिण्यलेशान्निर्बन्धकारिणः । तस्यानुज्ञां ददौ गन्तुं सान्तस्तोषो महीपतिः ॥५४९॥
550 लब्धादेशो गृहान्गत्वा सर्वोपकरणैः समम् । प्रस्थाप्य सोमतो भ्रातॄनाप्रष्टुं नृपतिं ययौ ॥५५०॥
राजधर्मगभीरत्वक्रूरयोः स्वामिभृत्ययोः । काचिदेव क्षणे तस्मिंश्चेष्टाभूदद्भुतावहा ॥५५१॥
न यत्प्रभुः प्रियं भृत्यं गमनात्स न्यवर्तयत् । उपालेभे समन्युश्च न यद्भृत्यः प्रिय प्रभुम् ॥५५२॥
सहोत्थितेन कतिचित्पदानि सह भूभुजा । चिरं कृत्वा कथां नीचैर्हसन्बिज्जो विनिर्ययौ ॥५५३॥
जिन्दुराजं हलधरो मुमूर्षुर्दूषयन्यथा । तथा बिज्जं जयानन्दः स व्यवारोपयत्पदात् ॥५५४॥
555 तल्लक्ष्मीमात्रशेषां क्ष्मां कृत्वा गच्छन्निषिध्यताम् । कृतार्थो बिज्ज इत्युक्तिं नामहीन्मन्त्रिणां नृपः ॥५५५॥
निवर्तयिष्यति क्ष्माभृन्नियतं गमनादमुम् । इत्याशयान्वगाद्बिज्जं राजवर्जं जनोखिलः ॥५५६॥
आस्कन्दं शङ्कमानोस्माद्बिज्जाद्राजा बलोर्जितात् । तृणस्पन्देपि चकितो निर्निद्रः पञ्च यामिनीः ॥५५७॥
तस्मिञ्छूरपुराद्याते निवृत्तेष्वनुगन्तृषु । निवृत्तशङ्कस्तां शङ्कां प्रादुश्चक्रे स मन्त्रिणाम् ॥५५८॥
ते तदाकर्ण्य यं मन्त्रं बिज्जार्थहरणेब्रुवन् । तस्याविधाने भूभर्तुरमन्यन्त नयज्ञताम् ॥५५९॥
560 बिज्जादयस्तु निर्द्रोहा यं यं देशमशिश्रयन् । तत्र तत्रैव पूज्यत्वं रत्नानीव प्रपेदिरे ॥५६०॥
बिज्जोधिकं प्रवृद्धोपि दैवतस्येव भक्तिमान् । पद्भ्यां कलशदेवस्य सत्यंकारः सदाभवत् ॥५६१॥
एवं निर्वास्य बिज्जादीनचिरावाप्तवैभवः । क्षिप्रं सूर्यमतीशापाज्जयानन्दः क्षयं ययौ ॥५६२॥
राज्ञो विरोधकृद्वक्तुं शापस्याव्यभिचारिताम् । प्रमयं जिन्दुराजोपि तस्मिन्नेव क्षणे ययौ ॥५६३॥
तेपि बिज्जादयः क्षिप्रमचिरावाप्तसंपदः । प्रापुः शापोचितं सर्वे प्रमयं गौडमण्डले ॥५६४॥
565 आकस्मिकेथ प्रमये[1] बिज्जः प्रमयमाययौ । सुदीर्घबन्धनक्लेशं प्रापुस्तदनुजा अपि ॥५६५॥
पलायितेषु कारायास्तेषु व्याघ्रेण पाजकः[1] । हत[2]स्तदनुजाः शेषा भुक्तक्लेशाः क्षयं ययुः ॥५६६॥
द्विधास्तद्वै[1]धकाराणां नानश्यन्मदनादयः । अदीर्घेणैव कालेन दुरन्तैर्[2]भविष्यते ॥५६७॥
जयानन्दसहायोथ तत्पुत्रान्परिपालयन् । सर्वाधिकारी भूपेन वामनाख्यो व्यधीयत ॥५६८॥

---

५४६. ¹) Thus corr. by later hand from $A_1$ राज्य°. ५५८. ¹) $A_2$ gloss डूरपुर. ५६५. ¹) $A_2$ gloss आकस्मिके प्रमये मारीरोग इत्यर्थः. ५६६. ¹) Thus $A_1$; $A_2$ R G पाजकाः.—²) Thus $A_1$; $A_2$ ततस्त°. ५६७. ¹) Thus $A_1$; $A_2$ द्विमास्तु द्वैध°.—²) Thus corr. by $A_2$ from $A_1$ °तैस्तैर्भवि°.

यस्य तास्ता व्यवहृतीर्नीतिज्ञस्याद्भुतावहाः । वर्णयन्ति वयोवृद्धा गोष्ठीष्वद्यापि[1] धीमताम् ॥५६९॥
ग्रामानवन्तिस्वाम्यादिभोग्यानाहृत्य लुब्धधीः । राजा कलशगञ्जाख्यं कर्मस्थानं विनिर्ममे ॥५७०॥
मन्त्रिणे नोनकायासौ धनोत्पादप्रियोप्यदात् । क्रौर्यत्रस्तो न पादाग्रं जनरक्षणदक्षिणः ॥५७१॥
मन्त्रिणो राजकलशापत्यान्यत्यन्तरङ्गताम् । लेभिरे क्ष्माभुजः पार्श्वे प्रशस्तकलशादयः ॥५७२॥
सुताः स्वाच्छन्द्यविवशा धीराः संध्यादिसंभयाः । युक्त्या निदधिरे राज्ञा निबद्धस्वाधिकारिणः ॥५७३॥
पुनर्मदनपालेन क्रान्ते राजपुरीपतौ । साहायकाय व्यसृजत्सेनान्यं बप्पटं नृपः ॥५७४॥
प्रतापैर्भूपतेस्तेन भृत्यांशेनापि[1] निर्जितः । बद्ध्वा मदनपालोपि कश्मीरान्संप्रवेशितः ॥५७५॥
भ्राता वराहदेवस्य कन्दर्पाख्यो महीभुजा । कृतो द्वाराधिपो वीरो विदधे डामरक्षयम् ॥५७६॥
बभूव जिन्दुराजात्स शिक्षितो नयविक्रमी । भूम्यनन्तरसामन्तमुकुटस्पृष्टशासनः ॥५७७॥
स राजपुर्यादिजयी द्वारं परमकोपनः । क्षणे क्षणेत्यजद्राज्ञा प्रसाद्य ग्राहितः स्वयम् ॥५७८॥
मदनः[1] क्षितिपालेन प्रापितः कम्पनेशताम् । लब्धप्रकर्षान्बोपादीन्डामरान्बहुशोवधीत् ॥५७९॥
सेवावशीकृतः श्येनपालं स[1] नगराधिपम् । चक्रे विजयसिंहाख्यं हताशेषमलिम्लुचम् ॥५८०॥
कन्दर्पोदयसिंहाद्यैः[1] प्रहिते लोहरे सकृत् । राजा भुवनराजस्य दूरं निःसारणं व्यधात् ॥५८१॥
कीर्तिराजस्य तनयां स च नीलपुरप्रभोः । लब्ध्वा भुवनमत्याख्यां रिपोश्छिन्नाग्रयो[1]भवत् ॥५८२॥
कार्यप्रतिग्रहे कर्तुं प्रवृत्तिं ग्राहितोभवत् । हत्वा विजयसिंहाद्यो नृपेण नगरेशताम् ॥५८३॥
गुङ्गात्मजः स मल्लोथ तेन द्वारपतिः कृतः । राज्ञां मौलिमणिस्थाने स्वप्रतापमरोपयत् ॥५८४॥ युग्मम् ॥
शौर्यं निष्परिवारस्य पार्थस्यो[1]त्तर[2]गोग्रहे । उरशासंप्रवेशे वा भुक्तं[3] मल्लस्य मानिनः ॥५८५॥
पञ्चाशैस्तुरगैर्यस्स कृष्णां तीर्त्वा व्यपाहरत् । राज्यं वाजिव्रजैः सार्धमभयाख्यस्य भूभुजः ॥५८६॥
एवं वशीकृतभुजो भूपतेर्नयवेदिनः । सममेवाष्टभूपालास्त्रिषष्टेब्देविशन्पुरम् ॥५८७॥
कीर्तिर्न्यब्बपुराधीशश्चाम्पेयो भूभृदासटः । तुक्कात्मजस्तु कलशो वल्लापुरनरेश्वरः ॥५८८॥
राजा संग्रामपालाख्यः स च राजपुरीपतिः । उत्कर्षो लोहरोर्वीभृद्दार्वेशो मुङ्गजो नृपः ॥५८९॥
गाम्भीरसीहः कान्देशः काष्टवाटधराधिपः । भीमानुत्तमराजोपि राजानमुपतस्थिरे ॥५९०॥ तिलकम् ॥
राजलोकः प्रवृद्धोपि घने जनपदेभवत् । दुर्लक्ष्यो प्रार्थिकसरित्पूरो वारिनिधाविव ॥५९१॥
तस्मिन्क्षणे शिलीभूतवितस्तासलिले नृपैः । शीतक्षणेप्यसंक्षीणं सुखं तैरन्वभूयत ॥५९२॥
मनसापि हि भूपाला यत्ते किंचिदचिन्तयन् । प्राप्तमेव पुरेपश्यन्वामनेन तदाहृतम् ॥५९३॥
कौशलं मन्त्रिणस्तस्य रराजेतरदुर्लभम् । निमित्तं तदसंभ्रान्तो नित्यवद्योस्यवाहयत् ॥५९४॥
पार्थिवेष्वथ यातेषु मल्ले कार्यपराङ्मुखे । क्षितिपालेन कन्दर्पो द्वारं स्वीकारितः पुनः ॥५९५॥
अभिमानधनो मन्त्री कृतारम्भैर्निजैर्धनैः । दुर्गं स स्वापिकं नाम युक्त्या दुर्ग्रहमग्रहीत् ॥५९६॥
स प्रविष्टोपि नगरं खिन्नः केनापि हेतुना । पार्थिवाभ्यर्थ्यमानोपि कार्यं नैवाग्रहीत्तदा ॥५९७॥

---

५६९. [1]) पि supplied by $A_3$. ५७५. [1]) Thus corr. by $A_3$ from $A_1$ °शेनाति. ५७९. [1]) $A_3$ gloss मदनपालः. ५८०. [1]) स supplied by $A_3$. ५८१. [1]) Thus corr. by $A_3$ from $A_1$ कन्दर्पोभ°. ५८२. [1]) Thus corr. by $A_3$ from $A_1$ °च्छिन्नाश्रेयो°. ५८५. [1]) $A_3$ gloss अर्जुनस्य.—[2]) $A_3$ gloss उत्तरो विराटपुत्रः.—[3]) Thus $A_1$. $A_3$ हुतं.

तदा प्रशस्तकलशो[1] नित्यं दूत्यं समाचरन् । तदुक्तितीक्ष्णोक्तिसंतप्तः संस्मृत्यात्माभिमानिताम् ॥५९८॥
निजश्रियातिभूयस्या भूरीन्संगृह्य शस्त्रिणः । तत्पदे रत्नकलशं स्वभ्रातरमकारयत् ॥५९९॥
600 सोर्थैः क्रीत[1]प्रथोप्यासीन्न कन्दर्पसमः[2] क्वचित् । किं चित्रोल्लिखितः सिंहः सत्यसिंहक्रियां स्पृशेत् ॥६००॥
ततः क्रमेण भूभर्त्रा भृत्यवत्सले कथंचन । राजस्थानाधिकारे स नगरे माहितः पुनः ॥६०१॥
अतिताडनतश्चौरे विपन्नेथ कृपाकुलः । त्यक्त्वा तमप्यधीकारं विषण्णो जाह्न[1]वीमगात् ॥६०२॥
पटान्तकृतसंरोधस्ताडयित्वा करं प्रभोः । कोपाद्देशान्तरं यातस्तं प्रत्यास्ते[1] स्म मन्युमान् ॥६०३॥
अत्यन्तखेदितोप्या[1]सीदानीतस्यान्तिकं पुनः । दर्पं हर्तुं नृपस्तस्य संनद्धो न तु जीवितम् ॥६०४॥
605 इत्थं पुरुषसिंहानां प्रौढदार्ढ्यो विसोढवान् । आरोहमवरोहं च सोन्तरज्ञः क्षमापतिः ॥६०५॥
उपाङ्गगीतव्यसनं नर्तकीसंग्रहादरः । देशान्तरोचितं राज्ञा तेनैवेह प्रवर्तितम् ॥६०६॥
ततो जयवनोपान्ते निरन्तरमहागृहम् । स्वनामाङ्कं पुरं कर्तुं प्रावर्तत विशांपतिः ॥६०७॥
मठाग्रहारप्रासादमहागृहपरंपराः । सत्तोयोपवनास्तत्र ययुः सिद्धिं सहस्रधा ॥६०८॥
अत्रान्तरे राजसूनुर्हर्षः सोत्कर्षपौरुषः । गुणैर्लेभे प्रकाशत्वमन्यभूपालदुर्लभैः ॥६०९॥
610 सोशेषदेशभाषाज्ञः सर्वभाषासु सत्कविः । कृत्स्नविद्यानिधिः प्राप ख्यातिं देशान्तरेष्वपि ॥६१०॥
लुब्धेन पित्रा संत्यक्ता जना नानादिगागताः । गुणशौर्योज्ज्वलास्तेन गृहीताः कृतवेतनाः ॥६११॥
अपर्याप्ते पितृकृते वेतने व्ययशालिनः । एकाहान्तरितं तस्य भोजनं त्यागिनोभवत् ॥६१२॥
पितरं गायन इव व्यक्तं गीतैः स रञ्जयन् । भर्तव्यभरणं चक्रे तद्दत्तैः पारितोषिकैः[1] ॥६१३॥
उद्गायति पुरस्तस्मिन्कदाचिदथ पार्थिवः । सभ्येषु प्रीयमाणेषु शौचायोत्थाय निर्ययौ ॥६१४॥
615 तेन प्रसङ्गभङ्गेन जाततेजोवधः सुधीः । क्षुभ्यन्वै[1]लक्ष्यकोपाभ्यां कुमारः[1] क्षितिमैक्षत ॥६१५॥
प्रभुर्वीतक्षान्तिः सुहृदतिशठः स्त्री परुषवाक्सुतो गर्वोन्नद्धः परिजन उदासप्रतिवचाः ।
इयान्सोढुं शक्यो ननु हृदयदाही परिकरो न तु श्रोतावज्ञालुलितनयनान्तं परिभवन् ॥६१६॥
पितुरेव तदा भृत्यो विड्डशावट्टाभिधो विटः । शाधि राज्यं निहत्येमं नर्मणैवेत्युवाच तम् ॥६१७॥
अधिक्षिपन्स तं रोषाज्ज्ञानेनोक्तमसांप्रतम् । इत्यासन्नेन हसता धम्मटेना[1]प्यकथ्यत ॥६१८॥
अग्रे भोगेच्छवश्छन्नाः कुमाराननुगान्पितुः । केहं मदर्थं स्वीकुर्युर्वेश्या कामिस[1]खीरिव ॥६१९॥
620 पुनः सभां संप्रविष्टस्तं पिता पर्यतोषयत् । प्रीतिदायैस्ततस्तैस्तैः साधुवादैश्च मानिनाम् ॥६२०॥
अन्येद्युस्तु पितुः पार्श्वात्स भुक्त्वा स्वगृहान्गतः । अभ्येत्य विड्डशावट्टेन तदेव जगदे रहः ॥६२१॥
उपपन्नं तत्तदुक्त्वा तेनाभीक्ष्णं निषेधता । निर्बध्नन्नपि हस्तेन सोथ कोपादताड्यत ॥६२२॥
लग्नाभिघातं रुधिरं वमन्तं घ्राणवर्त्मना । तं वीक्ष्य सोभिजातोभूत्सदाक्षिण्यो नृपात्मजः ॥६२३॥
भृत्यैः प्रक्षालयन्नस्रं तस्येदृक्पाप्मनो भवेत् । उक्तेनापीति कथयन्स्मित्वा वासांस्यदापयत् ॥६२४॥

---

५९८. [1]) Emended; A R G °कलशं. ६००. [1]) Thus $A_1$; $A_3$ मीत°.—[2]) Thus corr. by later hand from $A_1$ कन्दर्पः समः. ६०२. [1]) जाह्न supplied by $A_3$ in space left by $A_1$. ६०३. [1]) Thus corr. by $A_3$ from $A_1$ प्रत्यास्ते. ६०४. [1]) Thus $A_1$; $A_3$ °खेदितस्त्वासीदा°. ६१३. [1]) Emended; A °तोषकैः. ६१५. [1]) Thus $A_1$; $A_3$ क्षुभ्यद्वै°.—[1]) Thus corr. by $A_3$ from $A_1$ कुमारः. ६१८. [1]) Emended; A धर्मटेना°. ६१९. [1]) Thus $A_1$; $A_3$ कामी स°.

अनिच्छोरपि तस्येच्छा दानात्तेनान्वमीयत । दुःशीलेनान्यकामिन्याः स्मितमात्रादिव स्पृहा ॥६२५॥ 625

असकृत्कृतयत्नः स ततः कालेन भूयसा । तं प्रैरयत्तत्र कृत्ये मध्ये स्वीकृत्य धम्मटम् ॥६२६॥

स द्रोहद्रोहसंकल्पजन्मना पाप्मना श्रितः । संमन्त्र्य पितरं हन्तुं तीक्ष्णान्प्रायुङ्क्त सर्वतः ॥६२७॥

शश्वत्स गोचरीभूतस्तेषां स्नेहलत्वस्पृशाम् । न घातितः सूनुना च वर्जिता न च तत्कथा ॥६२८॥

आप्तत्वं तीक्ष्णवर्गोथ प्रतिभेदभयाद्गते । तां विद्रशात्रद्ध एवाशु वार्तां राज्ञे न्यवेदयत् ॥६२९॥

बुद्ध्वा राजपुत्रस्तत्तस्मिन्नहनि जातभीः । भोक्तुं नागात्पितुः पार्श्वमपि दूतैः कृतार्थनः ॥६३०॥ 630

सोपि तस्मिन्ननायाते तत्रार्थे शान्तसंशयः । दिने तत्र मनस्तापान्नाभुङ्क्त सपरिच्छदः ॥६३१॥

सभ्रातृकस्य प्राप्तस्य प्रातर्दुःखं न्यवेदयत् । सुचिरं धक्कनस्याङ्के शिरो विन्यस्य सोरुदत् ॥६३२॥

उक्त्वा च धम्मटोदन्तं वक्तुं तस्य समर्पणम् । विधेहीत्यभ्यधाचापि तं भङ्गीभणितिक्रमैः ॥६३३॥

न कृताधिगमावावां कृत्यस्यास्येत्युदीर्य तम् । अभाषेतां भ्रातुरर्थे पुनस्तन्त्रङ्गनन्दनौ ॥६३४॥

त्वत्प्रसादबलाद्राजन्नापत्त्राणदीक्षितौ । यावावां तत्प्रवेशार्थं व्यक्तद्वारं निशास्वपि ॥६३५॥ 635

कथं नु पृथिवीपाल प्राप्ते प्राणात्ययक्षणे । निर्दोषो वा सदोषो वा ताभ्यां संत्यज्यतेनुजः ॥६३६॥ युगलकम् ॥

स्वामिद्रोहापवादश्च भवेत्तद्रक्षणाद्ध्रुवम् । देशत्यागं तदुत्सृज्य शरणं नान्यदावयोः ॥६३७॥

इत्यादि संभाव्य तयोः पादन्यस्तोत्तमाङ्गयोः । रुदित्वा गमनानुज्ञां कथंचित्पार्थिवो ददौ ॥६३८॥

पथि कश्चिदमुं हन्यान्मध्यीकृत्येति धम्मटम् । तौ विनिर्जग्मतुर्देशात्ततः सबलवाहनौ ॥६३९॥

तन्त्रङ्गजेषु यातेषु विविक्तीकृतमन्दिरः । सुतमानीय नृपतिः सान्त्वयन्निदमब्रवीत् ॥६४०॥ 640

आसंसारं जगत्यस्मिन्सर्वतः ख्यातकीर्तिना । जनकेनैव जन्यस्य प्रसिद्धिरुत्पाद्यते जनैः ॥६४१॥

पुत्र शीतांशुनेवात्रिं दिग्द्वीपख्यातकीर्तिना । भवता तु सुपुत्रेण मां जानात्यखिलो जनः ॥६४२॥

स त्वं गुणवतामग्र्यो निरर्गलयशा भवन् । असाधुसेव्यमध्वानं वद कस्मान्निषेवसे ॥६४३॥

पैतामहं निजं चार्थं यन्न तुभ्यं समार्पयम् । तत्र हेतुमनाकर्ण्य नासूयां कर्तुमर्हसि ॥६४४॥

रिक्तः स्वेभ्यः परेभ्यश्च प्राप्नोत्यभिभवं नृपः । इति निर्ध्याय हि मया क्रियते कोशरक्षणम् ॥६४५॥ 645

पुरप्रतिष्ठां निष्पाद्य क्षिप्त्वा राज्यधुरं त्वयि । वाराणस्यां गमिष्यामि नन्दिक्षेत्रेथ वा पुनः ॥६४६॥

तद्राज्यकोशयोः स्वामी बुभुक्षुर्न चिराद्भवान् । अतितात्पर्यतः कस्मादनार्योचितमीहसे ॥६४७॥

संभाव्यते त्वयि न तद्यन्ममावेदितं खलैः । यथार्थकथनात्तस्मात्कौलीनं विनिवार्यताम् ॥६४८॥

विशुद्धये करोत्वेष स्वकृतस्याप्रतिश्रवम् । स्नेहादितीर्ष्यस्तद्राजा साभिप्रायं वचोभ्यधात् ॥६४९॥

अपलापवचोमात्रं निनीषुस्तस्य हेतुताम् । जनप्रत्यायने सोभूद्यस्मात्क्षान्तिसमुत्सुकः ॥६५०॥ 650

हर्षस्तु साधुवादैस्तत्पितुः संपूज्य भाषितम् । वक्ष्याम्याप्तमुखे तत्त्वमित्युक्त्वा निर्ययौ बहिः ॥६५१॥

सामान्यप्रेरणादेषा चिकीर्षाभूदिति ब्रुवन् । स पितृप्रहितं दूतं ह्रीतः स्वावसथं ययौ ॥६५२॥

६२५. [1]) Thus corr. by $A_1$ from $A_1$ दुःशीलान्य°. ६२७. [1]) रं supplied by $A_3$. ६३०. [1]) Thus corr. by $A_3$ from $A_1$ °पुत्रस्तस्त°. ६३१. [1]) $A_1$ तत्रार्थेऽशान्त°. ६३३. [1]) Emended; A धम्मटो°.—[2]) Emended; A वुद्धा. ६३४. [1]) $A_4$ gloss धम्मटस्य. ६३५. [1]) यावावां तत्प्रवेशा supplied by $A_3$ in space left by $A_1$. ६३९. [1]) Emended; धम्मटम् supplied by $A_3$ in space left by $A_1$. ६४१. [1]) $A_4$ gloss पुत्रस्य. ६४४. [1]) $A_4$ gloss अनन्तदेवसम्बन्धिनं.—[2]) Emended with C; A समर्पयम्. ६४६. [1]) Thus R G C; A पुत्रः. ६५२. [1]) Emended; A सावसथं.

सुतं म्लानाननं वीक्ष्य पाणिभ्यां ताडयञ्शिरः । हा पुत्रेति वदन्राजा तस्याक्रन्दमदापयत् ॥६५३॥
हतेऽस्मिन्स्वशिरश्छिन्द्यामिति प्रोक्तवतः प्रभोः । निदेशाद्वेष्टयित्वैव तस्थुस्तद्वेश्म शस्त्रिणः ॥६५४॥
655 तीक्ष्णास्तु पिहितद्वाराः परिवार्य नृपात्मजम् । ऊचुः सुपरुषां वाचमेवं निश्चितमृत्यवः[1] ॥६५५॥
अस्मान्घृणी प्रमादी च विरुद्धं छद्म कारयन् । घातयित्वा दुराचार क्व जीवन्स्थातुमिच्छसि ॥६५६॥
रक्षिष्यति सुतं स त्वां स पिता रक्षितस्त्वया । ज्ञातेयं युवयोरस्ति वयमेव हताः पुनः ॥६५७॥
युध्यस्व मध्यगोऽस्माकं त्वां निहन्मोऽन्यथा वयम् । एवं सर्वप्रकारं ते व्यक्तं नास्त्येव जीवितम् ॥६५८॥
तां वार्तां भूपतेः श्रुत्वा व्याकुलस्यामतः स्थितः । हर्षान्तिकं दण्डकाख्यः प्रायान्निजमहत्तरः ॥६५९॥
660 तीक्ष्णैर्निजतया दत्तप्रवेशः स नृपात्मजम् । प्रसृत्योवाच मतिमानेवं सर्वान्विमोहयन् ॥६६०॥
क्षत्रियापुत्र जीवित्वा कल्पानल्पेतरानपि । कारणैरपि[1] गन्तव्यं नियमान्नियतेर्वशम् ॥६६१॥
तदेतस्मिन्समासन्ने मरणेऽव्यभिचारिणि । यदर्थं गृह्यते शस्त्रं स मानः पाल्यतां त्वया ॥६६२॥
कृतश्रुतः ख्यातयशा युवा सुक्षत्रियो भवान् । तदाहवविलम्बेन कार्यं किमिव पश्यसि ॥६६३॥
एतेषु सुसहायेषु मयि चाग्रेसरेऽधुना । विपत्तिर्विजयो वापि प्रतापिस्तव शोभते ॥६६४॥
665 उत्तिष्ठ नखकेशादियोजनं कारय द्रुतम् । वीरपट्टं बधानापि स्वःस्त्रीपरिणयस्रजम् ॥६६५॥
इत्युक्त्वा क्षुरकर्मार्थं राजपुत्रं सनापितम् । प्रावेशयत्पूज्यमानस्तीक्ष्णैराभ्यन्तरं गृहम् ॥६६६॥
न्यस्तासिधेनुर्हर्षेण दत्तझम्पः क्षणात्स्वयम् । पश्चात्प्रविश्य[1] तद्वेश्म चक्रे सुनिहितार्गलम् ॥६६७॥
ततः स राजस्थानीयं तमारादब्रवीद्वचः । रक्षितो राजपुत्रोऽयं क्रियतां स्वोचितं त्वया ॥६६८॥
भूतग्रहादिभवमौषधिभिर्विरोधिजातं बलैः प्रहरणप्रभवं तनुत्रैः ।
निर्वाप्यते प्रतिभयं पृथिवीपतीनां सार्वत्रिकं तु रभसाद्भुवि बुद्धिवृद्धैः ॥६६९॥
670 नदन्तस्तुमुलं योधास्ततो राजगृहास्पदे । आरोढुमाययुर्वप्रहर्म्यादि प्रविविक्षवः ॥६७०॥
तीक्ष्णा दृढद्वारगृहस्थितं त्यक्त्वा नृपात्मजम् । यावन्निर्गन्तुमिच्छन्ति हन्यमाना युयुत्सवः ॥६७१॥
द्विजाः प्रसङ्गसांनिध्यान्मध्यपातं समाश्रिताः । तावद्विनिर्ययुर्वीरा निर्द्रोहा अभिमानिनः ॥६७२॥
ते निर्याताः सूर्यमतीगौरीशाभ्यर्थिणो गृहात् । सदाशिवान्तिकं प्रापुर्घ्नन्तो युधि विरोधिनः ॥६७३॥
रक्ष्यमाणोऽपि भूभर्तुर्गिरा ज्ञातेयशालिनः । राजज्ञातिर्हतस्तेषु प्रथमं सहजाभिधः ॥६७४॥
675 द्विजस्तिव्याभिधो वीरः पण्डितः शौर्यमण्डितः । रामदेवश्च केशी[1] च कर्णाटोऽरिभटैर्हतः ॥६७५॥
केचित्त्यजन्तः शस्त्राणि स्वं घ्नन्तः केऽपि च स्वयम् । लेभिरे वधबन्धादि पापाः कापुरुषोचितम् ॥६७६॥
सितषष्ठ्यां सहस्यस्य चतुःषष्टे स वत्सरे । वैरं नीत्वा पितापुत्रौ विप्लवः कारितो विटैः ॥६७७॥
हठत्यागासक्तिः प्रिययुवतिसंप्रेरणवचः खलासङ्गः पूर्वप्रणयपरिहारो जनयितुः ।
अमात्येन भ्रात्रा सममपरमाशाथ कलहः कुमाराणां बुद्धिं पितरि विपरीतां प्रतनुते ॥६७८॥
एवं स खलसंगत्या कुमारो लब्धलाघवः । बन्धं कारागृहे प्रापदसुखानि सुखोचितः ॥६७९॥

६५५. [1]) A$_4$ gloss स्वकीया एव पूर्वं राजवधं प्रति प्रोत्साहिताः. ६६१. [1]) A$_2$ gloss कारणानि ब्रह्मादीनि पञ्च. ६६७. [1]) Fol. 166 of A ends with पश्चात्प्र; fol. 167 which ended with verse 688, is now lost. ६७५. [1]) Thus R; G केशाश्च.

राज्ञी भुवनमत्याख्यस्मिन्बद्धे माध्यस्थ्यसंविदि । स्थापिता मानिनी कण्ठच्छेदं कृत्वा जहावसून् ||६८०|| 680

रक्षिणो मन्त्रिणामाप्तांस्तस्य विन्यस्य भूपतिः । प्राहिणोद्वुत्तिनान्भोगान्स्तुतस्नेहार्हिने दिने ||६८१||

चक्रिकायामशक्तोयमिति संचिन्त्य भूभुजा । भृत्यः प्रयागनामास्य निजः पार्श्वान्न वारितः ||६८२||

नोनको हर्षमुद्दिश्य स्वेनान्यैश्च महीभुजम् । जीवितं लोचने वास्य कृष्येतामित्यभाषत ||६८३||

नृपः स शीलवैकल्ये पशुतुल्ये ह्रियं त्यजन् । रिपोरिव तनूजस्य चकमे कतिचित्प्रियाः ||६८४||

तासु श्वशुरवाल्लभ्यमवाप्य सुगलाभिधा । बभूव तुक्कभूभर्तृनप्त्री भर्तृवधार्थिनी ||६८५|| 685

संमन्त्र्य नोनकः सा च द्वौ सूदावशनान्तरे । रसं प्रदातुं हर्षस्य पापं प्रैरयतां ततः ||६८६||

अन्यसूदमुखाद्वार्तां प्रयागस्तामवाप्तवान् । प्रभुं तद्दाप्यमानान्नपरिहारमकारयत् ||६८७||

तेनान्नेनं परीक्षार्थं दापितेनापजीवितौ । हर्षः श्वानौ निशम्याभून्निराशो निजजीविते ||६८८||

प्रयुक्तिं गूढदण्डस्य पितुरेव स तां विदन् । ततः सर्वाणि भोज्यानि स्पृष्ट्वैवोज्झीद्दिने दिने ||६८९||

प्रयागोपहृतेनासीत्परं बाह्येन सर्वदा । भोज्येन येन केनापि कुर्वञ्जीवितधारणम् ||६९०|| 690

अन्नस्याभोजनं भुक्त्वा राजा सूदैर्निवेदितम् । ततः प्रयागमानीय तत्र पप्रच्छ कारणम् ||६९१||

प्रयोजकौ च सूदौ च सोपलभ्य न्यवेदयत् । रसार्पणकथां कृत्स्नां तज्ज्ञानं च स्वयं प्रभोः ||६९२||

अथान्येष्वपि सूदेषु पित्रा दत्तेषु शङ्कितः । राजसूनुर्न बुभुजे प्रयागोपहृतं विना ||६९३||

स सर्वेषु विरुद्धेषु यद्यत्तत्रात्यवाहयत् । मेने तत्तद्दिनं लब्धं शेषेष्वास्थापराङ्मुखः ||६९४||

अत्रान्तरे समुदभूदकस्मान्नाशसूचकः । अदृष्टपूर्वो भूभर्तुः सदाचारविपर्ययः ||६९५|| 695

उत्पाद्य ताम्रस्वाम्याख्यं पूर्वं ताम्रमयं रविम् । स रीतिप्रतिमाः स्वैरं विहारेभ्योप्यपाहरत् ||६९६||

धनानि निरपत्यानामाहर्तुं व्यवसायिना । न्यवार्यतार्यमर्यादा क्रौर्याक्रान्तेन भूभुजा ||६९७||

ततोतिशापसंतापव्यञ्जकेनाञ्जसाभवत् । अतिसंभोगजातेन धातुक्षैण्येन सोर्दितः ||६९८||

कुम्भप्रतिष्ठासंभारं चिकीर्षोर्हरमन्दिरे । तस्यापतन्महाकालकुम्भे नासापुटादसृक् ||६९९||

आकस्मिकं दुर्निमित्तं तत्प्रतीकारसंविदा । न मनागप्यगाच्छान्तिं प्रवृद्धिं प्रत्युताययौ ||७००|| 700

असन्नस्त्यनुबन्धेन तेन ग्लपितसौष्ठवः । शनैः शय्याप्रणयितामन्तः स प्रत्यपद्यत ||७०१||

बलमांसकृतक्षैण्यमभिमानपाशुपत्रवैः । कलांशशेषेण शशिना तद्वपुः साम्यमाययौ ||७०२||

राज्यं स दित्सुर्हर्षाय दृष्ट्वामात्यान्पराङ्मुखान् । ततोभिषेकमौत्कर्षमानिन्ये लोहराचलात् ||७०३||

उच्चावचास्तेन सर्वे संविभक्ता मुमूर्षुणा । परमीर्ष्याविधेयेन न भुद्धान्तवधूजनः ||७०४||

कृत्वा धनार्पणं कुर्यां देशादस्य प्रवासनम् । इत्युक्त्वा हर्षमानेतुं तेनाप्रार्थ्यन्त मन्त्रिणः ||७०५|| 705

ते तु गोभृन्निवार्याद्यांष्ठकुराल्लोहराश्रितान् । विन्यस्य रक्षिभावे तमुत्कर्षाय न्यवेदयन् ||७०६||

स नाद्यमण्डपात्तेन निष्कृष्टः क्षामविग्रहः । निवेशितश्चतुःस्तम्भे बद्ध्वा बान्धववर्जितः ||७०७||

अथोज्जिगमिषून्प्राणान्निःसामर्थ्यो विदन्नृपः । मुमूर्षुरभवत्तीर्थप्रस्थानाय कृतत्वरः ||७०८||

---

६८०. ¹) Thus R G *sec. manu*; C G *prima manu* मध्यस्थ°. ६८५. ¹) Emended, G R °भूभर्तृनप्तृभर्तृवधार्थिनी; C °भूभर्तृनप्तृभर्तृवधा°. ६८६. ¹) Thus G C; R रसे. ६८८. ¹) Thus emended with C; A R G तेनात्तेन. ७०१. ¹) Emended, A असु. ७०६. ¹) Emended with C; A गोभृद्भि°. ७०८. ¹) Emended with C; A अथोजग°.

स जानन्दैवतक्रोधं ताम्रस्वामिविपाटनात् । इयेष शरणं कर्तुं मार्ताण्डं प्राणलब्धये ॥७०९॥

710 संत्यज्य विजयक्षेत्रमत एवापवर्गदम् । महीश्वरोपि प्रययौ तत्र त्रासवशंवदः ॥७१०॥

अधीकारप्राप्त्या तृणमिव विदन्विश्वमखिलं नियोगी जातार्तिर्नमति गृहदासीरपि रुदन् ।

नदन्मूर्खो ज्ञानी बहुदुरुपदेशा॑धिगमतः करोति प्राणान्ते शिशुरिव च किं किं न विगुणम् ॥७११॥

तादृश्या कृपणप्रायसेव्यया क्लैब्यसंविदा । गुरूपदेशाहंकारस्तस्य हास्यत्वमाययौ ॥७१२॥

शुक्लायां मार्गशीर्षस्य तृतीयस्यां निशामुखे । तत्रादेवाश्रितो युग्यं भूभृन्मर्तुं विनिर्ययौ ॥७१३॥

स भेरीतूर्यनिर्घोषैर्जनाक्रन्दं तिरोदधत् । सामात्यान्तःपुरो नौभिः प्रतस्थे जलवर्त्मना ॥७१४॥

715 यामशेषे दिनेन्यस्मिन्प्राप्तस्य चरणान्तिके । मार्ताण्डस्य स्वजीवाप्त्यै सौवर्णी प्रतिमां व्यधात् ॥७१५॥

भृत्यैरगणिताज्ञस्य दिदृक्षोर्ज्येष्ठमात्मजम् । औत्सुक्येनारतिस्तस्य व्यथितस्याधिकाभवत् ॥७१६॥

बहिर्हर्षकृतं गीतं गायनानां स गायताम् । विवृतद्वारविवरः शृणोति स्म विनिःश्वसन् ॥७१७॥

प्राणावसानसमये परिसंकुचन्ती स्वप्नप्रसङ्ग इव धावनशक्तिराशा ।

प्राचुर्यदा खलु रुजो मरणोद्भवाया मर्मव्यथां प्रथयते पृथिवीपतीनाम् ॥७१८॥

प्रजाज्येष्ठं तनूजं च संविभक्तुं कृतार्थनः । उत्कर्षं माहयञ्शिक्षां बद्धजिह्वोभवत्ततः ॥७१९॥

720 अव्यक्तं वदतो हर्ष इति वाचं पुनः पुनः । निह्नोतुं नोनको भावं तस्यादर्शमढौकयत्[1] ॥७२०॥

स तन्निवार्य विहसन्दष्टौष्ठः कम्पयञ्शिरः । जपन्किमपि सार्धे द्वे बद्धवागभवद्दिने ॥७२१॥

आसन्नप्राणनिर्याणः संज्ञयाहूय मन्त्रिणः । ततः स्वं तैरसंमूढैर्मार्ताण्डाग्रमनाययत् ॥७२२॥

वर्षानेकान्नपञ्चाशद्भुक्तवान्स सितेहनि । मार्गस्य पञ्चषष्टेब्दे षष्ठ्यां निष्ठामथासदत् ॥७२३॥

सप्त मम्मनिकामुख्या देव्यः परिणयाहृताः । अवरुद्धापि जयमत्यभिधाना तमन्वगुः ॥७२४॥

725 प्रसादवित्तया तस्य पुनः कय्याभिधानया । अवरुद्धिकया कृत्स्ना स्त्रीजातिरपवित्रिता ॥७२५॥

सर्वावरोधप्राधान्यप्रदानं नास्मरद्यदि । मा स्मार्षीन्नाम भर्तुस्तदनुव्राभिजनोद्भवा ॥७२६॥

संश्रित्य विजयक्षेत्रं क्रमाद्ग्रामनियोगिनः । भेजे यस्त्ववरुद्धात्वमतो दुःखाकरोति नः ॥७२७॥

भूपालभोग्यं स्ववपुः सा भोगाभ्यासभासुरम् । निनाय ग्राम्यभोग्यत्वं धिङ्नारीर्नीचचेतसः ॥७२८॥

उत्कर्षस्याभिषेकाय व्यग्रेष्वखिलमन्त्रिषु । अन्त्येष्टिमकरोद्राज्ञः कृतज्ञो वामनः परम् ॥७२९॥

730 घोषोभिषेकतूर्याणामेकतो गीतमङ्गलः । साक्रन्दः प्रेततूर्याणां नादोन्यत्र समुद्ययौ ॥७३०॥

जातः पद्मश्रियो देव्याः पुत्रः कलशभूभुजा । ततो विजयमल्लाख्यो भ्रातुर्वैमत्यमादधे ॥७३१॥

यददाद्धर्षदेवस्य पिता प्रत्यहवेतनम् । प्रतिभुभाव तस्मै स तदेवोत्कर्षभूपतिः ॥७३२॥

आश्वासाय च मध्यस्थान्ददौ सामन्तमन्त्रिणः । कय्यात्मजस्य चक्रे च जयराजस्य वेतनम् ॥७३३॥

अन्विष्यन्ति रुदत्य एव तरला गत्यन्तरं योषितो योगक्षेमकथां चितान्तिकगता एवात्मजाः कुर्वते ।

अन्येषां शतशोवसानसमये चर्चां विचार्येदृशीं स्त्रीपुत्रादिकृते कुकर्मभिरहो संचिन्वतेर्थं जडाः ॥७३४॥

७११. [1]) Emended with C; A °देशोधि°. ७२०. [1]) A₂ gloss हर्ष आनीयतामिति राज्ञो भावमभिप्रायं निह्नोतुं आदर्शो नोनकेनानीत इत्यर्थः हर्षः आदर्श इति पाठमात्रसाम्यादित्यर्थः. ७२४. [1]) A₂ gloss उरखा इति देशभाषया. ७२९. [1]) Emended with C; A अन्तेष्टि°. ७३१. [1]) ज supplied by A₃. ७३२. [1]) Emended; A तदेवो°.

प्रविवेश ततः श्रीमान्नगरं नृपतिर्नवः । न तु हर्षोदयाकाङ्क्षि हृदयं नगरौकसाम् ॥७३५॥ 735

तद्राज्यलाभदिवसो जनस्याभोगदूषितः । सन्नपि प्रत्यभान्नैव स रोगार्तेरिवोत्सवः ॥७३६॥

हर्षदेवस्तु पितरि प्रयाते मर्तुमातुरे । नवबद्धचतुःस्तम्भे न तस्मिन्नह्नि भुक्तवान् ॥७३७॥

सार्थभ्रष्टमिवाध्वन्यमन्यस्मिन्नह्नि ठक्कुराः । ते शोकमूकं संप्रार्थ्य कथंचित्तमभोजयन् ॥७३८॥

राज्यं दातुं निजे देशे चक्रुश्चास्य प्रतिश्रवम् । राज्यद्वयं नायमर्हत्येक एवेति वादिनः ॥७३९॥

एवं मिलितचित्तैस्तैर्विपत्तिं श्रुतवान्पितुः । कृतोपवासः सोन्येद्युः शुश्रावोत्कर्षमागतम् ॥७४०॥ 740

बाष्पैः पित्रे प्रयच्छन्तं निर्वापसलिलाञ्जलीन् । तं दूतैरनुजो राजा स्नातुं प्रार्थयताथ सः ॥७४१॥

तस्य स्नानक्षणे राज्ञि सज्जे राज्याभिषेचने । घोषोभिषेकतूर्याणामुदभूत्सजयध्वनिः ॥७४२॥

स तेन सुनिमित्तेन प्राप्तां मेने निमित्तवित् । विद्युद्योतेन जीमूतगर्जामिव नृपश्रियम् ॥७४३॥

ततः प्रभृत्युन्मुखता सुनिमित्तैरगृह्यत । तस्यात्यासन्नराज्यस्य भृत्यैरिव दिने दिने ॥७४४॥

स भोजनं कारयितुं दूतान्भ्रात्रा विसर्जितान् । देशान्निर्वासयतु मां राजा संत्यज्य बन्धनात् ॥७४५॥ 745

स्थातुमप्रत्ययस्थित्यां विदध्यां कोशसंविदम् । म्रियेऽन्यथा निरशनैः संदिश्येति व्यसर्जयत् ॥७४६॥

स तन्मिथ्या प्रतिश्रुत्य तं दूतैः प्रहितैस्ततः । कृतकोशं सान्त्वयित्वा राजा भोज्यमभोजयत् ॥७४७॥

नित्यं च श्वो विधास्ये तदर्थ्यमान इति ब्रुवन् । कालापहारं कुर्वाणः शङ्कां तस्योदपादयत् ॥७४८॥

विश्वासाय स्वताडङ्कपार्ष्णिं कृत्वा प्रयागकम् । पार्श्वं विजयमल्लस्य सोथ गूढं व्यसर्जयत् ॥७४९॥

तदेवोक्त्वा तमूचे स त्वां वृते दुःस्थितोग्रजः । कुमारे त्वयि राज्येस्मिन्नभ्युच्यामो बन्धने वयम् ॥७५०॥ 750

संक्रान्तदुःखः संचिन्त्य चिरेणापि तमब्रवीत् । कार्यं कुर्यात्कथमिदं मद्गिरा नीतिमान्नृपः ॥७५१॥

तथाप्यस्मिन्यथाशक्ति यतिष्ये त्वद्विमोक्षणे । त्वया तु सावधानेन रक्षणीयं स्वजीवितम् ॥७५२॥

तं पार्श्वं हर्षदेवस्य संदिश्येति व्यसर्जयत् । उपायांश्चिन्तयन्नासीत्तस्य कार्यस्य सिद्धये ॥७५३॥

उत्कर्षः प्राप्तराज्यस्तु दैवतैरिव मोहितः । नादधे किंचिदारम्भं व्यवस्थामथनक्षमम् ॥७५४॥

समर्पिताधिकारोपि कन्दर्पादीन्स मन्त्रिणः । राज्यकृत्यं न पप्रच्छ विदधे स च न स्वयम् ॥७५५॥ 755

परिमातुं परीमाणं कोशसंचयवीक्षणे । परं क्ष्मापतेस्तस्य दिनकृत्यमजायत ॥७५६॥

कर्मणा निर्व्ययेनास्य चिन्त्यमानस्य येन वा । सुदीर्घदर्शी लोकोभूत्तेन लुब्धत्वनिश्चयी ॥७५७॥

सा तस्य लुब्धताख्यातिः समुद्राचप्रदायिनः । भूभर्तुः पितृपत्नीभिः स्वैरिणीभिः प्रवर्धिता ॥७५८॥

स श्रोत्रिय इवोत्कम्पी व्यवहारमिताशयः । महाहृदयभोग्यानां प्रजानां नाभवत्प्रियः ॥७५९॥

ततो नियमितां वृत्तिं तस्माल्लुब्धादनाप्नुवन् । कुप्यन्विजयमल्लोभूद्देशान्गन्तुं कृतोद्यमः ॥७६०॥ 760

स्वं रक्षितुं स मध्यस्थाननुव्रज्याकृतेखिलान् । प्रार्थयामास तेनापि सज्जास्तमनुवव्रजुः ॥७६१॥

लवणोत्से निशामेकां पुरान्निर्गत्य तस्थुषः । मध्यस्थसैन्यास्तस्यैव योधाः पक्षमशिश्रियन् ॥७६२॥

---

७३७. 1) Thus corr. by $A_3$ from $A_1$ °नस्मि. ७४२. 1) Thus corr. by $A_3$ from $A_1$ राज्यास्तसन्न°. ७४६. 1) स्था supplied by $A_2$ in space left by $A_1$. ७४८. 1) Emended; A °दर्थमान. ७४९. 1) ताड supplied by $A_2$ in space left by $A_1$. ७५७. 1) येन वा supplied by $A_2$ in space left by $A_1$. ७५९. 1) $A_2$ gloss उत्कम्पी दानसमये सकम्प इत्यर्थः. ७६१. 1) $A_4$ gloss हेतुना. ७६२. 1) मध्यस्थ supplied by $A_2$ in space left by $A_1$. —2) Thus corr. by $A_2$ from $A_1$ °स्तस्या –.

हर्षे बद्धे त्वयि गते कृतकृत्यो भवेन्नृपः । तत्तं निष्कृष्य कारायां गमनं तव सांप्रतम् ॥७६३॥
इति तैः प्रेर्यमाणः स राजसूनुरुदायुधैः । विनिवृत्याकरोद्यात्रां प्रत्यूषे नगरोन्मुखः ॥७६४॥
765 श्रुत्वा चिकीर्षितं तस्य व्यावृत्तस्य तथाविधम् । सहायाः समपद्यन्त कतिचिड्डामरा अपि ॥७६५॥
अकरोन्मधुरावर्तो हयसेनापतिः सुतम् । राजसूनुर्यियासुर्यं मध्यस्थाननुयात्रिकम् ॥७६६॥
नागाह्वयो द्रोहहीनो राजपक्षमसंत्यजन् । कैश्चित्सह हयारोहैः स पद्मपुरवर्त्मना ॥७६७॥
आगच्छन्नन्तिकं राज्ञो दुर्निमित्तहतत्वरः । न यावन्नगरं प्राप क्षिप्रकारी नृपात्मजः ॥७६८॥
शकुनैराहितोत्साहः शालामोद्दीपितामिभिः । सैन्यैर्गृहान्दहंस्तावद्राजधानीमवेष्टयत् ॥७६९॥ चक्कलकम् ॥
770 समयाय विनिर्यातं त्यक्तोत्कर्षं महीभुजम् । तत्पक्षं जयराजोपि राजसूनुरशिश्रयत् ॥७७०॥
हस्तस्थितौ राजपुत्रौ तस्याचिन्तयतां गतिम् । नवौ कवी व्यवहर्तिं सिद्धवाचः कवेरिव ॥७७१॥
हर्षदेवे परित्यक्ते यास्याम इति वादिनः । स हस्तिमहिषादीनां शालाः सैन्यैरदाहयत् ॥७७२॥
त्यागप्रलयजीमूतो हर्षदेवोभिषिच्यताम् । लुब्धः खशो वणिक्प्रायो राज्यादेष निवार्यताम् ॥७७३॥
एवं वदन्तः सन्तोपि हर्षमेत्य पुरौकसः । पुष्पैः प्राच्छादयन्बद्धं तमोरिविवरार्पितैः ॥७७४॥
775 उत्पिञ्जे तत्र संजाते भग्नसैन्यस्य भूपतेः । संप्रेष्य ठक्कुरान्हर्षस्तटस्थं तद्बलं व्यधात् ॥७७५॥
इत्थं बद्धोपि तत्कृत्वा वैरिकार्याविरोधिनः । संदेहवेपमानाङ्गस्ततस्तानेवमब्रवीत् ॥७७६॥
वर्तेथ संकटे दुष्टे तन्मां मुञ्चत बन्धनात् । न चेदाशु महीपालादनिष्टं नियमाद्भवेत् ॥ ७७७॥
इत्युच्यमानास्ते यावद्विमृशन्ति स्म तन्मुहुः । पादप्रहारा न्यपतंस्तावद्द्वारगृहाद्बहिः ॥७७८॥
उच्चचार स किं द्रोहः प्रक्रान्तोयं दुराशयैः । रे ठक्कुरा विवृणुत द्वारमित्युच्चकैर्वचः ॥७७९॥
780 ठक्कुरेष्वथ भीतेषु धैर्यादगणयन्भयम् । अकारयद्धर्षदेव एव द्वारमपावृतम् ॥७८०॥
नेत्रमात्रस्थितप्राणो ददर्श विशतस्ततः । लौहरान्शस्त्रिणो हन्तुं प्राप्तान्षोडश वारिकान् ॥७८१॥
ते हि छिन्नेोज्झिते हर्षशीर्षे सर्वमिदं क्षणात् । शाम्येदिह भयं मन्त्वं नोनकस्येति जल्पतः ॥७८२॥
उत्कर्षेणासकृच्छ्रुत्वा तं निहन्तुं विसर्जिताः । विमृश्य चोक्ता गच्छन्तः कार्यशेषं विमुञ्चता ॥७८३॥
कदाचित्तेन कृत्यं स्यादहतेनेति तत्क्षणम् । निवार्य ठक्कुरान्रक्ष्यो हन्तव्यश्च यदोर्मिकाम् ॥७८४॥
785 इमां दद्यामभिज्ञानं यदा चेयं विसृज्यते । तदा तु बन्धनात्त्याज्य इत्युदीर्याङ्गुलीयकम् ॥७८५॥
पाणौ दर्शयता चोक्ता विलम्बालम्बनं यतः । निवार्य ठक्कुरांस्तस्मिन्क्षिप्रं न प्राहरंस्ततः ॥७८६॥ कुलकम् ॥
स तु प्रत्येकमाहूय नामग्रहणपूर्वकम् । अजिग्रहत्तांस्ताम्बूलमप्युपावेशयत्पुरः ॥७८७॥
जहुस्ते कृतसत्कारास्ताम्बूलग्रहणक्षणे । ह्रीताः करामाच्छस्त्राणि प्रजिहीर्षां च मानसात् ॥७८८॥
धत्ते श्रियं सृजति कीर्तिमघं लुनीते मित्रत्वमानयति हन्त विरोधिनोपि ।
यात्यध्वभिः प्रतिपदं सुमनोनुकूलैर्गीः कामधुक्कमिव नापहरत्यनर्थम् ॥७८९॥
790 राजपुत्रः स तानूचे किं ह्रीता इव तिष्ठथ । निर्दोषाः सर्वथा प्रेष्याः स्वाम्यादेशानुपालने ॥७९०॥

---

७७०. [1]) Thus corr. by A₃ from A₁ त्यक्तोत्क°. ७७६. [1]) Emended; A वैरि—वि°; C वैरिकानवि°. ७८१. [1]) Thus A; R °वारिकान्.

विलम्ब्यतां तथाप्यत्र द्रष्टव्यं महदद्भुतम्[1] । यथोदेष्यत्य[2]वस्थानामन्यथात्वं क्षणे क्षणे ॥७९१॥

द्विपद्वीपिक्रव्यादुरगतुरगादिभ्रमकृतो यथास्यां भिद्यन्ते दिवि किल त एवाम्बुदलवाः ।
तथा सौम्यक्रूरक्रमविकृतिभाजस्तनुभृतां क्षणानां नानात्वाद्ननु हृदि विकारोर्मय इमाः ॥७९२॥

क्षणानुवृत्तिं कुर्वाणास्तद्यथात्र स्थिता वयम् । तथा सन्तु भवन्तोपि कार्यान्तरदिदृक्षवः ॥७९३॥

अपि नैवंविधा एव वितन्वन्तो रसान्तरम् । आसन्नराज्यप्राप्तीनां राज्ञां स्युः प्राणसंशयाः ॥७९४॥

भीष्मस्योष्मा व्रजति घनतां नूनमासन्नवृष्टेर्नैशं गाढीभवति तिमिरं संनिकृष्टप्रभातम्[1] ।
जन्तोरेवं प्रसभविभवस्फारसंपत्प्रचारान्निष्क्रामन्ती विपदुपचितोपद्रवोद्रेकमेति ॥७९५॥ 795

प्राणचारेण शकुनं निश्चित्येति वदन्सताम् । आचचक्षे शुभोदर्काः[1] स्वोदन्तसदृशीः कथाः ॥७९६॥

कालं क्षेप्तुमुपन्यस्तशुद्धिव्यक्तीभवद्रसाम् । तेभ्यश्च कथयामास हरिश्चन्द्राश्रयां कथाम् ॥७९७॥

तद्भञ्जने स्वरक्षायां बाह्यवार्तागवेषणे । व्यापृतत्वं गभीरस्य न तस्य समलक्ष्यत ॥७९८॥

अत्रान्तरे तमुद्दिश्य मते जाते नवे नवे । राजभियश्च काल्यार्थं[1] शतशोभूस्तदागतम् ॥७९९॥

उत्कर्षो भूमिपस्तस्य परित्यागं ह्यमन्यत । आदिदेशानुगांस्तांस्तान्भूरिशश्च प्रमापणे ॥८००॥ 800

अभिज्ञानोर्मिकादानं वधादेशे तु नास्मरत् । ते नोर्मिकां तस्य दूतानामन्वतिष्ठन्त रक्षिणः ॥८०१॥

स तान्वन्ध्यश्रमान्वीक्ष्य स्मृत्वाभिज्ञानसंविदम् । सत्वात्मजं राजपुत्रं भूराख्यं[1] व्यसृजत्ततः ॥८०२॥

अभिज्ञानं वितरतस्तत्करे तस्य मुह्यतः । दैवयोगात्क्षणे तस्मिन्नूर्मिकाव्यत्ययोभवत् ॥८०३॥

यः[1] पातार्थमुपार्जितोन्यशिरसस्तेनैव सिन्धुप्रभुर्वृद्धक्षेत्रधराधवः स्वशिरसः पातं वरेणान्वभूत् ।
दिव्या स्वैव गदा श्रुतायुधनृपं हन्तावधीदाहवे यत्त्राणाय विगण्यते विधिवशात्तेनैव नाशो भवेत् ॥८०४॥

तथा नैकस्य विस्मृत्या व्यत्ययेनापरस्य च । अभिज्ञानस्य स नृपो नाशं प्रत्युत लब्धवान् ॥८०५॥ 805

आभिजन्येन[1] हर्षस्य ते क्षणादेव रक्षिणः । प्रपेदिरे हितैषित्वमुत्कर्षाज्ञाविरोधिनः ॥८०६॥

द्वारमाक्रान्तमुत्क्रोधो वधायायमुपागतः । इति निर्ध्याय ते भूरं हन्तुमैच्छन्नुदायुधाः ॥८०७॥

उद्घाटितारपुटा दृष्ट्वा तस्योर्मिकां करे । तेनैव सार्कं नृत्यन्तो[1] हर्षं समुपतस्थिरे ॥८०८॥

पादन्यस्तोत्तमाङ्गैस्तैर्निर्गच्छेत्यर्थितस्ततः । अविश्वसन्राजसूनुः क्षणमासीत्स चिन्तयन् ॥८०९॥

तस्मिन्क्षणे हर्षदेवं हतं ज्ञात्वा रणे स्थितः । क्रुध्यन्विजयमल्लोभूदधिकोद्रिक्तपौरुषः ॥८१०॥ 810

तं दग्धुमुद्यतं राजधानीं जीवति तेमजः[1] । अभिधायेति रुरुधुः कथंचित्पार्थिवानुगाः ॥८११॥

प्रत्ययार्थं ततस्तस्य राज्ञा हर्षवधूर्द्रुतम् । गृहीतभर्तृताडङ्का सुगला प्रैष्यतान्तिकम् ॥८१२॥

तां विलोक्यैव विरते वह्निदाहान्नृपात्मजे । राजा भयप्रतीकारं हर्षत्यागादमन्यत ॥८१३॥

गत्वामात्याः स्वयं जोनप्रशस्तकलशादयः । हर्षं निर्निगडं कृत्वा कारागारात्ततोत्यजन् ॥८१४॥

---

७९१. [1]) Thus corr. by later hand from $A_1$ °द्भुताम्.—[2]) देष्यत्य supplied by $A_3$ in space left by $A_1$. ७९५. [1]) Thus corr. by $A_1$ from °प्रतापम्; $A_3$ °प्रभाते. ७९६. [1]) Thus corr. by $A_3$ from $A_1$ शुभोद°. ७९९. [1]) $A_3$ gloss काली यमस्त्री. ८०२. [1]) Doubtful; thus A R G. ८०४. [1]) $A_2$ gloss यः पातार्थमिति एतद्वृत्तद्वयोपाख्यानं महाभारते द्रोणपर्वणि ज्ञेयम्. ८०६. [1]) $A_3$ gloss आभीजन् इति देशभाषया. ८०८. [1]) र्कं नृत्यन्तो supplied by $A_3$ in space left by $A_1$. ८११. [1]) Emended; A R G तेनुजः.

815 मन्त्रः स तेषां शोकेन वक्त्रात्कृतगतागतः । अन्त्यक्षणे श्वास इव प्रससार बहिश्चरन् ॥८१५॥

हर्षः प्रच्छाद्यमानस्तु पौराणां पुष्पवृष्टिभिः । हयमारुह्य सामात्यो रणस्थं नृपमासदत् ॥८१६॥

अभिनन्द्यानुजो राजा तमूचे भ्रातरं रणात् । निवार्यागम्यतां कुर्मः प्राप्तकालं ततो वयम् ॥८१७॥

तथेति प्रस्थिते तस्मिंस्त्यक्त्वा तत्स रणाजिरम् । प्राविशन्मन्त्रिभिः सार्धं कोशं हेमादिसंश्रयम् ॥८१८॥

उत्तीर्णं महतः कृच्छ्राद्धर्षदेवमुपस्थितम् । दृष्ट्वा विजयमल्लोभूत्प्रहर्षान्निष्क्रियः क्षणम् ॥८१९॥

820 ततो ववन्दे तत्पादौ स चोत्क्राम्या[1]लिलिङ्ग तम् । तास्ताः कथास्तयोरासन्नुपकर्त्तु[2]पकार्ययोः ॥८२०॥

व्यापादयैनमेवादौ हर्षोत्कर्षं ततो नृपः । निष्कण्टकोसि भवितेत्याप्तस्योपांशु जल्पतः ॥८२१॥

ततो विजयमल्लेन नाद्रोहेणादृतं वचः । ज्ञात्वेङ्गितज्ञो हर्षस्तत्ततस्तु चकितः क्षणम् ॥८२२॥ युग्मम् ॥

स्वदेहमामिषीभूतं स भ्रात्रोः श्येनयोरिव । निष्पत्त्रपक्षप्रतिमो ररक्षार्वगतश्चरन् ॥८२३॥

आसन्नाभ्रजलस्य दावविगमे विद्युद्भयं शाखिनो नक्रास्याद्गलतश्च मज्जनमयी शङ्का भवेद्वारिधौ[1] ।
भोक्तव्यस्य विधिः शुभस्य रभसात्स्वादुत्वनिष्पत्तये जन्तोः संतनुते निराकृतभियो भीत्यन्तरोत्पादनम् ॥८२४॥

825 तं हयभ्रमणव्याजाद्रक्षितुं निजजीवितम् । ज्ञातवार्ता निजाः केचित्पत्तयः पर्यवारयन् ॥८२५॥

साकं विजयमल्लेन ततः संमन्त्र्य स क्षणात् । चचाल विप्रवापायमाख्यातुं तं महीभुजे ॥८२६॥

भयं तद्वेश्मनः प्राप्तं विनिर्यान्तं नृपात्मजात् । ततो विजयसिंहस्तं संप्रवेशाद्व्यवारयत् ॥८२७॥

ऊचे च मरणात्तीर्णो मर्तुं विशसि किं पुनः । निष्प्रज्ञ गत्वोपविश त्यक्तशङ्कं नृपासने ॥८२८॥

एवमुक्तवतस्तस्य भृत्यैः कोशादुपाहृते । सिंहासने हर्षदेवस्ततस्तूर्णमुपाविशत् ॥८२९॥

830 वैयात्यच्छादितानन्तप्रातिकूल्या तदन्तिके । उपाविशच्च सुगला महादेवीत्वसिद्धये ॥८३०॥

तस्याभिषेकशब्देन समघट्यन्त सर्वतः । रसितेनाम्बुवाहस्य चातका इव मन्त्रिणः ॥८३१॥

तद्वार्ताश्रवणेनार्तमुत्कर्षं मन्दिरात्ततः । धूर्तो विजयसिंहोपि कृष्ट्वान्यमनयद्गृहम् ॥८३२॥

आस्थानस्थस्य भूभर्तुरग्रेण स मितानुगः । नष्टश्रीर्ददृशे गच्छन्स्थिराः कस्य विभूतयः ॥८३३॥

तस्य वेश्मप्रविष्टस्य बहिर्विन्यस्य रक्षिणः । राज्ञो विजयसिंहस्तत्कृतं कार्यं न्यवेदयत् ॥८३४॥

835 कारायां संस्तुतान्राजपार्श्वमानीय ठक्कुरान् तत्सैन्येप्रस्थितेत्याशीघ्र्यं विजयमल्लतः ॥८३५॥

सोप्यग्रजं प्राप्तराज्यं श्रुत्वा तत्सविधं व्रजन् । निन्ये संमान्य तद्दूतैः स्वामेव वसतिं क्षणात् ॥८३६॥

तत्सैन्यं स्वान्तिकं प्राप्तमथ वीक्ष्य क्षमापतिः । आनिनाय तमभ्यर्णं क्षणमात्रेण नीतिवित् ॥८३७॥

मह्यं प्राणाश्च राज्यं च त्वया दत्तमिति ब्रुवन् । स प्राञ्जलिस्तमकरोत्क्लेशसाफल्यदायिनम् ॥८३८॥

तस्य दैवानुकूल्येन नीत्येव सुप्रयुक्तया । तत्कालमेव तद्राज्यशय्यायां समुपाविशत् ॥८३९॥

840 कारागृहान्तःसंवीतान्येव वासांसि धारयन् । सिंहासनेन शुशुभे श्रीसांनिध्यान्नवो नृपः ॥८४०॥

तादृक्साहससंरम्भपरिश्रान्तो दिनात्यये । कृतारोहोथ शय्यायां त्यक्तभार इवापतत् ॥८४१॥

---

८२०. [1]) स्क्राम्या supplied by $A_2$ in space left by $A_1$.—[2]) Emended with C; A °त्तुपकर्त्तुप°. ८२१. Thus A; perhaps, °पक्षि°?. ८२४. [1]) The same hand which has supplemented the marginal note of $A_2$ in i. 110, writes here: नक्रास्याद्गलतश्च मज्जनमयी शङ्का प्लवस्याम्बुधौ इत्यन्यादर्शे, with the gloss नक्रः जलप्राणिविशेषः यो जलहस्तिनोपीरयति तन्मुखात्सकाशादेवपलायितस्यापि मज्जनमयी शङ्का उडुपस्य स्यादेवेत्यर्थः.

काकाद्यवैद्य[1]कुलजैर्योधैः संरुद्धपद्धतिः । स हुष्कपुरमुत्सृज्य क्रमराज्योन्मुखो ययौ ॥१३११॥
अत्रान्तरे तमायान्तमाकर्ण्योत्सेकमागतैः । विद्रवोन्मुखतां निन्ये डामरैर्मण्डलेश्वरः ॥१३१२॥
तैर्हि प्रागेव भङ्गं स नीतो हत्वा महाभटान् । यशोराजमुखान्भूरीन्ययौ मन्दप्रतापताम् ॥१३१३॥
शनैरपसरन्सोथ तारमूलकमासदत् । उच्चलाधिष्ठितास्तेपि विद्विषन्तस्तमन्वयुः ॥१३१४॥
1315 समेतानन्तसैन्येन तेन तत्र चिरं धृतः । उच्चलप्रलयाभ्रस्य पौरस्त्यानिलविभ्रमः ॥१३१५॥
सैन्ययोरुभयोस्तत्र जयश्रीकरिणीकृते । बभूव तुल्यसंघर्षः सेर्ष्ययोरिव दन्तिनोः ॥१३१६॥
आनन्दनामाप्युत्पिञ्जोत्थानमुच्चलमातुलः । चक्रे मडवराज्येथ निविडीकृतडामरः ॥१३१७॥
तद्विप्लवे डामरौघा दिग्देशेभ्यः सहस्रशः । उन्ममज्जुर्हिमापाये रन्ध्रेभ्य इव षट्पदाः ॥१३१८॥
तत्क्षणं क्षीणभाग्यस्य यथा द्वारपतिस्तथा । कायस्थः कम्पने राज्ञः सहेलो[1]भून्महत्तमः[2] ॥१३१९॥
1320 आनन्देन कृतास्कन्दो बहुशो विहिताहवः । औज्झीन्मडवराज्यं स न यत्तद्दृढभूत्तदा ॥१३२०॥
अथाद्भुतप्रतापिन वेष्टयित्वा महाचमूम् । उच्चलेनाहवे बद्धः ससैन्यो मण्डलेश्वरः ॥१३२१॥
न विद्मः किं तदा वृत्तं योधानां यत्किलाविदन् । ते सखड्गाश्वसंनाहा बद्धा वयमिति स्फुटम् ॥१३२२॥
तथा बद्धोपि निर्दध्यौ स भव्यः प्रभवे हितम् । स्वामिभक्तिर्विपर्येति पर्यन्तेपि न मानिनाम् ॥१३२३॥
तूर्णं पुरप्रवेशाय सोथ प्रैरयदुच्चलम् । विश्वास्य नेदृगन्योस्ति क्षण इत्यसकृद्ब्रुवन् ॥१३२४॥
1325 विशतस्तस्य चानेकैः पुरमामाद्यलुण्ठयत् । कर्मणानेन कौलीनमस्यास्त्विति विचिन्तयन् ॥१३२५॥
परिहासपुरे तेन स ततः संप्रवेशितः । श्वभ्राम्बुविषमाद्यस्मान्निर्गमोत्यन्तदुर्गमः ॥१३२६॥
तत्रोच्चलं चतुःशाले स्वं च दग्धुमनूनुदत् । निजान्स निशि ते तत्तु न चक्रुस्तद्धितैषिणः ॥१३२७॥
यथा चित्तं तथास्य स्यात्कायश्चेत्साहसक्षमः । तदात्मनिरपेक्षस्य किं न सिध्येन्मनीषितम् ॥१३२८॥
क्लीबच्छन्नवपुस्त्वचा सह वसत्यच्छेद्यया कच्छपो निर्वर्मा रणकर्मसाहसमहोत्साहश्च सिंहः सदा ।
धिक्प्रादुष्कृतपक्षपातरभसो नीचेषु मुग्धो विधिर्वीराणां कुरुते शरीरमभितो वैकल्यशल्याहतम् ॥१३२९॥
1330 संदिदेशाथ स क्ष्मापमाकृष्यार्यं मयामतः । सृगाल इव ते क्षिप्तः क्षिप्रं निर्गत्य बध्यताम् ॥१३३०॥
ततः समस्तसामन्तसैन्यसंततिसंयुतः । अद्य मृत्युर्जयो वेति निश्चित्य निरगान्नृपः ॥१३३१॥
स प्राणसंशये सर्वायासप्रशममादिशत् । पटहोद्घोषणेनासीत्परै[1]रनुगतोखिलैः ॥१३३२॥
प्राप्तं भरतसेत्वग्रं घ्नन्तः सैन्यं विरोधिनम् । आजानेयै राजभृत्याः क्षणान्मार्गमलङ्घयन् ॥१३३३॥
क्षुभितेऽधाविवायाते राजसैन्ये द्विषद्बलम् । मण्डलेश्वर एवान्तःप्रविष्टो निरनाशयत् ॥१३३४॥
1335 अथोच्चलबले भग्ने विदुद्रुः केपि जाङ्गिकाः । भ्रान्त्वा राजविहारं च प्राविशन्केपि डामराः ॥१३३५॥
त्रिल्लसेनाभिधं दृष्ट्वा प्रविष्टं[1] डामरं परे । उच्चलोसाविति भ्रान्त्या विहारं तमदाहयन् ॥१३३६॥
सोमपालाभिधेनारिहयारोहान्तरे चिरम् । कुर्वन्दर्शनपालस्य पितृव्येण सहाहवम् ॥१३३७॥
यत्नाज्जनकचन्द्राद्यैर्मानी व्यावर्तितो रणात् । परिहासपुरात्प्रायान्मृत्युवक्त्रादिवोच्चलः ॥१३३८॥

१३११. [1]) Thus $A_1$; corr. by later hand into काकाद्यवैद्य°. १३१९. [1]) Emended; A सहलो.—[2]) Emended; A °भून्मह-त्तमः. १३३२. [1]) Doubtful; thus emended with C; A °सीत्पारैर°. १३३६. [1]) Thus $A_1$; corr. by later hand into प्रविष्टा.

वितस्तां गौरिकावाल[1]मासाद्योर्वी हयान्वितः । स डामरैः सह पुनः प्रययौ तारमूलकम् ॥१३३९॥
जयेन तावन्मात्रेण कितवोल्प इवोन्मदः । राजा प्रशंसन्नानन्दं राजधानीं न्यवर्तत ॥१३४०॥ 1340
जीवन्तमप्यरिं भुत्वा न पश्चादलगत्स यत् । आसन्नुच्छ्वसितास्तेन भङ्गभाजोपि डामराः ॥१३४१॥
यातान्पलाय्य ताञ्ज्येष्ठामूलीये मासि सर्वतः । भूयोपि संघटयितुं स्थिरधीरैच्छदुच्चलः ॥१३४२॥
स्वदोर्मात्रसहायस्य परायत्तस्य मानिनः । दुर्भिक्षान्तर्महोद्योगः स तस्य विषमोभवत् ॥१३४३॥
तन्मध्येतिदरिद्रोपि संप्राप्तं स ररक्ष यत् । तमुत्पाद्यानयद्राजा श्रीपरीहासकेशवम् ॥१३४४॥
तस्मिन्विघटिते पांसुः कपोतच्छदधूसरः । रोदसीच्छादनं हर्षशीर्षच्छेदावधि व्यधात् ॥१३४५॥ 1345
प्रागन्धकारो[1] देशेस्मिन्दिवसेपि व्यजृम्भत । रूपिकादिवसालोक इति यत्पप्रथे जने ॥१३४६॥
निवेशिते परीहासकेशवे प्रशशाम तत् । तस्मिन्नुन्मूलिते भूयः मार्धं मासमजृम्भत ॥१३४७॥
किंचिदुच्छ्वसिते राज्ञि मन्दोद्रेकतया रिपोः । दिशा शूरपुरस्याथ सुस्सलः प्रत्यदृश्यत ॥१३४८॥
अवनाहे[1] स हि वसन्नुपालम्भपरैः पितुः । संदेशैः शंसतो ज्येष्ठमौदासीन्यादपाहृतः ॥१३४९॥
दत्तान्कल्हक्षितीशेन कांश्चिदादाय वाजिनः । चिरेण राजदाक्षिण्यमौज्झीत्तेन व्यलम्बत ॥१३५०॥ 1350
आरम्भादुदयान्तं च तिष्ठन्वैरेपि निष्ठुरे । साम प्रयुयुजे मोहा[1]वहं मायानिधी रिपोः ॥१३५१॥
जित्वा माणिक्यनामानं तेन सेनापतिं रणे । प्रापि शूरपुरद्रङ्गाज्जयश्रीः श्रीश्च भूयसी ॥१३५२॥
तस्याभ्युदयपात्रस्य तया संप्राप्तया श्रिया । आराब्धिसमयः कृत्स्नः स विभूत्यद्भुतोभवत् ॥१३५३॥
मण्डलेश्वरपट्टादीनविचिन्त्योच्चलं ततः । प्राहिणोन्नृपतिर्योद्धुं सुस्सलं क्षिप्रकारिणम् ॥१३५४॥
तेन शूरपुरे भग्नास्तद्योधाः शौर्यशालिना । भूयांसः प्रलयं प्रापुर्मग्ना वैतरणीजले ॥१३५५॥ 1355
तत्र दर्शनपालस्य स्वामिद्रोहकृतो वपुः । विक्रामतो न संस्पृष्टं खिन्नयेव जयश्रिया ॥१३५६॥
राजसैन्यं तदन्यैर्युर्हतशेषं पलायितम् । लोकपुण्ये निवसतः सहेलस्यान्तिकं ययौ ॥१३५७॥
सुस्सलापातकल्पान्तं विशङ्क्यापि सहेलकः । तैस्तैर्भग्नैर्बलैः साकं नगरं प्राविशत्ततः ॥१३५८॥
एवमभ्येत्य नृपतौ सुस्सलेन विसूत्रिते । अवाप तारमूलस्थः प्रतिष्ठां पुनरुच्चलः ॥१३५९॥
बिभ्यद्भिस्तुरगानीकाल्प[1]त्तिप्रायैः स डामरैः । आनिन्ये शैलदुर्गेण भूयो लहरवर्त्मना ॥१३६०॥ 1360
राजाप्युदयराजाख्यं कृत्वा द्वारपतिं पुनः । प्राहिणोदुच्चलं जेतुं लहरे मण्डलेश्वरम् ॥१३६१॥
ततः पद्मपुरं प्राप्ते मातुले मल्लजन्मनोः । न कोपि कम्पनं भूपान्मन्त्री त्रासातुरोग्रहीत् ॥१३६२॥
को मेस्तीति विनिश्चस्य वदतोथ महीपतेः । अधिकारस्रजं हस्ताच्चन्द्रराजः समाददे ॥१३६३॥
अनाशीः शयने मृत्युर्येषां तेषां स वंशजः । श्रीजिन्दुराजमुख्यानामौचित्यं प्रत्यपाद्यत ॥१३६४॥
स द्रौणिरिव निर्नष्टे काले सेनापतिः कृतः । निर्गत्य तत्पद्मपुरादरिसैन्यं न्यवारयत् ॥१३६५॥ 1365
विपक्षः कम्पनेशः स तेन क्ष्मां क्रामतो[1] शनैः । नवम्यां शुक्लनभसो हतोवन्तिपुरान्तरे ॥१३६६॥
स हि गोवर्धनधरोपान्ते कुर्वद्भिराहवम् । स्वसैन्यैर्वर्जितो गीतं शृण्वन्परिमितानुगः ॥१३६७॥

---

१३३९. [1]) $A_2$ gloss परिहासपुरसमीपे गुरिकाबलमस्ति. १३४६. [1]) Emended, A °कारदेशे°. १३४९. [1]) Thus $A_1$, $A_2$ (?) अवनाहे, $A_3$ gloss पौरुपावमामे. १३५१. [1]) Emended, A मोहावह. १३६०. [1]) Emended, A °नीकान्पत्ति° १३६६. [1]) Emended, A क्रमता.

प्रविश्यारिहयारोहैर्वितस्तातीरवर्त्मना । प्राप्तोकस्माद्वधं लेभे प्रमत्तानां शुभं कुतः ॥ १३६८॥
प्रहितं चन्द्रराजेन क्ष्मापतिर्वीक्ष्य तच्छिरः । भूयो जयाशामकरोदानुकूल्यं विदन्विधेः ॥१३६९॥
1370 वैमुख्येन व्रजन्कुर्यात्सांमुख्यैरन्तरा विधिः । प्रत्यागमभ्रमं सिंह इव व्यावृत्य वीक्षितैः ॥१३७०॥
अथ लब्धबलश्चन्द्रराजोमन्दोद्यमोविशत् । विजयक्षेत्रमाकर्षन्कटकं दशधाष्टधा ॥१३७१॥
तुलाधर इव स्रष्टा साम्यभङ्गं न चक्षमे । तदा द्वयोः कटकयोस्तुलायाः पुटयोरिव ॥१३७२॥
प्राप्ते यतस्तृतीयस्मिन्दिवसे मण्डलेशितुः । अकालवृष्टिविवशं लहरे व्यग्रवद्बलम् ॥१३७३॥
शीतवातहता योधा मग्नाः केदारकर्दमे । तुरगासितनुत्रादि शक्तिर्यन्त्र इवामुचन् ॥१३७४॥
1375 उच्चलेन ततो रक्ष्यमाणमप्यार्द्रचेतसा । प्राप्तं जनकचन्द्राद्या निजघ्नुर्मण्डलेश्वरम् ॥१३७५॥
हर्षभूभृद्भृत्यवर्गे द्रोहशङ्काङ्किते परम् । कलेवरव्ययात्कीर्तिः क्रीता तेनैव मन्त्रिणा ॥१३७६॥
ध्रुवं संस्पर्धतो वन्द्या देवशर्मादयोस्य ते । न चेत्कोपि विपर्यासे दोषमुद्घोषयेज्जनः ॥१३७७॥
लवन्योर्म्मूलनारातिव्यूहव्यामोहनादयः । विध्यधीने फले ध्याते स्तुत्याः कस्य न तत्क्रियाः ॥१३७८॥
किं पातालतमो न हन्ति हिमगुः किं नो विषं भीतये पानीयं गिलतः किमान्तरशिखिध्वस्त्यै न धन्वंन्तरिः[1]।
सर्वत्रैकपदे प्रयात्यफलतां वाच्यो जडो नाम्बुधिः सिद्धेर्दैवविधेयतां विमृशतां स्तुत्यैव वस्तुज्ञता ॥१३७९॥
1380 स्वामिकृत्योद्यमस्तुत्यसूतिषु स्त्रीषु पूज्यताम् । गङ्गा तज्जननी स्वस्य नमस्यन्त्यविशङ्कितान् ॥१३८०॥
साहसे सा हि तनये यत्र तत्र महीभुजा । प्रहीयमाणे तं स्नेहमोहिताह स्म भूभुजम् ॥१३८१॥
अनन्यसंततेरेकं सुतमेतं प्रभो मम । मा नियुङ्क्थाः[1] यत्र तत्र कार्ये संदेहितासुनि ॥१३८२॥
स तामकथयन्मातर्यथा तेनन्यसंततेः । तथा मेनन्यभृत्यस्य सोयमेकोवलम्बनम् ॥१३८३॥
स्वसंभवस्य तां[1] भर्तुर्भक्तिसंभावनामसौ । प्राप्तप्रतिष्ठानिष्ठायां मेने मानवती सती ॥१३८४॥
1385 उच्चलस्य क्षणे तस्मिन्हिरण्यपुरमीयुषः । राज्याभिषेकं संभूय तत्रत्या ब्राह्मणा ददुः ॥१३८५॥
नृपमत्यन्तविवशं प्रसङ्गे तत्र मन्त्रिणः । भूयांसः सन्ति तैः सार्धं व्रज तल्लोहराचलम् ॥१३८६॥
प्रजा एव ततः शान्तोत्कण्ठा नवनृपं प्रति । त्वामानेष्यन्ति न चिरादिनैर्वा स्वयमेष्यसि ॥१३८७॥
सोभ्यधादवरोधस्त्रीकोशसिंहासनाद्यहम् । असामान्यं परित्यज्य गन्तुं सपदि नोत्सहे ॥१३८८॥
पुनस्तेकथयन्नाप्ता यान्तोध्यारुह्य वाजिनः । पृष्ठे विन्यस्य नेष्यन्ति कोशान्तःपुरयोषितः ॥१३८९॥
1390 श्वपाकीकामुकोप्यासीद्यस्मिंस्तदपरोपि चेत् । सिंहासनं समारोहेत्काभिमानक्षतिस्ततः ॥१३९०॥
आस्तामेतत्परं ब्रूथ मन्त्रमित्यथ चोदिताः । ते पार्थिवेन भूयोपि ससंरम्भं बभाषिरे ॥१३९१॥
क्षत्रधर्मं पुरस्कृत्य शासतां क्ष्मां क्षमाभुजाम् । को दैन्यस्यावकाशः[1] स्यादाशीर्येषां मृधे वधः ॥१३९२॥
अनुयोगश्च लज्जा च भयं द्वैधं च मन्त्रिणा । भूभुजां व्यसनोल्लासे शत्रवो न तु गोत्रिणः ॥१३९३॥
कार्यं न पश्येदलसः स्वयं यो भृत्येषु विन्यस्तसमस्तकृत्यः ।
यष्ट्याश्रयस्येव विनष्टदृष्टेः पदे पदे तस्य किलोपघातः ॥१३९४॥

१३७९. [1]) Emended; A धान्व°. १३८२. [1]) Emended; A नियुक्था. १३८४. [1]) Emended; A ता भर्तु°. १३९२. [1]) Thus $A_1$; corr. by later hand into सैन्य°.

लङ्घेह[1]मस्य स्वयमात्तशस्त्रः स्वल्पस्य शत्रोः कलयन्नवज्ञाम् ।
एवं किलादीर्घमतिर्ददाति स्वयं प्रवृद्धिं त्रपया विमुग्धः ॥१३९५॥ 1395

कालेन याति क्रिमितां महेन्द्रो महेन्द्रभावं क्रिमिरप्युपैति ।
अयं मयीयानयमप्रतिष्ठ इत्येष निष्ठानुचितोभिमानः ॥१३९६॥

पराभवाधायि भयं जिगीषोः सर्वाङ्गवैकल्यवताहितेन ।
येनाभियुक्तः स समस्तसंपत्पूर्णोपि वैकल्यहतत्वमेति ॥१३९७॥

लब्धस्थितिः स्फीतविभूतिपात्रं दीनोभियोक्ता परपिण्डवृत्तिः ।
आद्ये कथं नाम पराभवः स्याद्भयं भवेद्येह न तत्र[1] भावः ॥१३९८॥

अमात्यवैमत्यवशेन निष्ठा दृष्टा न कार्यस्य तनीयसोपि ।
वैशाखरज्ज्वोरिव कर्षकाभ्यां पर्याययोगेन कृते विकर्षे ॥१३९९॥

समप्रशक्तेरेकेनाप्याशाक्रान्तस्य भूपतेः । वैरी सर्वाङ्गहीनोपि राज्यमायुश्च कर्षति ॥१४००॥ 1400

यत्र द्विषस्तत्र याहि क्रान्तां क्रान्त्वा च मेदिनीम् । पातार्थी न चिराद्वेश्म पुनर्जयमवाप्स्यसि ॥१४०१॥

विधुरेपि विभौ शूरसहस्रपरिवारितैः । पतद्भिराहवे भूपैः ख्यात्याभिख्योपलभ्यते ॥१४०२॥

नृत्यच्छिन्नशिरोधरोद्धुरनटे[1] ज्यालावु[2]वीणागुणप्रक्वाणिन्युदयच्छिवां[3]मुखशिखिज्वालाप्रदीपाङ्कुरे ।
धन्याः केप्युपलभ्य वीरशयने शान्ताभिमानज्वरोल्लाघश्लाघ्यशरीरतासफलितस्निग्धाशिषः शेरते ॥१४०३॥

उदास्तमित्यन्तकृत्यं संचिन्त्यं[1] कितवा इव । राज्ये भजन्ते दीव्यन्तः क्षत्रियास्त्रासहीनताम् ॥१४०४॥

मन्त्रान्तरानुयोक्तारं तदप्युत्सृज्य मन्त्रितम् । परुषं[1] प्राप्तकालं च ते निःश्वस्य तमब्रुवन् ॥१४०५॥ 1405

उत्कर्षवत्त्वसंस्त्यक्तुमपि शक्नोषि संकटे । अन्यथानुचितं किंचित्प्राप्स्यस्यहितचिन्तितम् ॥१४०६॥

स तानुवाच स्वं हन्तुं न शक्तोहं ततो मयि । भवद्भिरेव विषमे प्रहर्तव्यमुपस्थिते ॥१४०७॥

गिरं कापुरुषस्येव क्लैब्यग्रस्तस्य तां प्रभोः । सबाष्पास्तेनुशोचन्तः पुनरेवं बभाषिरे ॥१४०८॥

प्रतीकाराय नः शक्तिर्न चेद्दैवहतौजसाम् । प्रत्युतैवंविधे कृत्ये प्रसरेयुः कराः कथम् ॥१४०९॥

पशून्पुरुषरूपान्स नूनं भूभृत्पुपोष तान् । दुःखेनोदरखनंस्तस्य ये तादृग्दैन्यमीयुषः ॥१४१०॥ 1410

युगान्तानपि जीवित्वा कायः सापाय एव यः[1] । तस्यागमात्रसाध्येर्थे धिग्दैन्यमनुजीविनाम् ॥१४११॥

योषितोपि विशन्त्यग्निं ये ध्यात्वा विस्मृतिं व्रजेत् । भर्तृस्नेहः स पुंसोपि यस्य कोन्यस्ततोधमः ॥१४१२॥

शैलूषस्येव ये शोकभयदैन्याद्यविक्रियाः । भर्तुः पश्यन्ति तैरेषा भूः सतीर्थाप्यपावनी ॥१४१३॥

क्षुत्क्षामस्तनयो वधूः परगृहप्रेष्यावसन्नः सुहृद्दुग्धा गौरशनाद्यभावविवशा हम्भारवोद्गारिणी ।
निष्पथ्यौ पितरावदूरमरणौ स्वामी द्विषन्निर्जितो दृष्टो येन परं न तस्य निरये भोक्तव्यमस्त्यप्रियम् ॥१४१४॥

भयोपि मानुषपशून्स तान्नृपतिरब्रवीत् । उदस्तकृत्योप्याविश्य भूतैरिव विमोहितः ॥१४१५॥ 1415

एतस्मिन्पश्चिमे काले भुक्तं राज्यं यथा मया । जानेविशालेच्छतया तथान्यो नोपभोक्ष्यते ॥१४१६॥

---

१३९५. [1]) ह supplied by $A_3$ in space left by $A_1$. १३९८. [1]) Thus corr. by later hand from $A_1$ तत्प्रभावः. १४०३. [1]) Emended; $A_1$ has written first °द्धुरनल and corrected this into °द्धुरनटो.—[2]) Thus cor. by $A_1$ from ज्वालाम°.—[3]) Thus corr. by $A_1$ from °च्छिवो.—[4]) च omitted in A. १४०४. [1]) Thus A; perhaps, to b emended संचिन्त्य. १४०५. [1]) Emended; A पुरुषं. १४११. [1]) Emended; A च.

यमः कुबेरश्चौद्याये राज्ञां तिष्ठत इत्यसौ । मदेकशरणैवाभूत्ख्यातिरस्मिन्कलौ युगे ॥१४१७॥
रुद्रोपेन्द्रमहेन्द्राद्याः प्रयातारो यदध्वना । उपस्थितायां नियतौ तत्र मर्त्यस्य काः शुचः ॥१४१८॥
किं तु दृये यदेषा भूर्भूत्वा कुलवधूरिव । महोत्साहद्रुत्वेटीव प्राप्ता प्रसभभोग्यताम् ॥१४१९॥
1420 इतः प्रभृति यः कश्चिद्राज्यस्यास्य गतौजसः । चक्रिकामात्रसाध्यत्वं जानन्नाशां करिष्यति ॥१४२०॥
अलौकिके कृते यत्नस्तद्वीक्ष्य फलवन्ध्यताम् । प्रायोदयैरल्पसत्त्वैर्दर्पान्नूनं हसिष्यते ॥१४२१॥
कार्यारम्भः फलोल्लासमालोक्य प्रायशो जनैः । अनानुगुण्यगणनां कुर्वाणैर्न विगर्ह्यते ॥१४२२॥
पश्चान्तकोटिरवलम्बनभूः स नेत्रं दुग्धेन यस्य मरणं धियि कैरिवेत्थम् ।
पारं गते मथनकर्मणि मन्दराद्रेर्दोषोऽर्थ्यते विगुणहेतुपरीक्षणेन ॥१४२३॥
शास्त्रसंदर्भविस्त्वेपि श्रीगर्भत्वमदर्शयम् । जनोपजीवनार्थं यत्तेज्ज्ञातं जाड्यसिद्धये ॥१४२४॥
1425 उज्वलेनापि सत्कृत्ये हस्तामोच्येयनेतसा । दर्शितश्यामदर्शनं करिष्यन्ते विडम्बनाः ॥१४२५॥
ततोवमानाच्च त्रासात्संप्राप्नोद्य विहस्तताम् । समर्थनेच्छुर्वाञ्छामि मृत्युमीदृशमप्यहम् ॥१४२६॥
स्वैरेव स हतो नो चेत्कस्तस्माद्वसुधां हरेत् । लब्धां रक्षितुमिच्छामि ख्यातिमेतेन हेतुना ॥१४२७॥
मुक्तापीडः पुरा राजा ज्वलित्वा मूर्ध्नि भूभुजाम् । कार्पण्यप्रणयं प्राप लब्धरन्ध्रो विरोधिभिः ॥१४२८॥
स ह्युत्तरापथे नानापथस्थगितसैनिकः । मितानुगोहितै रुद्धमार्गोभूद्दुर्गमेऽध्वनि ॥१४२९॥
1430 तं शल्यो नाम सामग्र्यवैरल्यविवशो नृपः । बन्धुं प्रतिज्ञामकरोद्वाजिलक्षैर्युतोऽटभिः ॥१४३०॥
स सामप्रमुखोपायापायध्यानावसन्नधीः । भवस्वाम्यभिधं कृत्यमपृच्छन्मुख्यमन्त्रिणम् ॥१४३१॥
असाध्यां सोपि निर्ध्याय विनिपातप्रतिक्रियाम् । न्याय्ये निश्चित्य नैयत्यं कर्तव्ये प्रत्युवाच तम् ॥१४३२॥
उपाययुक्तिप्रत्युक्ते कृत्ये कीर्त्यभिमानिनाम् । निःसंभ्रमेव प्रतिभा लोभेनाक्षोभिते हृदि ॥१४३३॥
कृत्यं कृत्यविदो लब्धप्रसिद्धिपरिरक्षणम् । साम्राज्योपार्जनमुखो व्यापारस्त्वानुषङ्गिकः ॥१४३४॥
1435 गच्छच्छरीरविच्छेदादपि भस्मावशेषताम् । कर्पूरः सौरभेणेव जन्तुः ख्यात्यानुमीयते ॥१४३५॥
शान्तयोर्जीवितस्थानं द्वयमत्यद्भुतं द्वयोः । अनङ्गस्याङ्गनापाङ्गः स्तोतृजिह्वा यशस्विनः ॥१४३६॥
ख्यातसंरक्षणं नाम जन्तोः कल्पान्तरस्थितिः । वर्तते कीर्तिकायस्य संपूर्णाः परमाणवः ॥१४३७॥
धीरैर्विविधैश्च निर्ध्येयो विरोधिष्वप्रधानवान् । यस्तेषामुन्नतिभनध्वंसाय यततेन्वहम् ॥१४३८॥
तुङ्गावपातनहठव्यसनी विधाता स्वोत्पत्तिपद्मकुलजेपि सरोजषण्डे ।
संकोचिनि द्विजपतावपि शुद्धिवन्ध्ये मातङ्गहस्तपतनैः कुरुतेवमानम् ॥१४३९॥
1440 ये हठापातिनो धातुर्धैर्यं[1] ख्यातिनिपातने । रक्षितुं समुपेक्षन्ते तैः किं नाम —[2] रक्षितम् ॥१४४०॥
जातिः क्ष्माभृति वंशजाश्रयतया ख्यातिप्रतिष्ठामिमामुद्दीप्यानलमुज्झितस्त्ववपुषः केप्यत्र वेत्राङ्कुराः ।
त्रातुं हन्त विदन्ति ये न विधिना क्रुद्धेन पृथ्वीभृता द्वारि द्वाःस्थकरैर्गतागतखलीकाराणि संप्रापिताः ॥१४४१॥
भोगाग्निर्वाणभूयिष्ठानिष्टान्प्राणानवेत्य तत् । प्रतिष्ठासौष्ठवत्राणे संरब्धुं देव सांप्रतम् ॥१४४२॥

---

१४३०. [1]) Thus A[1]; A[2] °वैवल्य°. १४४०. [1]) Thus corr. by A[1] or a later hand from °धातुरिवं.—[2]) The *lacuna* not indicated in A; न supplied in R C.

दण्डकालसकाख्यस्य तद्रोगस्याशुकारिणः । पार्थिवाकस्मिकोत्थानं मिषादस्य प्रकाशयताम् ॥१४४३॥

श्वो वक्तास्म्यथ कर्तव्यं व्यापत्प्रक्षपणक्षमम् । उक्त्वेति स महामात्यो निर्गत्य स्वगृहानगात् ॥१४४४॥

दण्डकालसकं दण्डधरो व्यञ्जन्मिषात्ततः । अधीर इव चक्रन्द लुठन्निस्पन्दलोचनः ॥१४४५॥ 1445

स्वेदसंवाहनक्ष्वेडवमनाद्यैरुपक्रमैः । निःशैथिल्यव्ययं तेन मुमूर्षुं तं जनोवदत् ॥१४४६॥

ततो निश्चितमृत्युस्त्वं पत्युः कथयता कृतः । वह्निप्रवेशोमात्येन कृतशल्यनिवेदकः ॥१४४७॥

कर्तव्यशेषं दाक्षिण्यादनाचक्षाणमग्रतः । युक्त्योक्तनिष्ठुराचारमन्तस्तुष्टाव तं नृपः ॥१४४८॥

अप्रौढः सोढुमुग्रामां व्यथामस्मीति वादिना । राज्ञाप्यनलसाद्देहं ततश्चक्रेभिमानिना ॥१४४९॥

तेन प्राणानुपेक्ष्यैवमन्यख्यातेर्मनस्विना । ऊर्ध्वाधिरोहे सोपानं कृतं न निजकीर्तनात् ॥१४५०॥ 1450

एवं दैवोपनीतानामख्यातीनां चिकित्सितम् । स्वधियामात्यबुद्ध्या वा पारमेति मनस्विनाम् ॥१४५१॥

इत्युक्त्वा विरतो वंशबीजरक्षार्थमात्मजः । भोजो विसृज्यतां कोटमेवमूचेथ मन्त्रिभिः ॥१४५२॥

तं राजपुत्रं प्रस्थानमङ्गलान्ते विनिर्गतम् । पुनर्व्यावर्तयामास दण्डनायकमोहितः ॥१४५३॥

सा धीः स साहसारम्भस्तद्वैकल्यमापदि । नष्टमेकपदे तस्य नाशकाले ह्युपस्थिते ॥१४५४॥

लक्ष्मीर्तडिल्लता[1] कीर्तिर्वलाका शौर्यगर्जितम् । प्रतापशक्रचापं च भागधेयाम्बुदानुगम् ॥१४५५॥ 1455

धीशौर्यादिगुणेन भाग्यसमये प्रागेष एको नृपः शक्रस्याक्रमणं क्रियेत न कुतोनेनेति संभाव्यते ।
मौग्ध्यं पङ्गुजडान्धवच्च स ततो गच्छन्नभाग्योदये दत्तोनेन पदक्रमो भुवि कथं नाभेति संचिन्त्यते ॥१४५६॥

विरोधिप्रतिरोधाय तान्त्रिसैन्यं विसर्जितम् । नगरस्थमपि क्ष्मापालप्रवासधनमादधे ॥१४५७॥

दायादाश्रयणं राजभृत्याः सर्वेपि चक्रिरे । ये केचित्स्ववसन्गेहे ते देहैरेव केवलम् ॥१४५८॥

पराश्रयपरं चित्ता न संकल्पमपि व्यधुः । किं वा स्तुमस्तैर्यैः स्त्रीवदमुञ्चन्नचिरादसून्[1] ॥१४५९॥

यां काणश्रावतीनर्तक्यन्वये कापि नर्तकी । पुत्रीचक्रे कापि जातां जयमत्यभिधाथ सा ॥१४६०॥ 1460

भूत्वा गृहीतकौमारा तरुण्युच्चलरागिणी । धनलुब्धावरुद्धात्वमभजन्मण्डलेशितुः ॥१४६१॥

तस्मिन्हते तदैवास्तापत्रपोच्चलमाययौ । तथैव दैवयोगेन पट्टदेव्या भविष्यते ॥१४६२॥ तिलकम्[1] ॥

आबद्धपङ्क्त्यश्चर्चामुच्चलाश्रयिणीं व्यधुः । भूपालदर्शनेप्यस्तभीतयो राजसेवकाः ॥१४६३॥

वेतनस्वीकृतैः सर्वैः शिक्षाधायी पुरस्कृतः । लोभावमानाद्युद्दीप्य योधश्रद्धां हरन्युधि ॥१४६४॥

मन्दप्रतापतावाप्तो नर्मोक्त्या मर्मभेदकृत् । आहारादिक्षणे कर्ता प्रक्रियार्थनया कलेः ॥१४६५॥ 1465

अतीव प्रभुदानादिमाहात्म्याख्यानकोविदः । एक एकोकरोद्योधः पृतनानां विद्रवणम् ॥१४६६॥ युग्मम्[1] ॥

श्रीलेखाभ्रातृसूनोर्यस्तनयो व्यड्डमङ्गलः । मल्लज्ञातीयकोपेन स राज्ञास्कन्द घातितः ॥१४६७॥

मातुलस्यात्मजा मल्लापत्ययोस्तस्य गेहिनी । श्वश्र्वा समं स्ववसतीरादीप्य दहने मृता ॥१४६८॥

मौनव्रतादिनियमच्छन्नक्रौर्योन्तकोपमः । करोत्यभ्यन्तरान्भिन्नान्मल्लः परमदाम्भिकः ॥१४६९॥

तदेष पुत्रराज्येच्छुर्वर्ध्यतां[1] निर्भयं रिपुः । शाहिपुत्रीभिरित्यूचे तस्मिन्नवसरे नृपः ॥१४७०॥ 1470

---

१४५५. [1]) Emended; A लक्ष्मीस्तडि°. १४५९. [1]) Emended; A °मुञ्चन्नपि°. १४६२. [1]) $A_1$ writes here ३ instead of तिलकम्. १४६६. [1]) $A_1$ writes here २ instead of युग्मम् (युगलकम्). १४७०. [1]) Emended; A °बेध्यतां.

स्वयं प्रादात्समास्कन्दं द्वारि स्थितवतः पुरः । तस्य प्राणार्थिनो वाञ्छापूर्त्यै मल्लश्च निर्ययौ ॥१४७१॥
स हि द्वैराज्यसज्जाभ्यां पुत्राभ्यां प्रार्थितोपि सन् । मुनिव्रतः सदाचारानुरोधान्नात्यजन्नृपम् ॥१४७२॥
विश्वासाय परं राज्ञो भ्रातृव्याशोर्भविष्यतोः । द्वैमातुरान्सल्हणादीन्वीर्वि दत्त्वात्र सद्गृहे ॥१४७३॥
आसेतुषे मुनिदशामाजन्मप्रीणिताग्नये । तदा स तस्मै चुक्रोध प्रत्यासन्नवधो नृपः ॥१४७४॥
1475 स सुराभ्यर्चनं कुर्वन्नाहूतः परिपन्थिभिः । रेजे तेनैव वेषेण समराय विनिर्गतः ॥१४७५॥
उपवीत्यक्षसूत्राङ्कपाणिर्दर्भोज्ज्वलाङ्गुलिः । भस्मस्मेरललाटाङ्को जामदग्न्य इवापरः ॥१४७६॥
स्नानार्द्रधवलश्यामलोलधम्मिल्ललीलया । देहत्यागे प्रयागाम्बु धारयन्निव मूर्धनि ॥१४७७॥
उष्णीषी वीरपट्टेन खेटकेनोष्णवारणी । सोसिधारातीर्थपान्थो दण्डी खड्गेन दिद्युते ॥१४७८॥
भोगे पुरस्कृताः केचित्तद्भृत्याः पूर्वनिर्गताः । अमर्त्यनारीभोगेपि तस्यासन्नग्रभागिनः ॥१४७९॥
1480 द्वौ रथ्यावट्टविजयौ द्विजौ पौरोगवस्तथा । कोष्ठकः सज्जकाख्यश्च योद्धा युद्धे हता बभुः ॥१४८०॥
क्षतोप्युदयराजाख्यः क्षत्तायुःशेषसत्तया । प्राणैर्नियोगभागाजौ नाज्जकोपि व्ययुज्यत ॥१४८१॥
विरोधियोधैर्नीरन्ध्रं द्वारमालोक्य सर्वतः । त्यक्तकम्पो ददौ झम्पा स तेषामेव मूर्धनि ॥१४८२॥
शात्रवेष्विव खड्गेषु खेटकेष्वम्बुजेष्विव । जरसा धवलो भ्राम्यन्राजहंस इवाबभौ ॥१४८३॥
क्षणाच्च ददृशे शातशरशङ्कुशताचितः । प्रवीरो वीरशयने सुप्तो भीष्म इवापरः ॥१४८४॥
1485 शोच्यं गतायुषो राज्ञः किं नाभूत्तस्य तादृशः । चिच्छेद यः शिरः पृष्ठे हयं च भ्रमयन्स्मयात् ॥१४८५॥
राज्ञी कुमुदलेखाख्या मल्लस्याला च वल्लभा । गृहेष्वजुहुतां वीतिहोत्रे गात्राणि संभृते ॥१४८६॥
राजावकल्ययोः पत्न्यौ बाले सल्हणरल्हयोः । स्नुषे मल्लस्यासमती सहजा चाग्निसाद्गते ॥१४८७॥
सर्वोपभोगभागिन्यस्तदन्तःपुरयोषिताम् । परिवाराङ्गना वह्नौ षट्वाश्वैव विपेदिरे ॥१४८८॥
महागृहाग्नितापेन शोकोष्णैश्च जलाम्बुभि. । तप्ताम्भसो वितस्तायास्तीरे ग्रामे बभूव तत् ॥१४८९॥
1490 प्रवर्धितायाः स्तन्येन द्रष्टुमक्षमया पयः । दास्यमानं निवापेषु पुण्याश्वान्ताख्यया समम् ॥१४९०॥
धात्र्या परस्मिन्वै तस्मिंस्तीरे स्वान्तःपुरे स्थिता । माता भविष्यतो राज्ञोर्नन्दानिन्द्यकुलोद्भवा ॥१४९१॥
महानसाग्निधूमेन संलक्ष्यावीक्ष्य पुत्रयोः । सोत्कण्ठं कटकौ सौधादुदग्दक्षिणदिक्स्थयोः ॥१४९२॥
क्रियतां दिवसैरेव पुत्रौ शत्रोः पितृद्विषः । जामदग्न्यायितं वंशे शम्भ्वेति नृपतिं सती ॥१४९३॥
अनिषण्णेव दीप्ताग्नौ गृहे स्वं निरदाहयत् । प्रनृत्यन्तीभिरालीभिरिव ज्वालाभिरावृता ॥१४९४॥
1495 वधे दर्शनपालस्तु नृपे प्राप्ते प्रतिक्षणम् । अत्यद्भुतैरन्तरायैरायुःशेषेण रक्षितः ॥१४९५॥
वर्षमात्रावशेषायुर्यद्वा द्रोहेण रक्षितः । सोत्रमानस्य पूयस्य रोगजस्य च भुक्तये ॥१४९६॥
कृष्णभाद्रनवम्यां तं वधं श्रुतवतोः पितुः । मल्लात्मजन्मनोः शोकः कोपेन निरपीयत ॥१४९७॥
आवह्निपुरकग्रामान्प्रज्वलन्क्रोधवह्निना । अधावद्विजयक्षेत्रं सोन्येद्युरथ सुस्सलः ॥१४९८॥
योद्धुमभ्यापतन्तं तं चन्द्रराजोथ निर्गतः । पद्मदर्शनपालाद्यैः ससैन्यैः पर्यवर्ज्यत ॥१४९९॥
1500 निजैरुपेक्षितश्चक्रे स चिरं तत्र दुष्करम् । स्वल्पसैन्योपि संग्रामं भूरिसैन्येन शत्रुणा ॥१५००॥

१४७७. [1]) Emended; A °धम्मिल°. १४८०. [1]) Emended; A योधा. १४८१. [1]) Emended; A क्षताङ्ग°. १४९१. [1]) Emended; A राज्ञो नन्दा°. १४९९. [1]) Emended, A योद्धुमस्वाप°.

अक्षोटमल्लः समरे तत्र मल्लश्च चापरिः । अगातां राजगृह्यौ द्वौ स्वर्गस्त्रीभोगभागताम् ॥१५०१॥
रजोन्धकारे चन्द्रेन्दुद्योतिन्यालिङ्गितो हतः । चन्द्रराजः सुरस्त्रीभिरिन्दुराजो[1]स्य चानुगः[2] ॥१५०२॥
तस्मिन्नपि हते वीरे चक्रे हर्षमहीभुजः । आशारविन्दिनीमूलकन्दनिर्दलनं विधिः ॥१५०३॥
पट्टादयः प्रविश्याथ विजयेशाङ्गनं भयात् । प्रविष्टे सुस्सले देशं द्वारं दत्तार्गलं व्यधुः ॥१५०४॥
आस्थानीयः परं पद्मनामा युद्ध्वा हतो बहिः । लक्ष्मीधरो मर्तुमिच्छुर्बद्ध्वा नीतः स डामरैः ॥१५०५॥ 1505
विजयेश्वरगञ्जाप्तसौधारूढोथ सुस्सलः । अधो ददर्श तान्सर्वान्पशूनिव भयाकुलान् ॥१५०६॥
धूर्तः स दत्तमध्यस्थो हसन्नानीतवान्पुनः । पट्टदर्शनपालौ द्वौ तेषां पूर्वं निजान्तिकम् ॥१५०७॥
निःश्रेण्यभावादारोढुमक्षमौ सुस्सलानुगैः । तौ मृताविव निर्बद्धपाणी रज्ज्वाधिरोपितौ ॥१५०८॥
तयोर्विदेशगमनं व्रीडादर्थायमानयोः । प्रतिश्रुत्याकरोद्धीमान्सुस्सलो म्लानिमार्जनम् ॥१५०९॥
स्निग्धोक्त्या मृष्टमांसादिभोगैस्तस्यामतस्तयोः । तस्मिन्नेवाह्नि मन्दत्वं विदेशौत्सुक्यमाययौ ॥१५१०॥ 1510
केनाप्यधिष्ठितश्चक्रे परेद्युर्यत्स सुस्सलः । जान विश्वसृजोप्यङ्गरोमाञ्चयति तत्स्मृतिः ॥१५११॥
जासटो नृपतिर्हर्षभूभर्तुर्मातुलात्मजः । उमाधरमुखाश्चान्ये राजानो यत्र च त्रयः ॥१५१२॥
राजपुत्रहयारोहतन्त्रिसामन्तसंततेः । न यत्र गणना काचित्सैन्येष्वष्टादशस्वभूत् ॥१५१३॥
विजयेशाङ्गनस्थानां द्वारमुत्पाट्य सोविशत् । एकाक्येवान्तरं तेषां सासिराक्षेपरूक्षवाक् ॥१५१४॥
स तत्र साक्षिणं कृत्वा क्षमावान्विजयेश्वरम् । प्रतिश्रुत्याभयं तेभ्यः प्रणतेभ्यो विनिर्ययौ ॥१५१५॥ 1515
पुनः सौधममारूढस्तान्सर्वानर्पितायुधान् । रज्जुबद्धकरान्भृत्यैरानिनाय ततोन्तिकम् ॥१५१६॥
स्वर्णरूप्यत्सरु[1]श्रेणिपूर्णायुधपरिष्कृता । कीर्णपुष्पोपकारेव सुस्सलास्थानभूरभूत् ॥१५१७॥
विन्यस्य पशुपालानां पशूनिव स तान्करे । संरक्षितुं डामराणां त्र्यहं तत्राकरोत्स्थितिम् ॥१५१८॥
ततः सुवर्णसानूरग्रामं स प्राप्य बन्धनात् । पट्टदर्शनपालौ द्वावौज्झीद्देशान्तरोन्मुखौ ॥१५१९॥
पट्टः शूरपुरं प्राप्तो भार्ययागतया गृहात् । संसृष्टमानोप्यस्मार्षीदल्पसत्त्वो दिगन्तरम् ॥१५२०॥ 1520
यावन्मात्राप्यौन्नती सा विदेशौन्मुख्यलक्षणा । द्रोग्धुर्दर्शनपालस्य पट्टमैत्र्या विसूत्रिता ॥१५२१॥
अहंपूर्विकया राज्यं जिघृक्षुरथ सुस्सलः । नगरासादनादैच्छदभिसंधातुमग्रजम् ॥१५२२॥
समानप्रायवयसोः[1] सर्वदोद्दामयोरभूत् । यस्माज्ज्येष्ठकनिष्ठत्वं प्रक्रियारहितं तयोः ॥१५२३॥
छिन्नेष्वहःसु यातेषु क्रामंस्तां तां भुवं बली । उदतिष्ठद्राजधान्याः सविधादेव सुस्सलः ॥१५२४॥
निर्दग्धुं कलशा[1] तत्प्रस्तुतं भूपतेः सुतः । बुप्पापराभिधो भोजदेवो योद्धुं विनिर्ययौ ॥१५२५॥ 1525
आत्मवच्छङ्कमानेन कुमाराणां प्रदुष्टताम् । यो भाव्यर्थबलात्पित्रा हतौजा विदधे सदा ॥१५२६॥
कृतो गत्यन्तराभावात्तदानीं तु निरङ्कुशः । केषु केषु न युद्धेषु योधानामग्रणीरभूत् ॥१५२७॥
प्रपितामहतुल्यः स स्याच्चेत्प्रागेव वर्धितः । कुर्यादुत्साहसंपन्नो निर्दायादा न किं दिशः ॥१५२८॥
नामीतिविश्राम कश्चित्प्रयोगस्तु विधीयते । अत्रावलम्भ्यते सर्वो विषयश्चस्तु दुर्लभः ॥१५२९॥

---

१५०२. [1]) Thus corr. by $A_1$ from °भिर्नन्द्रराजो°.—[2]) Thus corr. by $A_1$ from चारमजः. १५१७. [1]) Emended; A °हत्स°. १५२३. [1]) Emended with C; A वयसौ. १५२५. [1]) Thus $A_1$; C कलशाख्यं; doubtful.

1530 स राजसूनुरुद्दामविक्रमस्य रिपोरभूत् । अत्युद्दामोधिकं जातस्तिमेरिव तिमिंगिलः ॥१५३०॥
कृतप्रभावं पितरि प्रपन्ने विगर्हणां नार्हति तत्प्रसूतिः ।
कल्कीभवेद्योस्तिलमुज्झ्यते किं तैलेन दत्तः कुसुमाधिवासः ॥१५३१॥
देवेश्वरात्मजः पित्र्यः पार्थिवेनाधिगौरवम् । वर्धितोप्यभजत्पापः प्रतिपक्षसमाश्रयम् ॥१५३२॥
ततस्तदात्मजो भिक्षुः प्रस्थिते सुस्सलाहवे । नृपेणार्थ्यमानोर्थं खेदात्सावज्ञमीक्षितः ॥१५३३॥
1535 ज्ञास्यस्यथान्तरं राजन्ममेत्युक्त्वा विनिर्गतः । खड्गधाराजलैर्मानी म्लानिमक्षालयद्रणे ॥१५३४॥
सर्वनाशादभूद्दुःखं तथा न हृदि भूपतेः । तदन्तरापरिज्ञानात्कृतज्ञस्य यथाधिकम् ॥१५३५॥
विभवैर्नित्यसंमूढा जानते त्वन्तरं नृपाः । तदा शक्या यदा तेषां प्रलापैरेव सत्क्रिया ॥१५३६॥
भोजेन निर्जितानीको विद्रुतः सुस्सलो रणात् । लवणोत्सं पलाय्यागाद्विर्दर्शितगतागतः ॥१५३७॥
प्रत्यावृत्तस्ततो भोजस्तीव्रातपकदर्थितः । उद्यानान्तस्तनुं तल्पे पित्रा सह मुहुर्जहौ ॥१५३८॥
अथोत्तरेणोदतिष्ठन्नादः पारान्नृपौकसः । ज्यायान्मल्लात्मजः प्राप्तः सेतुराच्छिद्यतामिति ॥१५३९॥
1540 सुस्सलेन हतं राज्यं नाद्यायासि द्रुतं यदि । स दण्डनायकेनाभूत्संदिष्ट इति पापिना ॥१५४०॥
अतो जवेन चाविक्षत्प्रथमं चावधीन्मृधे । नरेन्द्रेश्वरदेवाग्रवर्तिनं देवनायकम् ॥१५४१॥
अथोज्जगाम स्यामस्थः सह व्यूहेन सादिनाम् । नगराधिकृतो नागस्तस्यामाङ्कुरिसैनिकः ॥१५४२॥
यत्रास्थां पार्थिवोबध्नात्प्रधानपृतनान्विते । बभार नोच्चलाशङ्कां सुस्सलाहवनिर्गतः ॥१५४३॥
अल्पसैन्यो मल्लसूनुर्यावत्तस्मादशङ्कत । अपनीतशिरस्त्राणस्तावत्स तमवन्दत ॥१५४४॥
1545 मण्डलेश्वरवत्सं स प्रियं शत्रोरविश्वसन् । ऊचे स्ववेश्म याहीति स च पापस्तथाकरोत् ॥१५४५॥
तस्य द्रोहफलं दृष्टमेतस्मिन्नेव जन्मनि । मण्डले यदनन्यस्मिन्भिक्षित्वा जीवितं जहौ ॥१५४६॥
ततो राजा सरित्तीरं प्राप्तः प्रैक्षत डामरान् । सेल्यमे श्यामविकृतान्दावदग्धान्द्रुमानिव ॥१५४७॥
बलक्षवारबाणस्य तेषां मध्ये वपुर्बभौ । परं जनकचन्द्रस्य शुक्रस्येव तमोन्तरे ॥१५४८॥
महासेतुः स घटितो राज्ञा नौभिः स्वसिद्धये । पर्यवस्यन्विधिवशाच्छत्रूणां सिद्धये पुनः ॥१५४९॥
1550 अथादहद्धुरादाय वह्निं हर्म्यचतुष्किकाम् । शतद्वारे मर्तुकामा देव्यः शाहिसुतादिकाः ॥१५५०॥
लोको विरक्तः सेल्यमे दायादैः सह संगरम् । ददर्शाश्वयुजीलागिमिव निर्विक्रियः प्रभोः ॥१५५१॥
त्रिजये सावशेषेसौ[1] वह्निदानोद्यताः प्रियाः । अनिशं वारयन्राजा सेल्यमे रणमग्रहीत् ॥१५५२॥
अथ विन्यस्तवर्माणं राजसेनागजं शरैः । सेतोर्जनकचन्द्राद्याः प्रमुखस्थमताडयन् ॥१५५३॥
स विद्धो मर्मसु शरैः पूत्कारोद्गारकृद्गजः । स्वचमूमेव चरणैरमृद्नाद्विमुखीकृतः ॥१५५४॥
1555 विधिनेव विरुद्धेन सिन्धुरेण कदर्थिता । भज्यत्पत्तिहयारोहा समपद्यत वाहिनी ॥१५५५॥
सेतुं तीर्णस्ततो वैरिसैनिकैर्विमुखीकृतः । शतद्वाराङ्गनं त्रस्तः साश्वारोहोविशन्नृपः ॥१५५६॥
उदात्तवेषरहितो[1] रहोपि ददृशे न यः । भुञ्जानस्यापि यस्यास्यमुद्रा नैव व्यभाव्यत ॥१५५७॥

---

१५३०. [1]) Emended with C; A जाता तिमेरिव. १५३१. [1]) Emended; A कल्कीं°, corr. by later hand into कल्की°. Cf Böhtlingk, *Sanskrit Wörterbuch in kürzerer Fassung*, vi. 214 *b*. १५५२. [1]) Emended; A सावशेषोसो. १५५७. [1]) Emended; A °वेषर°.

स भयद्विगुणाकीर्णस्वेदप्रस्विन्नविग्रहः । पुनः पुनः क्षिप्यमाणस्तत्रमीसयोर्निजैः ॥१५५८॥
अनवस्थितपार्ष्ण्यन्ताघातप्रचलितं हयम् । निरोद्धुं बहुशः कर्षन्नष्टवल्गाग्रहं करम् ॥१५५९॥
खल्वाटशीर्षपर्यन्तलम्बिनीः कुन्तलच्छटाः । प्रापयञ्श्रवणोपान्तं करेण गलितासिना ॥१५६०॥ 1560
लडल्लम्बनिर्भुग्नभोग्रपालिलताञ्चलात् । कालाहिनेव मूर्तेन वेष्टितोच्छुष्ककन्धरः ॥१५६१॥
निस्ताम्बूलतयोच्छुष्कौ जतुपीताविवासकृत् । ओष्ठावुत्क्षिप्य कृच्छ्रेण विह्वलो जिह्वया लिहन् ॥१५६२॥
कनीनिकासक्तरेणु क्षामधूसरमाननम् । उत्तानीकृत्य पृष्ठस्थाः पश्यन्दीनमनाः स्त्रियः ॥१५६३॥
परिभ्रमन्नङ्गनान्तस्त्रस्तः स ददृशे जनैः । वह्निदानोद्यतांस्तांश्च वारयन्करसंज्ञया ॥१५६४॥
मल्लराजस्य वेश्माभूद्राजधान्यन्तिकेपि यत् । तीर्त्वा जनकचन्द्रेण तत्र वह्निरदीयत ॥१५६५॥ 1565
राजधान्युन्मुखं दृष्ट्वा ज्वलन्तं वह्निमागतम् । भेजे पलायनं भोजो राज्यं निश्चित्य हारितम् ॥१५६६॥
स धूमैर्विद्विषां भीमैर्नडैरिव तिरोहितम् । द्वारं भित्त्वा तुरंगस्थः प्राङ्गणान्निर्ययौ बहिः ॥१५६७॥
पञ्चषैः सादिभिः सार्धं लोहरोन्मुख्यमाश्रितः । प्रतस्थे सेतुमुत्तीर्य सिंहराजमठाग्रगम् ॥१५६८॥
यातस्य वृकपथात्सूनोः सासुरालोकयन्दिशम् । राजाश्ववारैः सहितो वेश्मनां बहिरभ्रमीत् ॥१५६९॥
अत्रान्तरे मर्तुकामास्त्रातुं काश्चिन्नृपाङ्गनाः । अश्मभिस्तत्परिजनैरभज्यत चतुष्किका ॥१५७०॥ 1570
शाहिपुत्र्यस्तदज्ञात्वा[1] शत्रवः पतिता इति । मत्वा चतुष्किकाभृङ्गे ततोभिमुददीपयन् ॥१५७१॥
वास्तव्या डामराश्चाथ भ्रान्तोन्योन्यमुदायुधाः । ज्वलतः क्ष्मापतिगृहाद्भाण्डागाराण्यलुण्ठयन् ॥१५७२॥
केचित्तत्र वधं प्रापुर्विपदं केचनात्यजन् । अदृष्टवस्तुसंप्राप्तिः केषांचिद्धास्यदाभवत् ॥१५७३॥
सितेयं शर्करेत्येकः कर्पूरं वदनेक्षिपत् । ततः सरिति तद्भाण्डे निर्दग्धवदनो व्यधात् ॥१५७४॥
पामरैः स्वर्णचित्राणि केश्चित्स्वर्णमहेच्छया । विनिर्दग्धानि वासांसि विचितं भस्म चादरात् ॥१५७५॥ 1575
अविद्धमौक्तिकस्तोमः[1] सिततण्डुलविभ्रमात् । क्वचित्पामरनारीभिर्घरट्टेषु विचूर्णितः ॥१५७६॥
वसन्त्यदृश्ये[1] देशेस्मिन्खलीकारेण तादृशा । एवं विडम्बिता लक्ष्मीर्न पुनः क्वाप्यदृश्यत ॥१५७७॥
विद्याधरीरिवोदात्तवेषाः[1] क्ष्मापतिसुन्दरीः । हरन्तो डामराः क्रूरा दृश्यन्ते स्म पदे पदे ॥१५७८॥
वसन्तलेखाप्रमुखाः सस्नुषास्तत्र चक्रिरे । निर्यातशेषाः स्वान्देहान्राज्ञ्यः सप्तदशाग्निसात् ॥१५७९॥
गृहाणां दह्यमानानामभूयत[1] चटत्कृतिः । गाढोष्मक्वथमानाभ्रसिन्धुघोषप्रतीतिकृत् ॥१५८०॥ 1580
श्रीपद्मश्रीप्रपापार्श्वस्थितस्तद्वीक्ष्य पार्थिवः । आर्षं श्लोकमिमं शोकात्स्मृत्वापाठीत्पुनः पुनः ॥१५८१॥
प्रजापीडनसंतापात्समुद्भूतो हुताशनः । राज्ञः कुलं श्रियं प्राणान्नादग्ध्वा विनिवर्तते ॥१५८२॥
दग्ध्वाथ राजधानीं तामुच्चलो डामरान्वितः । अत्यक्तसैन्यं वीक्ष्यारिं पारमेवातरत्पुनः ॥१५८३॥
ततो युद्धा मर्तुमिच्छन्निन्ये राजाकुलात्मताम् । उच्चावचैर्मतिद्वैधैः पदातीनां क्षणे क्षणे ॥१५८४॥
गच्छन्ननन्तपालादिराजपुत्रधिया मृधम् । दण्डनायकवाक्येन न्यषिध्यत पदे पदे ॥१५८५॥ 1585
युध्यस्व लोहरं वापि याहीत्यूचे त्वं[1] चम्पकः । प्रयागस्योत्तरः पक्षः प्रत्यभात्तामिमः पुनः ॥१५८६॥

---

१५७१. 1) Emended; A °स्तदा ज्ञात्वा. १५७६. 1) Emended; A 'स्तोमसित°. १५७७. 1) Emended; A वसत्यदृश्ये. १५७८. 1) Emended; A °वेशाः. १५८०. 1) Emended; A °भूवन्त. १५८६. 1) त्वं wanting in A; supplied with R C.

वार्तामबुद्ध्वा पुत्रस्य नृपतिर्व्याकुलीभवन् । पदवीं भोजदेवस्य याहीत्याह स्म चण्पकम् ॥१५८७॥
प्रयागमात्रानुचरो राजन्संपत्स्यसे क्षणात् । तस्मान्मामपि मा त्याक्षीरित्यूचे तं स निःश्वसन् ॥१५८८॥
सोन्तर्बाष्पस्तं बभाषे निर्द्रोहोसीति कथ्यते । त्वयाप्यस्मिन्क्षणे कस्मात्तस्मादुल्लङ्घ्यते वचः ॥१५८९॥
1590 विना पुत्रं न पश्यामि सार्केपि दिवसे दिशः । त्वं तस्मिन्नङ्कसंवृद्धे न मन्युं कर्तुमर्हसि ॥१५९०॥
अश्वामिमित्तं कलहस्तेष्वेव दिवसेष्वभूत् । मन्त्रिणो राजपुत्रेण तेन तस्याभिमानिना ॥१५९१॥
गिरा प्रभोरुपालब्धस्तदागूरणगर्भया । स लज्जानम्रवदनो राजपुत्रानुसार्यगात् ॥१५९२॥
पञ्चाशताश्ववारैः स भ्रातृभृत्यादिभिः समम् । उत्तीर्णः सरितः पारमात्मना पञ्चमोभवत् ॥१५९३॥
भ्रातृद्वयेश्ववारे च शोषाराजात्मजे पथि । हताश्वे पतिते सोभूज्जनकेनान्वितो भ्रमन् ॥१५९४॥
1595 अनाप्य राजसूनोर्वार्तां वा वर्त्मनाप्यटन् । गलितेहनि संप्राप वितस्तासिन्धुसंगमम् ॥१५९५॥
एवमाप्तान्परान्पुत्रमन्वेष्टुं प्राहिणोन्नृपः । अन्येपि तन्मिषं लब्ध्वा तस्य पार्श्वादवाचलन् ॥१५९६॥
उत्कोचादायिना क्रुद्धं राजपुर्यादिविग्रहे । योग्यानसहता भृत्यान्निःसारः कटकः कृतः ॥१५९७॥
लोहरप्रस्थितौ विघ्नं राजा पुत्रस्य कारितः । प्रवेशितः पुरं वैरी राजन्यन्याहवाकुले ॥१५९८॥
सर्वस्वध्वंसिना येन स एव नृपतेरभूत् । तदाप्युचितकर्तव्यनिवेद्वा दण्डनायकः ॥१५९९॥ तिलकम्॥
1600 राज्ञः कृत्स्नावसन्नस्य शृण्वतो बहुमन्त्रितम् । नैकत्र रुचिः कर्तव्ये क्वाप्यधीरधियोभवत् ॥१६००॥
सर्वैर्यथा निखिलरन्ध्रमुखेन वंशः संपूरिता न खलु शब्दमपाकरोति ।
तैस्तैस्तथा बहुपथप्रचयेन मन्त्रः संकल्पितः किल न निश्चयमभ्युपैति ॥१६०१॥
भाग्यक्षयस्यैतदेव लक्षणं प्राकृतोपि यत् । अपृष्टः कथयेद्धार्ष्ट्यान्मन्त्रं स्वहृदयोचितम् ॥१६०२॥
त्रैलोक्यनाम्ना सूतेन शंसता दण्डनायकम् । निरोध्य वल्गामित्यूचे भूय. क्ष्माभृद्रणोन्मुखः ॥१६०३॥
एकाङ्गैः साश्ववारैः प्राग्जिगाय त्वत्पितामहः । तद्गच्छामोक्षपटलोपान्तं तत्संग्रहेच्छया ॥१६०४॥
1605 पदातिप्रायसैन्यांस्तान्निहन्मः संहतान्रिपून् । पश्चान्निपत्य तैः साकं श्येना इव विहंगमान् ॥१६०५॥
ततश्चिचलिषावेव राज्ञि तत्कटको दिशः । सवृष्ट्यम्बुहतो रङ्गप्रेक्षिलोक इवागमत् ॥१६०६॥
पारेवितस्तां प्राप्तेभ्यः पाथेयायात्मजन्मनः । स शोयाराजजन्मभ्यो रत्नग्रैवेयकाद्यदात् ॥१६०७॥
आरामिकैस्तैः संप्राप्ते राजचिह्ने क्षणादिव । तेजःस्फारोर्जितो राजा गतश्रीर्ददृशे जनैः ॥१६०८॥
पदे पदे भ्रश्यमानसैन्योक्षपटलादिषु । स्थानेषु चाश्रमीत्कश्चिन्न च तस्यापदन्तिकम् ॥१६०९॥
1610 संश्रयार्थ्यथ बभ्राम सायं वेश्मानि मन्त्रिणाम् । प्रवेशं प्रददौ चास्य न कोपि द्वारि तस्थुषः ॥१६१०॥
प्रायोपवेशकुशलाः शक्तास्त्वन्ते न कुत्रचित् । मिथ्यासंभावनाभूमिर्भूपानां ब्रह्मबन्धवः ॥१६११॥
ये केपि देशे सन्त्यस्मिंस्तत्रैकेष्वास्थया भ्रमन् । प्रविविक्षुर्गृहान्प्राप कपिलाख्यस्य मन्त्रिणः ॥१६१२॥
तस्मिंल्लोहरकोट्टस्थे तत्पत्न्या स्थातुमर्थितः । नैभिश्च कोट्टं गन्तुं न प्राविक्षद्दैवमोहितः ॥१६१३॥

---

१५९४. [1]) Emended; A भ्रातृद्वारे.—[2]) Thus A; cf. vii. 1607. १५९७. [1]) Emended; A °भिसारः. १५९८. [1]) Emended; A राजपुत्रस्य. Cf. vii. 1453. १५९९. [1]) $A_1$ writes here ३ instead of तिलकम्. १६०४. [1]) Emended; A प्राग्जिगायन्तस्त्विता°, C °गाय तत्पिता°. १६०७. [1]) $A_1$ शोया – – राजन्मभ्यो, ज subsequently supplied by $A_1$ or later hand · but comp. शोषाराजात्मजे. vii. 1594.

आर्तस्य तस्य तत्पुत्रैः पितृद्रोहकारिभिः । ऋणिकैरुत्तमर्णस्य स्वं निःस्वैरिव गोपितः ॥१६१४॥
सदोषोस्मीति सोज्ञासीत्स्वयं शृण्वन्विगर्हणाम् । तदैव गोपिताशेषकृत्यो दुर्मन्त्रिभिः पुरा ॥१६१५॥ 1615
गृहीतसर्वनैराश्यः पार्श्वस्थेष्वप्यविश्वसन् । अभूत्प्रद्युम्नमुत्तीर्णो नितरां विरलानुगः ॥१६१६॥
प्रख्यापयन्तः संभूतिं षट्त्रिंशति कुलेषु ये । तेजस्विनो भास्वतोपि सहन्ते नोच्चकैः स्थितिम् ॥१६१७॥
तेप्यन्तेनन्तपालाद्या राजपुत्रास्तमत्यजन् । सान्द्रतां दधति ध्वान्ते स्थगिताश्वाः पदे पदे ॥१६१८॥[1]
वाहनाज्जोड्डिलमठोपान्तं प्राप्यावतीर्णवान् । स दण्डनायकेनापि तत्यजे सानुजन्मना[1] ॥१६१९॥
इहाहमच्छभुरावासस्तत्र वस्तुमिमां निशाम्[1] । वीक्ष्य ते स्थानमेष्यामीत्युक्त्वा व्याजेन सोचलत् ॥१६२०॥ 1620
यियासोरनुजं तस्य पाथेयार्थं प्रयागकः । ययाचेङ्गुदमस्मै स प्रादात्सक्तून्स तत्पुनः[1] ॥१६२१॥
एकांशुकावशेषश्रीस्ततो वा शेषजीवितः । प्रयागशेषानुचरो नृपतिः समपद्यत ॥१६२२॥
सूदश्चाण्पकभृत्यस्य जलकाख्यस्य तत्क्षणम् । मुक्तो नामान्तिकं प्राप्तो नृपतेराप्ततामगात् ॥१६२३॥
उत्तीपत्रिहितैः खातैरमे दुःसंचरा क्षितिः । भ्राम्यतस्तानुवाचेति नारी काचिद्गृहान्तरात् ॥१६२४॥
ततस्तीरे वितस्ताया निषण्णेस्मिन्प्रयागकः । गन्तुं जयपुरं कोट्टमाजुहाव स नाविकान् ॥१६२५॥ 1625
स हि प्राक्संविदं चक्रे तत्रत्यैः सह शस्त्रिभिः । नृपं प्रेयाश्रयं नेतुं भीमादेवस्य[1] मन्दिरम् ॥१६२६॥
उच्चलाश्रयिणाप्यूचे भीमादेवेन येन सः । राज्ञोनुगो गमिष्यामि प्रविष्टस्योपवेशनम् ॥१६२७॥
नौचरैराहृतां नावमारुरोह न भूपतिः । नाशोन्मुखः समासन्नदृष्टिपातभयाकुलः ॥१६२८॥
पर्यापतत्कालकरस्थभोगिसंदर्शनेनेव मतिप्रदीपः ।
क्षिप्रं प्रशान्त्युन्मुखतामुपैति विनाशकालेषु शरीरभाजाम् ॥१६२९॥
तस्मिन्द्रोहक्षुभिक्षेपि यस्य मानव्रतः परम् । अनन्यालोकिनी दृष्टिर्भेजे कुलवधूव्रतम् ॥१६३०॥ 1630
नीलाश्वीयः स बिम्बाख्यो डामरैर्मिलितोहितैः[1] ।
तदापि प्रययौ राज्ञो विस्मृतिं संश्रयार्थिनः ॥१६३१॥ युगलकम् ॥
ततः प्रावर्तत त्यक्तुं वारि वारिमुचां गणः । क्षमामिव क्षालयितुं द्रोहस्पर्शेन दूषिताम् ॥१६३२॥
भूर्निर्जना वृष्टिपातस्तमिस्रा दुःसहायिता[1] । वैरिभीतिरिति प्राभूत्किं किं तस्य न दुःखदम् ॥१६३३॥
इति वृत्तानुरोधेन धिग्दुष्कर्मविधायिनाम् । अस्मर्तव्यमपि व्यक्तं नाम पाहिष्यतेधुना ॥१६३४॥
सोमानन्दाभिधानस्य पूज्याः सिद्धस्य देवताः । सोमेश्वराभिधाः सन्ति काश्चित्पितृवनान्तरे[1] ॥१६३५॥ 1635
तल्लाञ्छिताङ्गना तुङ्गतरुप्रच्छन्नवाटिका । अभूद्गुणाभिधानस्य[1] कुटी क्षुद्रतपस्विनः ॥१६३६॥
वारस्त्रियां[1] स विरहभुजंगीतिप्रसिद्धया । भिक्षाख्यया समं भेजे चेष्टितं कुट्टिनोचितम् ॥१६३७॥
तस्य प्रतापगौरीशदेवागारान्तिकस्थितेः । कुटीं मुक्तेन तां निन्ये क्ष्माभृद्वस्तुं स तां क्षपाम्[1] ॥१६३८॥
मुक्तमालम्ब्य नृपतिस्तमालम्ब्य प्रयागकः । यान्ति स्म विद्युद्द्योतेन क्ष्मां पश्यन्तोन्तरान्तरा ॥१६३९॥
निरुष्णीषोङ्गसंस्यूतकृतत्रासाः स्खलन्नृपः । स तां प्रयागमुक्ताभ्यां कथंचित्प्रापितः कुटीम् ॥१६४०॥ 1640

१६१८. [1]) $A_1$ writes here ३ (instead of युग्मम्?). १६१९. [1]) Emended; A सोनुजन्मना. Cf. vii. 894. १६२०. [1]) Emended; A निजम्. १६२१. [1]) Emended with C; A सं पुनः. १६२६. [1]) Emended; A भूमादेवस्य. १६३१. [1]) Emended; A डामराभि°. १६३३. [1]) Thus A. १६३५. [1]) Thus $A_3$; $A_1$ °वनान्तिके. १६३६. [1]) Thus $A_3$; $A_1$ अभूच्छिकाभि°. १६३७. [1]) वारस्त्रिया supplied by $A_3$ in space left by $A_1$. १६३८. [1]) Emended; A क्षमम्.

तदा कुमन्त्रिनिष्कृष्टं स व्यापद्वारणक्षमम् । शोचन्सस्मार कन्दर्पं रुद्रं दैत्यमिवोत्पलः ॥१६४१॥
प्राकारमूर्ध्ना मुक्तेन प्रविष्टेन हृतार्गलाम् । नृपः कुटीप्राङ्गणोर्वीं विवेशास्थिततापसाम् ॥१६४२॥
विशतोश्मक्षतः पादस्तस्यासृग्दक्षिणोस्यजत् । मेने तेनानिमित्तेन स मृत्युं समुपस्थितम् ॥१६४३॥
कुट्यामर्गलरुद्धायां निषण्णस्याङ्गने ययौ । रात्रिर्भीतिमतो[1] भीमा तस्य घोराभ्रमालिनी ॥१६४४॥
1645 पङ्कोपलिप्तः पङ्काङ्कस्थण्डिलस्थो निनाय ताम् । दासकम्बलिकाच्छन्नगात्रो वृष्टदुस्तरां निशाम् ॥१६४५॥
विसस्मारान्तरादुःखमासीनप्रचलायितैः । निर्निद्रस्त्वभवच्छ्वभ्राद्धृदयमिव समाकुलः ॥१६४६॥
कोहं केनाभिभूतोद्य क्व वर्ते कोनुगोधुना । किं कृत्यमिति निध्याय मुहुर्मुहुरकम्पत ॥१६४७॥
हृतं राज्यं प्रिया दग्धा भ्रष्टः सूनुरबान्धवः । जातोस्म्येकाक्ष्यपाथेयो लुठन्भिक्षाभुजोङ्गने ॥१६४८॥
इत्येकैकं च निध्याय दुःखं नैक्षिष्ट सोपरम् । प्राप्तप्रसादं शोचन्तमात्मतुल्यं कथास्वपि ॥१६४९॥ युग्मम् ॥
1650 भोजस्तु वाजिभिर्द्वित्रैरवशिष्टैः समं व्रजन् । हस्तिकर्णान्तरं प्राप निर्गत्य नगरान्तरात् ॥१६५०॥
व्रजतस्तस्य धीरासीन्नियतं पञ्चषैर्दिनैः । पुनः संप्राप्नुयां राज्यं यदीन्द्रोपि भवेद्रिपुः ॥१६५१॥
गर्भवास इव पौरुषे स्फुरन्किं न कर्म पुरुषश्चिकीर्षति ।
कर्मवायुरिव संस्पृशन्हठान्मूढमेव कुरुते तु तं विधिः ॥१६५२॥
मातृभिर्दत्तपाथेयं भृत्यं नागेश्वराभिधम् । प्रतीक्षमाणश्चक्रे स रङ्गवाटान्तरे स्थितिम् ॥१६५३॥
शून्ये देवगृहे तत्र तिष्ठञ्छ्रुत्वा तमागतम् । स निर्ययौ तेन तस्मिन्निःशङ्कं प्रहृतं पुनः ॥१६५४॥
1655 तत्र प्रादुष्कृतद्रोहे क्षत्रधर्मादविच्युतः । राजपुत्रः स यच्चक्रे न तत्कस्याद्भुतावहम् ॥१६५५॥
स सिंह इव संहारं कृत्वा युधि विरोधिनाम् । अस्राङ्गरागलिप्ताङ्गो वीरशय्यामभूषयत् ॥१६५६॥
भ्रातास्य मातुलापत्यं विपेदे पद्मकाभिधः । खेलो लालितकश्चैव संख्येसंख्यपराक्रमः ॥१६५७॥
मठं सूर्यमतीदेव्याः शर्वर्यामु लोविशत् । भ्राताप्यस्य रणभ्रान्तो लवणोत्सात्समाययौ ॥१६५८॥
हतं भोजं श्रुतवतोर्हर्षमात्रे स्थिते तयोः । मनस्युत्खातशूलेभिरेवैका पर्यशिष्यत ॥१६५९॥
1660 प्राप्तमप्राप्तवद्राज्यं तथापि प्रत्यभात्तयोः । प्रवासे विस्मृते राज्यसुखे लब्धे च कुत्रचित् ॥१६६०॥
प्राह्णे कुतश्चिदानीतो मुक्तेनान्विष्य तापसः । प्रणम्य नृपतिं चक्रे स्वकुटीं तां[1] निरर्गलाम् ॥१६६१॥
तां दंश[1]मशका[2]कीर्णामास्तीर्णतृणविष्टराम् । कृताम्बुसेकां मुक्तेन नृपतिः प्राविशत्कुटीम् ॥१६६२॥
यद्गिरा बहुमानोभूच्छ्रुतया भूभुजामपि । स भूभृच्चाटुकारित्वं भीतो भिक्षाभुजोप्यगात् ॥१६६३॥
भिक्षाकस्योचितं ग्राम्यमनुदात्तं त्रपावहम् । आलापाभ्यवहाराभ्यां तस्य शृण्वन्स विव्यथे ॥१६६४॥
1665 स भिक्षाकः प्रयागेन विक्रयायाधरांशुकम् । निजं दत्त्वा विससृजे विपणिं भोज्यसिद्धये ॥१६६५॥
कटूक्तिः कटुवागग्रे परोक्षं भेदभीतिकृत् । कुतापसो दौस्थ्यहेतुर्नृपस्यारिर्यथाप्यभूत् ॥१६६६॥
मध्याह्ने स्कन्धविन्यस्तभोज्यभाण्डकरण्डिका । तपस्विन्याप्यथानिन्ये तेन क्षुद्रतपस्विना ॥१६६७॥
भृत्यभिक्षाकयोः पूर्वं स्त्रिया अप्यथ पार्थिवः । स्वं वीक्ष्य गोचरीभूतं निराशो जीवितेभवत् ॥१६६८॥

---

१६४४. [1]) Emended with C; A °भीतिवतो. १६६१. [1]) प्राह्णे कुतश्चि, पस·, चक्रे स्वकुटीं तां, supplied by $A_2$ in space left by $A_1$. १६६२. [1]) Thus corr. by $A_2$ from $A_1$ चाषम°.—[2]) Emended; A °मषका°.

तेन प्रयागोपहृतं भोज्यं तदनुरोधतः । स्पृष्टमेव न भुक्तं तु तीव्रदुःखोल्बणात्मना ॥१६६९॥
का वार्तेति प्रयागेन प्राङ्गनस्थेन पृष्टया । तापस्या प्राम्बया व्यक्तमुक्तो भोजवधस्ततः ॥१६७०॥ 1670
मिथ्यैतादिति तेनार्थं[1] कथ्यमानोपि पार्थिवः । श्रुतिं तामङ्गशकुनं परीक्ष्याबुद्ध नान्यथा ॥१६७१॥
नारोहति गिरं शत्रोरप्रियाख्यायिनोपि यत् । तस्य संववृते दुःखं निमग्नस्य तदापदि ॥१६७२॥
स शोचन्नात्मजं बाल्ये नीत्वै यां यन्त्रणां व्यधात् । आजन्म दुःखदायित्वं मेने तस्यात्मनस्तया[1] ॥१६७३॥
हतः स समरे वृत्त्या प्रवीरस्पृहणीयया । अज्ञे तेनातिवात्सल्यादङ्कुशायैव घातितः ॥१६७४॥
गात्रेषु हारान्पुत्रस्य यौवनप्रूढवक्षसि । पश्यन्नात्मनि संकल्पैर्विह्वलः सोकृताशिषः ॥१६७५॥ 1675
रक्षणीयो हतो[1] बालो वृद्धस्त्वेवं स्वजीवितम् । रक्षाम्यनुचिताचारै[2]र्जिह्मायेति स चिन्तयन् ॥१६७६॥
एवं स पुत्रशोकेन धृतावाच्यव्यथो व्यथन् । निनाय तापसावासे द्वितीयामपि यामिनीम् ॥१६७७॥
कृतार्थनः प्रयागेन प्रयातुं भगवन्मठम् । शोकहारितधी रात्रौ न संकल्पमपि व्यधात् ॥१६७८॥
लम्बेन्दुवदनं[1] सान्द्रावश्यायाम्भोस्रुवर्षिणी[2] । रथाङ्गाक्रन्दिनी रात्रिः सशोकेवाथ सागमत् ॥१६७९॥
क्षुत्पिपासापरिक्षामं प्रभुं वीक्ष्य स तापसः । प्रार्थ्यते स्म प्रयागेन प्रातर्भोक्तव्यसिद्धये ॥१६८०॥ 1680
उपनिन्ये विनिर्गत्य प्रविष्टस्तापसस्तयोः । सव्यञ्जनान्नपूर्णे द्वे पात्रे -- क्षणात्पुरः[1] ॥१६८१॥
कस्यापि गृहिणो यागोत्सवादिते मयाहृते । तस्मिन्नित्युक्तवत्यूचे विनिश्वस्य प्रयागकः ॥१६८२॥
राजन्स्वामिवियोगेस्मिन्पश्य लोकस्य सुस्थताम् । स तं जगाद विहसन्किं मूढ इव भाषसे ॥१६८३॥
यो गतो गत एवासौ तत्क्षत्या नापरः क्षतः । सर्वो निजसुखापेक्षी न किंचित्कोपि शोचति ॥१६८४॥
लोकैकचक्षुषि गते परलोकमर्के लोकः स्वपित्यखिल एव सुखं गृहेषु ।
कोन्यो विचिन्तयितुमर्हति विभ्रमेतत्तिष्ठेन्मया विरहमेत्य कथं किलेति ॥१६८५॥ 1685
पुत्रस्य स्नेहविश्वासः पूर्वमास्त[1] क्षये श्रुते । यथैकः प्रभवेन्नान्यस्तथा स्नेहोपि देहिनः ॥१६८६॥
अहमेव हतं पुत्रं श्रुत्वा जीवितजीवितम् । तिष्ठामि स्वस्थवद्यत्र तत्रान्यो निन्द्यतां कथम् ॥१६८७॥
इत्युक्त्वा विरते राज्ञि पुनर्गूढं प्रयागकः । प्रैरयत्तापसं[1] भोज्यं कर्तुं ते भाजने त्यजन् ॥१६८८॥
ह्यस्तनव्ययशिष्टं मे पर्याप्तं नास्ति वेतनम् । यते तथापीत्युक्त्वा स सखेद इव निर्ययौ ॥१६८९॥
गोप्यं रहस्यभणितमत्यल्पहृदयातिथि । अमृतं पारतमिव नाल्पसत्त्वैः सुदुर्जरम् ॥१६९०॥ 1690
कुल्यो मनोरथो नाम विप्रस्य वनवासिनः । सुहृत्तपस्विनस्तस्य तां कथामुपलब्धवान् ॥१६९१॥
राज्ञः संदर्श्य दायादं भवामो भूतिभाजनम् । इत्युक्त्वा तेन निन्ये स द्रोग्धृतां[1] क्षुद्रतापसः ॥१६९२॥
अज्ञो भृत्येन गर्ह्येण जातः सोन्त्येन केनचित् । सदृशं यत्सदसतोर्ज्ञापकं जन्मकर्मणोः ॥१६९३॥
इल्लाराजस्तां प्रवृत्तिं बुद्ध्वा ताभ्यां न्यवेदयत् । उच्चलाय समादिक्षत्कार्ये तत्र तमेव सः ॥१६९४॥

---

१६७१. [1]) Emended; A तेनार्धं. १६७३. [1]) स्तया supplied by $A_2$ in space left by $A_1$. १६७६. [1]) Thus corr. by $A_2$ from $A_1$ हुतो.—[2]) रक्षाम्यनु and ताचारै supplied by $A_2$ in space left by $A_1$. १६७९. [1]) Thus corr. by later hand from $A_1$ °वदना.—[2]) Emended with C; A °श्यायाम्भो°. १६८१. [1]) Two *aksharas* wanting in fourth *páda;* the *lacuna* not marked in A; C तद्वीक्षणात्पुरः. १६८६. [1]) Thus $A_1$; $A_2$ पूर्वमासक्षये. १६८८. [1]) प्रैरयत्तापसं supplied by $A_2$ in space lef by $A_1$. १६९२. [1]) Emended; A द्रोग्धृतां.

1695 केचित्तु भूर्तिभिक्षाख्यमिच्छाराजोपसर्पणे । कायस्थं कारणं प्राहुस्तयोस्तापसविप्रयोः ॥१६९५॥
वार्ता चेद्दवगीतेयं सुबहुश्रोत्रसंकुले । काले तद्भृत्यपाशस्य तस्यैव द्रोहमुख्यता ॥१६९६॥
श्वपाकस्कन्धमारूढो लब्ध्वा तास्ता विमाननाः । विपेदे यत्स कारायां युक्तं तत्तस्य कर्मणः ॥१६९७॥
क्षुत्तप्तो हर्षदेवस्तु प्रयागेनार्थितोसकृत् । प्रत्यग्रे पुत्रशोकेपि भोजनायाकरोन्मनः ॥१६९८॥
गृहीतभोजनं जानन्प्राप्तं प्राप्तं स तापसम् । तमोरैर्बहिरैक्षिष्ट नीडाच्छिशुरिवाण्डजः ॥१६९९॥
1700 अपश्यंश्च कुटीं कृत्स्नां वेष्टितामेत्य शस्त्रिभिः । शुश्राव चाङ्गनद्वाराद्धार्यमाणार्गलाध्वनिम् ॥१७००॥
जानञ्ज्ञातं ततो द्रोहमङ्गनात्तापसाधमम् । सशस्त्रिणं मुक्तमेहीत्याह्वयन्तं व्यलोकयत् ॥१७०१॥
मुक्तं विसृज्य कृत्वा च द्वारमुद्घाटिताररि । त्यक्तभीरादधे लघ्वीं क्षुरिकामन्तिकस्थिताम् ॥१७०२॥
एकस्तत्सविधं क्रूरः साहसाहंक्रियोन्मदः । आरुरोहाथ कृष्टासिधेनुः कवचितो भटः ॥१७०३॥
तं राजा संकट¹कुटीरुद्धायामोप्यपातयत् । क्षितौ व्यायामकुशलो नावधीत्कृपया पुनः ॥१७०४॥
1705 पतितेन हतेनार्थो वराकेणामुना न मे । इत्यूचे दुरहंकारग्रस्तस्तस्मिन्नपि क्षणे ॥१७०५॥
नीध्रमुत्पाद्य निपतन्नेकोन्योप्युत्पतन्भटः । भयाद्भूमौ न्यपततां तं विलोक्योद्यतायुधम् ॥१७०६॥
पृष्ठे पूर्वं प्रविष्टस्य¹ तिष्ठन्स्थानकनिष्ठुरः । स हरोरिव चामुण्डा रेजे दण्डाकृतिः क्षणम् ॥१७०७॥
न सिंहनादैर्नो भेरीतूर्यघोषैर्न चोन्मदैः । शस्त्रशब्दैः स शुशुभे भूपस्यान्तक्षणे रणः ॥१७०८॥
आखोर्भाण्डप्रवेशस्य बिडाला इव डामराः । परं प्रवेशितास्तस्य निःशब्दं शस्त्रिणः कुटीम् ॥१७०९॥
1710 अथान्यो नीध्रमार्गेण संप्रविष्टः प्रयागकम् । हत्वा दोष्णि च शीर्षे च राजानं समुपाद्रवत् ॥१७१०॥
राज्ञः प्रहरतः शस्त्रं वञ्चयित्वा स शस्त्रभृत् । वक्षसि क्षुरिकाघातद्वयं प्रादात्कृतत्वरः ॥१७११॥
वर्णान्महेश्वरेत्येनान्निरुक्त्वा गतजीवितः । पपात निहतो भूमौ छिन्नमूल इव द्रुमः ॥१७१२॥
पलाय्य संप्रविशतो योग्यधीरस्य यादृशः । चक्रवर्त्यपि स प्राप वधं वेश्मनि तादृशम् ॥१७१३॥
नान्यः स इव कालेस्मिन्ददृशे भूतिमान्नृपः । गर्हानिर्हरणत्वं च तस्येवान्यस्य नेक्षितम् ॥१७१४॥
1715 यद्वैकेनैव संग्रामवैमुख्येनोन्नतात्मनः । सर्वप्रकारसुभगं माहात्म्यं तस्य खण्डितम् ॥१७१५॥
नेयबुद्धित्वमेवासीदथ वा तस्य दूषणम् । सर्वक्लेशावहा दोषाः कृत्स्नास्तन्मन्त्रिणां पुनः ॥१७१६॥
द्वाचत्वारिंशतिः¹ साष्टमासा यस्य वयःसमाः । स शुक्लभाद्रपञ्चम्यां हतोब्दे सप्तसप्तते ॥१७१७॥
राजा दुर्योधन इव स्ववंशच्छेदमिच्छता । सोभूज्जातकयोगेन कारितः स्वकुलक्षयम् ॥१७१८॥
तस्यासन्क्ष्मा¹र्कजौ जीवबुधौ शुक्रोष्णगू² शशी । तनयामित्रजामित्रखेषु कर्कटजन्मनः³ ॥१७१९॥

---

१६९५. ¹) Emended; A भूमिक्षा°. Cf. viii. 94. १७०४. ¹) Emended; A संकटी कु°. १७०७. ¹) Emended with C; A प्रविष्ट. १७१७. ¹) Emended; A द्वाचत्वारिंशतः. १७१९. ¹) Emended; A तस्यासी क्ष्मा°.—²) Emended with C; A °ष्णगी.—³) A₂ explains this verse by the following *janmachakra* :

चन्द्रदेत्येज्यंपापेषु खमदात्मजगेषु यत् । आहुः सुसंहिताकाराः कौरवादीन्कुलान्तकान् ॥१७२०॥ 1720
निर्ब्रह्मण्यो जनः कृत्स्नो देशेस्मिन्वैरिणोन्तिकम् । दस्योरिव शिरश्छित्वा स्वामिनोपि निनाय तत् ॥१७२१॥
तस्योत्तमाङ्गे भूभर्तुश्छिद्यमाने ससागरा । चकम्पे भूर्नरभ्रापि द्यौर्वृष्टिं महतीं जहौ ॥१७२२॥
तन्मुण्डे लगुडारूढे यदयुक्तं जनो व्यधात् । अभूत्तेनाभिशापेन सोयं दीर्घोपसर्गभाक् ॥१७२३॥
मण्डले देवबिम्बानां यथामुष्मिन्विपाटनम् । तथा नवं प्रववृते भूपतेर्मुण्डखण्डनम् ॥१७२४॥
नैक्षिष्ट तच्छिरः प्राप्तमौचित्यादुच्चलो नृपः । भूत्वा चिरमुदश्रुस्तु कारयामास वह्निसात् ॥१७२५॥ 1725
धिक्कष्टं तस्करस्येव तादृशश्चक्रवर्तिनः । नोच्चलाशां विना प्राप्ता शरीरेणान्तसत्क्रिया ॥१७२६॥
भृत्यस्त्यक्तो नष्टवंशो गौरकाख्येन केनचित् । स काष्ठागारिणा चक्रे नभोनाथ इवाग्निसात् ॥१७२७॥
दीर्घो हर्षनृपोदन्तः सोयं कोप्यद्भुतावहः । रामायणस्य नियतं प्रकारो भारतस्य वा ॥१७२८॥
भाग्याम्बुवाहतडितस्तरलाः श्रियस्तास्तत्क्षावसानविरसं प्रसभोन्नतत्वम् ।
तत्रापि नैष वत मोहहताशयानां शान्तिं प्रयाति विभवानुभवाभिमानः ॥१७२९॥
नात्रत्यप्यवरोधिकापरिकरे नैकापि चक्रन्द तं तावत्स्वप्यनुगेषु नानुसृतवान्कोप्यास्त तीर्थे न वा ।
लोकस्य स्वसुखोपलिप्समनसो वीक्ष्येति निःस्नेहतां निर्वेदं समुपेत्य नाश्रयति धिक्स्वान्तं वनान्ते रतिम् ॥१७३०॥ 1730
नादौ किंचिद्भवति नियतं यच्च पश्चान्न किंचिन्मध्येकस्मात्सपदि घटयन्सौस्थ्यदौःस्थ्यानुरोधम् ।
निःशीर्षाङ्घ्रिर्नट इव मुहुः कोपि जन्तुर्नटित्वा नो जानीमो भवजवनिकान्तर्हितः क्व प्रयाति ॥१७३१॥
श्रीः सातवाहनकुलेकृत[1] कान्तिराज[2]वंशे त्यजन्त्युदयराजकुले प्रतिष्ठाम् ।
शृङ्गं सुरैर्विरहितं जहती हिमाद्रेर्दिव्ये तटे सुरगिरेरिव वासरश्रीः ॥१७३२॥

इति काश्मीरिकमहामात्यचण्पकप्रभुसूनोः कल्हणस्य कवेः कृतौ राजतरङ्गिण्यां सप्तमस्तरङ्गः ॥
समाष्टानवतावस्यां व्यहोनायां महीभुजः । षडत्रोदयराजस्य वंशे जाताः प्रकीर्तिताः ॥
राजानः ६ श्लोकाः १७२३[1] ॥

१७२०. [1]) $A_2$ gloss भ्रु. १७३२. [1]) Emended; A श्रीसात°.—[2]) Emended; A कान्तराज°. Cf. vii. 1285.
*Colophon.* Thus $A_1$, perhaps for १७३२. $A_1$ adds here लिखितश्चेष मया राजानकरत्नकण्ठेन.

## ॥ अष्टमस्तरङ्गः ॥

ॐ नमो विघ्नहर्त्रे ।

प्रौढाः कञ्चुकिनो जरद्वरवृषः कुब्जस्तुषारद्युतिर्नित्याप्तोपि बहिष्कृतः परिकरः सोयं समस्तोप्यहो ।
अर्धाङ्गद्वसतीकृताङ्गगवना चारित्रचर्याविदा सा भिद्यादुरितं[1] चराचरगुरोरन्तःपुरं पार्वती ॥१॥
छन्नकोपप्रसादोभूत्कंचित्कालं[1] नवो नृपः । प्राक्कुम्भादिव पाथोधिरव्यञ्जितविषामृतः ॥२॥
सोदरो डामरौघश्च तस्याभूतां भृशोन्मदौ । मेघस्येव पुरो वातावग्रहौ स्फूर्तिहारिणौ ॥३॥
यत्किंचनविधाय्यासीद्भ्राता यच्चौवनोन्मदः । राज्ञो दुष्प्रक्रिया दौःस्थ्यकरी वात्सल्यशालिनः ॥४॥
5 सोनिशं हि गजारूढो विकोशासि[1]ः परिभ्रमन् । आत्तसारां महीं पीतरसां रविरिवाकरोत् ॥५॥
एकीभूतानमून्सर्वाण्डामरान्निर्दहाम्यसिना । इत्युक्तं तेन नोर्वीभृत्सख्यैकामो वचोग्रहीत् ॥६॥
इत्यथो मन्त्रिसामन्ता द्वैराज्येच्छुः सहोदरः । भूर्निष्कोशेत्यभूत्किं न भूपतेस्तस्य संकटम् ॥७॥
अधिराज्याभिषेकेण सत्कृत्य भ्रातरं ततः । पातुं लोहरसंबन्धं प्राहिणोन्मण्डलान्तरम् ॥८॥
द्विरदायुधपत्त्यश्वकोशामात्यादि स व्रजन् । निनाय सर्वं वात्सल्यादनिषिद्धोग्रजन्मना ॥९॥
10 आशङ्क्य कोट्टभृत्येभ्यः प्रवेशे प्रत्यवस्थितिम् । उत्कर्षजं प्रतापाढ्यं सह निन्येग्रवीय तान् ॥१०॥
कुर्याममुं नृपमहं प्रातिहार्यं समाचरन् । नम्राः स्वभृत्यवत्तस्थुर्भूभुजो भूम्यनन्तराः ॥११॥
दिनानि सप्त संरुद्धे मार्गे तदनुयायिनाम् । गायनः कनको लब्धान्तरो देशान्तरं ययौ ॥१२॥
वाराणस्यां विजहता निर्वेदात्तेन जीवितम् । हर्षभूभर्तृभृत्येषु व्यक्तं निन्ये कृतज्ञता ॥१३॥
ऊर्ध्वाधिरोहं दाक्षिण्याद्दस्यूनामुच्चलः पुनः । सेवास्मृत्या सुधीः सेहे चन्दनो भोगिनामिव ॥१४॥
15 तथा जनकचन्द्रेण दर्पाद्व्यवहृतं तदा । राजान्ये डामराश्चासन्यथा नष्टप्रभा इव ॥१५॥
अभयस्योरशाभर्तुस्तनयायामजीजनत् । राज्ञ्यां विभवमत्यां यं भोजो हर्षनृपात्मजः ॥१६॥
जातं मृतद्वित्रिपुत्रानन्तरं गुरुभिः शिशुम् । आयुष्कामैस्तमाबद्धाभव्यभिक्षाचराभिधम् ॥१७॥
व्यब्दमप्यरिसंतानतन्तुत्वेनाप्रियोचितम् । ररक्ष तद्गिरा राजा राज्ञ्याश्चाङ्के समार्पयत्[1] ॥१८॥ तिलकम् ॥
तमादाय स्वयं वासौ यावद्राज्येकरोन्मनः । तावद्धीरोङ्गितज्ञो नीतिकौटिल्यमुच्चलः ॥१९॥
20 तुल्योत्साहासहिष्णुत्वादस्मै कुप्यन्तु डामराः । एष एवातिसत्काराद्यद्वास्तु विशदाशयः ॥२०॥
इति संचिन्त्य स द्वारदिक्तां तस्योदघोषयत् । यथा विकारं प्रययुर्भीमादेवादयोखिलाः ॥२१॥

१. ¹) Thus $A_1$; $A_2$ भिन्द्यादु°. २. ¹) Emended; A °भूत्किंचित्कालं. ५. ¹) कोशासिः supplied by $A_3$ in space left by $A_1$. १७. ¹) Emended with C; A वृत्तं. १८. ¹) Emended with C; A समर्पयत्.

भवरूढोथ विजयक्षेत्रं भिक्षाचरस्ततः । लब्ध्वा नागेश्वरं पापं यातनाभिरमीमरत् ॥९९६॥
गर्थे पैतामहे देशे किं नासीत्तस्य चेष्टितम् । पितृद्रुहः स तु वधः सर्वप्रीतिकरोभवत् ॥९९७॥
गृहिणी हर्षमित्रस्य पत्यौ त्यक्त्वा पलायिते । पृथ्वीहरेण संप्राप्ता विजयेशाङ्गनान्तरात् ॥९९८॥
निमित्तभूतमेतादृक्प्रजासंहारवैशसम् । स्वं निन्दन्सुस्सलो राजा ततो योद्धुं विनिर्ययौ ॥९९९॥
संवेगात्पाप्मनः शीघ्रं निरयक्लेशभुक्तये । प्राप्तो जनकराजेन वधोवन्तिपुरान्तिके ॥१०००॥ 1000
यत्कृते क्रियते कर्म लोकान्तरसुखान्तकम् । स मूढैः सुलभापायः कायश्चित्रं न गण्यते ॥१००१॥
कम्पनाधिपतिं सिम्बं कृत्वा डामरमण्डलम् । चकर्ष विजयक्षेत्रादन्यतोपि ततो नृपः ॥१००२॥
शमालां प्रययौ पृथ्वीहरो मडवराज्यतः । विजित्य मल्लकोष्ठेन[1] त्याजितो निजमण्डलम् ॥१००३॥
क्षिप्ताः केचिद्वितस्तायां केचिच्चक्रधराङ्गने । अक्रियन्ताग्निसात्कर्तुमशक्या बहवः शवाः ॥१००४॥
क्रमराज्येथ कल्याणवाड[1]दीन्रिल्हणो[2]जयत् । आनन्दोनन्तजस्तत्र ततो द्वाराधिपोभवत् ॥१००५॥ 1005
शूले प्रमापितं सिंहं नयन्पृथ्वीहरो बली । सार्धं जनकसिंहाद्यैरयुध्यत्क्षिप्तिकातटे ॥१००६॥
तीर्थं प्रस्थाप्यमानेषु विपन्नास्थिष्विहास्त्यहः । आद्रे मास्येकमबलाक्रन्दिताक्रान्तदिक्पथम् ॥१००७॥
हतवीराबलाक्रान्द[1]मुखरे नगरान्तरे । पृथ्वीहराहवे सर्वैर्दिवसैरन्वकारि तत् ॥१००८॥ युग्मम् ॥
अथा[1]यातो यशोराजस्यालः शूरो दिगन्तरात् । श्रीवको विदधे राज्ञा खेरीकार्याधिकारभाक् ॥१००९॥
अप्रियं स लवन्यानां तेपि वा तस्य नाचरन् । कालं तु गूढसौहार्दैरन्योन्यस्यात्यवीवहन् ॥१०१०॥ 1010
पुनराश्वयुजे राजा शमालां निर्गतस्ततः । पैरैर्मनीमुपग्रामे युधि भङ्गमनीयत ॥१०११॥
नित्याभ्यासेन युद्धानां लब्धोत्कर्षो न्यदर्शयत् । सर्ववीराग्रणीर्भिक्षुस्तत्पूर्वं तत्र विक्रमम् ॥१०१२॥
तुक्कद्विजादयो मुख्या भिक्षुपृथ्वीहरादिभिः । आसारापातविवशा निहताः सौस्सले बले ॥१०१३॥
प्रधानवीरभूयिष्ठे सैन्यद्वन्द्वे न कोप्यभूत् । स वीरश्चरतः संख्ये भिक्षोरैक्षिष्ट यो मुखम् ॥१०१४॥
पृथ्वीहरस्य भिक्षोश्च संग्रामे भूरिवार्षिके । कादम्बरीपताकाख्ये द्वे अश्वे पीतपाण्डुरे ॥१०१५॥ 1015
आस्तामत्यद्भुते याभ्यामनेकतुरगक्षये । न विपन्नं प्रहृतिभिर्नान्वभाव्यथ वा क्रमः ॥१०१६॥
सैन्यानां संकटे त्राणमभ्रान्तिरविकत्थनः । अभूत्क्लेशसहो वीरो नान्यो भिक्षाचरात्कचित् ॥१०१७॥
योधानां सौस्सले सैन्ये विद्रवेषु न कश्चन । त्राणं बभूव तेनैते वहवो बहुधा हताः ॥१०१८॥
नवेषु डामरानीकाः केचिद्भङ्गेषु सैनिकाः । भिक्षाचरगजेन्द्रेण कलभा इव पालिताः ॥१०१९॥
नान्यस्योत्थानशीलत्वं दृष्टं पृथ्वीहरात्तदा । स्वयं यो भैक्षवे द्वारे जजागार प्रतिक्षपम् ॥१०२०॥ 1020
ततः प्रभृत्यभूद्रोप्ता पुरः पश्चाच्च सर्वदा । विश्वेदेव इव श्राद्धे युद्धे भिक्षुर्महाभटः ॥१०२१॥
आहवे साहसं कुर्वन्सर्वतः सोभ्यधात्निजान् । एवमस्खलितस्थैर्यमुपपत्तिमसंत्यजन् ॥१०२२॥
न मे राज्याय यत्नोयं पर्याप्तं दुर्यशः पुनः । कृत्ये प्रसक्तु पूर्वेषां व्यवसायं व्यपोहितुम् ॥१०२३॥
अनाथा इव ते नाथा विशां व्यापादनक्षणे । ज्ञात्वा नष्टं कुलं नाथवन्तो नूनं स्पृहां दधुः ॥१०२४॥

---

१००३. [1]) Emended with C; A मल्लन. १००५. [1]) A °वाव्टारी°.—[2]) Emended with C; A °हीलल्हणी°. १००८. [1]) Emended; A °बलाक्रान्तमु°. १००९. [1]) Emended; A अथ यातो.

1025 इति मत्वा सोऽकष्टचेष्टे[1] सुदृढनिश्चयः । दूयमानोस्मि दायाददुःखदायी दिने दिने ॥१०२५॥
नास्त्येवाप्राप्तकालस्य[1] विपत्तिरिति जानतः । कस्य साहसवैमुख्यमुत्पद्येत यशोर्थिनः ॥१०२६॥
किं कार्यगतिकौटिल्यैरुक्तैस्ताम्यथ वा कथम् । न वदामः प्रतिज्ञाय स्वयमार्येऽध्वनि स्थितिम् ॥१०२७॥
सोत्कर्षपौरुषाद्भिक्षोरशङ्किषत डामराः । ततो दायादविच्छेदं नास्याकृषत जातु चित् ॥१०२८॥
प्राग्राज्याधिगमाद्राज्ञामन्येषां राजबीजिनः । चिन्तयन्तो व्यवहृतिं व्युत्पद्यन्ते शनैः शनैः ॥१०२९॥
1030 पितुः पितामहस्याथ न दृष्टं तेन किंचन । अत एवाभजन्मोहं राज्यं संप्राप्तवान्पुरा ॥१०३०॥
तस्स भूयोपि चेदाप्स्यत्कैव[1] वार्ता विपाटने । सापेक्षं वीक्षितुं जाने न दैवेनाप्यशक्यत ॥१०३१॥चक्कलकम्[2]॥
जानंस्त्वन्यकौटिल्यं प्रमादात्स हतेहिते । प्राप्नुयां राज्यमित्याशां बद्ध्वाहान्यत्यवाहयत् ॥१०३२॥
दस्यूनां सुस्सलो राजा मेने तत्स्वहितं मतम् । जिगीषुर्नीतिविक्रान्त्योः प्रयुक्तौ लिप्सुरन्तरम्[1] ॥१०३३॥
युद्धे स्वान्स स्मरन्वैरं नापासीत्तेन तेभजन् । नास्मिन्विश्वासमेतस्माद्धेतोर्नास्याभवज्जयः ॥१०३४॥
1035 इत्थं नानामतैः पक्षप्रतिपक्षैरुपेक्षितम् । राष्ट्रं निखिलमेवागात्सर्वतः शोचनीयताम् ॥१०३५ ॥
यत्संबन्धाद्विटपिनिवहैर्निर्महव्यप्रबन्धव्याधप्रत्तानलपरिभवः कोपि नन्वन्वभावि ।
हा धिग्दन्ती विघटनपरः सोपि मात्यन्नमीषां लभ्यं श्रेयो विधिविधुरितैर्नान्यतो न स्वतोपि ॥१०३६॥
द्वैराज्ये प्रभवत्येवमकाण्डपतितैर्हिमैः । विवशं सुस्सलक्ष्माभृदजयद्भैक्षवं बलम् ॥१०३७॥
पुष्याणनाडं[1] भूयोपि भिक्षुपृथ्वीहरौ गतौ । अन्यैर्लवन्यैर्भूभर्तुर्नतिर्दत्तकरैः कृता ॥१०३८॥
सिम्बोपि कम्पनाधीशो व्यधाद्विजितडामरः । सर्वां मडवराज्योर्वीं वीरः शमितविप्लवाम् ॥१०३९॥
1040 तावत्यापि विपक्षाणां शान्त्या शीतलतां गतः । पूर्ववैरं स्वपक्ष्याणां प्रातुश्चक्रेथ भूपतिः ॥१०४०॥
जिघांसौ कथिते राजन्युल्हणेन पलायितः । मल्लकोष्ठः सोपि कोपाद्राज्ञा राष्ट्रात्प्रवासितः ॥१०४१॥
अनन्तात्मजमानन्दं बद्ध्वा द्वाराधिकारिणम् । व्यधत्त सैन्धवं प्रज्जिनामानं राजबीजिनम् ॥१०४२॥
गतोथ विजयक्षेत्रं सिम्बेन सहितोविशत् । नगरं तं च विश्वस्तं बद्ध्वा कारागृहेक्षिपत् ॥१०४३॥
अनुस्मृतिमहावात्याप्रेरितोमर्षपावकः । आचचाम क्षमावारि तस्य भृत्यान्दिधक्षतः ॥१०४४॥
1045 सिंहथक्कनसिंहाभ्यामनुजाभ्यां सहावधीत् । शूलेधिरोप्य सिम्बं स रोषावेशविलुप्तधीः ॥१०४५॥
कम्पने श्रीवकं चक्रे सुज्जि प्रज्जेः सहोदरम् । बद्ध्वा जनकसिंहं च राजस्थाने न्ययोजयत् ॥१०४६॥
आप्ताश्च मन्त्रिणश्चासंस्तस्य वैदेशिकास्ततः । स्वदेशजस्तु सोभूयो लोहरस्थं तमन्वगात् ॥१०४७॥
अथ सर्वेपि साशङ्कास्तं त्यक्त्वाध्यश्रयन्रिपून्[1] । शतैकीयः कश्चिदासीद्राजधान्यां नृपाश्रितः ॥१०४८॥
तेनाप्रतिसमाधेयो भूयः शान्तेप्युपद्रवे । इत्थमुत्थापितोनर्थो न पुनर्यः शमं ययौ ॥१०४९॥
1050 एकाक्षेपे परेपि स्युर्यत्र भृत्या विशङ्किताः । तत्रापराधे प्राज्ञस्य राज्ञोवज्ञैव शस्यते ॥१०५०॥
माघेथ मल्लकोष्ठाद्यैराहूताः[1] पुनराययुः । ते शूरपुरमार्गेण भिक्षुपृथ्वीहरादयः ॥१०५१॥
वितस्तापरिखाक्षिप्ता भूरगम्या द्विषामियम् । इति प्रायान्नवमठं त्यक्त्वा राजगृहं नृपः ॥१०५२॥

---

१०२५. 1) $A_1$ gloss स्वयं. १०२६. 1) Emended with C; A नास्त्येवप्राप्त°. १०३१. 1) Emended; A चेदाप्स्येत्कैव.— 2) $A_1$ writes here ४ instead of चक्कलकम्. १०३३. 1) Doubtful emendation; A जिगीषोर्नी° and प्रयुक्तो लिप्सरन्तरम्; C जिगीषोर्नी° and प्रयत्नो लिप्यनन्तरः. १०३८. 1) A पुष्यान°. १०४८. 1) Emended; A त्यक्त्वाधिश्र°. १०५१. 1) Emended; A °कोष्ठाद्यं आहूता.

वर्षेऽष्टानवते चैत्रे डामरेषु युयुत्सुषु । अभ्येत्य मल्लकोष्ठेन प्रागेवापादि संगरः ॥१०५३॥
सोऽश्ववारैः सह रणं चकार नगरान्तरे । नृपावरोधैः सौधाग्रादालोकितमथाकुलैः ॥१०५४॥
भिक्षुणा क्षिप्तिकातीरे स्कन्दावारं न्यबध्यत । ..................[1] ॥१०५५॥ 1055
नृपोद्यानाद्द्रुमाञ्चिन्युरिन्धनाय महानसे । दूर्वाङ्कुरान्मन्दुराभ्यो वाहभोज्याय डामराः ॥१०५६॥
पृथ्वीहरस्तु संगृह्णन्दस्यून्मडवराज्यजान् । चकार विजयक्षेत्रे यावत्कटकसंमहम् ॥१०५७॥
तावत्प्रज्जिमुखान्मल्लकोष्ठयुद्धाय भूपतिः । आदिश्यादादवस्कन्दं वैशाखे साहसोन्मुखः ॥१०५८॥[1]
अकस्मात्पतिते तस्मिन्हतावष्टम्भविक्षता[1]ः । प्रययुः सेतुमुल्लङ्घ्य जीवाश्वस्ताः कथंचन ॥१०५९॥
नगरं मल्लकोष्ठाजिव्यये प्रज्जावथाविशत् । पृथ्वीहरानुजः सुज्जिं निर्जित्य मनुजेश्वरः ॥१०६०॥ 1060
परं पारं वितस्तायां सेतुच्छेदादनामुवन् । अर्वाचि तीरे स गृहान्दग्ध्वागा[1]त्क्षिप्तिकां ततः ॥१०६१॥
लवन्यैर्नगरं प्राप्तं मत्वा सुस्सलभूपतिः । आययौ विजयक्षेत्रात्सैन्यमुत्थाप्य विह्वलः ॥१०६२॥
अहंपूर्विकयारातिशङ्कितैश्च निजैर्बलैः । पीडितस्तस्य गम्भीरासिन्धुसेतुरभज्यत ॥१०६३॥
स कृष्णषष्ठ्यां ज्यैष्ठस्य तस्यासंख्यवधमूचयः । यथाग्निना चक्रधरे तथा तत्राम्भसा मृतः ॥१०६४॥
भुजमुद्यम्य शमयन्सैन्यानां संभ्रमं नृपः । त्रस्तैर्भ्रष्टैस्तथा पृष्ठे पतितः सरिदन्तरे ॥१०६५॥ 1065
अनभ्यस्ताम्बुतरणैराश्लिष्य त्रुडितोऽसकृत् । तरदायुधविद्धाङ्गः स निस्तीर्णः कथंचन ॥१०६६॥
अनुत्तीर्णं बलं त्यक्त्वा पारे सामन्तसंकुलम् । सहस्रांशेन सैन्यस्य तीर्णेनानुगतो ययौ ॥१०६७॥
संत्यक्तानन्तसैन्योऽपि सोऽवष्टम्भमयो नृपः । प्रविश्य नगरं मल्लकोष्ठमुख्यान्रणेऽग्रहीत् ॥१०६८॥
विजयस्याथ जननी सिल्लाख्या स्वामिनोज्झितम् । निनाय देवसरसं सैन्यं तद्विजयेश्वरात् ॥१०६९॥
साथ पृथ्वीहरेणेत्य हता तत्रोपवेशने । टिक्कश्च दत्तो भूपालसैन्यं विद्राविनं च तत् ॥१०७०॥ 1070
परं व्यायामविद्याविद्विद्रुते निखिले बले । द्विजः कल्याणराजाख्यः समरेऽभिमुखो हतः ॥१०७१॥
मन्त्रिडामरसामन्तसंकुलात्सौस्सलाद्बलात् । पृथ्वीहरेणागृह्यन्त बद्ध्वा वृन्दानि शस्त्रिणाम् ॥१०७२॥
अन्वगात्स वितस्तान्तं यावत्तान्विद्रुतान्बलात् । ओजानन्दद्विजादींश्च बद्ध्वा शूले व्यपादयत् ॥१०७३॥
मन्त्रिणो जनकश्रीवकाद्या राजात्मजास्तथा । तीर्त्वाद्रिं विषलाटायां शरणं प्रययुः खशान् ॥१०७४॥
इत्थं पृथ्वीहरो लब्धजयः संगृह्य डामरान् । जिगीषुर्भिक्षुणा साकं नगरोपान्तमाययौ ॥१०७५॥ 1075
भूयोऽपि मानुषाश्वौघसंहर्ता सर्वतस्ततः । रणः प्रववृते प्राग्वत्पुरे रुद्धस्य भूपतेः ॥१०७६॥
निर्निरोधः पथानेन नृपावसथ इत्यभूत् । सैन्ये मडवराज्यानां स्वयं पृथ्वीहरोऽग्रणीः ॥१०७७॥
तत्तत्सामन्तकुलजैर्वीरैः काश्मीरकैर्भटैः । समेतं डामरकुलं दुर्जयं सर्वतोऽभवत् ॥१०७८॥
काश्मीरकाः शोभकाद्याः काकवंश्याः सहस्रशः । प्रख्याता भैक्षवे पक्षे रत्नाद्याश्चापरेऽस्फुरन् ॥१०७९॥
नदतः स्वबलाश्चार्थं तुमुलं शृण्वतोऽन्मिषत् । पृथ्वीहरेणागण्यन्त वाद्यभाण्डानि कौतुकात् ॥१०८०॥ 1080
हित्वा भूर्यथ तूर्यादि परिच्छेत्तुं स कौतुकी । श्वपाकदुन्दुभीभाण्डशतानि द्वादशाशकत् ॥१०८१॥

---

१०५५. [1]) Here two *pâdas* seem to be lost; A does not indicate the *lacuna*. C adds रामेण वानरी सेना यथा पाथोनिधेस्तटे. १०५८. [1]) Emended; A °दयादावस्कन्दं. १०५९. [1]) Emended with C, A °विक्षतः. १०६१. [1]) Emended with C; A °न्दग्ध्वामात्क्षि°.

तथा विनष्टसैन्योपि त्रिंशद्विंशैर्नृपात्मजैः । मितैः स्वदेशजैश्चारीन्प्रतिजग्राह सुस्सलः ॥१०८२॥
राजन्याविच्छटिकुलोद्भूतावुदयधन्यकौ । चम्पावल्लापुराधीशावुदयब्रह्मजज्जलौ ॥१०८३॥
ओजो[1] मल्हणहंसानां धुर्यौ हरिहडौकसः । क्षत्रिकाभिञ्जिकास्थानसव्यराजादयस्तथा ॥१०८४॥
1085 बिडालपुत्रा नीलाद्या भावुकान्वयसंभवाः । रामपालः सहजिको युवा तस्य च नन्दनः ॥१०८५॥
नानावंश्याः परेप्युग्रसंग्रामरभसताजुषः । पुरोपरोधसंनद्धानरुन्धन्सर्वतो रिपून् ॥१०८६॥
तनूजनिर्विशेषेण रिल्हणेन महीभुजः । रणाग्रेसरतामाहि विजयाद्यैश्च सादिभिः ॥१०८७॥
स्वयमुद्यमिना राज्ञा वर्मणेव निजौ भुजौ । सुज्जिप्रज्जी पाल्यमानावभूतां रणकर्मठौ ॥१०८८॥
ताभ्यां साधारणीकुर्वन्राज्योत्पत्तिं महीपतिः । स महाव्यसने तस्मिन्सम्यग्गूढधुरोभवत् ॥१०८९॥
1090 तत्पक्षा भागिकशरद्भासिमुम्मुनिमुक्कटाः[1] । कलशाद्याश्च कुशला विपक्षक्षोभणेभवन् ॥१०९०॥
भूभर्तुष्टक्कविषये लवराजस्य नन्दनः । आसीत्कमलियश्चास्य संग्रामाग्रेसरः प्रभोः ॥१०९१॥
प्रहारं बलिनस्तस्य चामरध्वजशोभिनः । प्रभिन्नस्येव नागस्य हयारोहा न सेहिरे ॥१०९२॥
अनुजः साङ्गिकः पृथ्वीपालो भ्रातुः सुतोस्य च । पाञ्चालाः[1] फल्गुनस्येव[2] पार्श्वरक्षित्वमाययुः ॥१०९३॥
एतावद्भिर्भृत्यरत्नै राष्ट्रेपि कुपितेजयत् । भूरिस्वर्णार्पणोपात्तैर्वाजिभिश्च महीपतिः ॥१०९४॥
1095 तत्र तत्राहवे सोपि बभ्रामाम्लभ्रमो नृपः । उत्सवे गृहमेधीव मण्डपे मण्डपे स्वयम् ॥१०९५॥
तस्य हि व्यसनं त्रासहेतुः प्राभूदुपक्रमे । प्रवृद्धिं प्राप्तमभवद्धैर्यादाप्यथ धीमतः ॥१०९६॥
क्लैब्यकृद्भयमापाते मध्यपाते न तादृशम् । करक्षिप्तं यथा शीतं मज्जने न तथा पयः ॥१०९७॥
वैरिसैन्यतमो यत्र यत्र ज्योत्स्नेव निर्ययौ । सितासिता च भूभर्तुस्तत्र तत्रास्य वाहिनी ॥१०९८॥
एकदा कृतसंकेतास्तुल्यमाहवमेलके । महासरितमुत्तीर्य डामरा नगरेपतन् ॥१०९९॥
1100 असीसनगरस्थानविभक्तकटको नृपः । परिमेयाश्ववारस्तान्विशतः स्वयमाद्रवत् ॥११००॥
नाभजड्डामरानीकस्तेन विद्रावितो धृतिम् । हेमन्तमरुता कीर्णपर्णराशिरिवेरितः ॥११०१॥
त्र्यानन्दः काककुलजो लोष्टशाह्यनलादयः । अन्ये च डामरानीके ख्याता भूभृद्भटैर्हताः ॥११०२॥
लग्नाभिघातानानीतान्नाशः क्रूरस्य दृक्पथम् । बहून्निजघ्नुश्चण्डाला इव राजोपजीविनः ॥११०३॥
भयाद्गोपाद्रिमारूढा अपरे भिक्षवास्ततः । आसन्नमृत्यवोभूवन्कटकैर्वेष्टिता द्विषाम्[1] ॥११०४॥
1105 यो मार्गो दुर्गमः पक्षिणोपि त्रातुं ततः स तान् । तत्र व्यापारयामास भिक्षुर्मानी तुरंगमान् ॥११०५॥
कथंचित्पक्षिणा विद्धमीवस्तस्यामहीन्मुहुः । पार्श्वे पृथ्वीहरो रूढे द्विशाश्चान्ये महाभटाः ॥११०६॥
वेलाद्रिभिरिवोद्वृत्तैः सिन्धौ तैर्द्विषतां बले । रुद्धे गोपाचलं त्यक्त्वा तेन्यानारुरुहुर्गिरीन् ॥११०७॥
अथोदतिष्ठद्ग्रामेन[1] राजानीकस्य वाहिनी । मल्लकोष्ठस्य पत्त्यश्वक्षोभिताशेषदिक्तटा ॥११०८॥
अरिपृष्ठग्रहव्यग्रैस्तिष्ठन्स्वैर्वर्जितो बलैः । तदाशाय्यखिलैरेष हतो राजेत्यसंशयम् ॥११०९॥
1110 आपातं सुस्सलो राजा यावत्तस्याविसोढवान् । तावत्तस्यावरजः प्रज्जि[1]राजगाम रणाङ्गनम् ॥१११०॥

१०८४. [1]) Thus $A_1$ in margin; $A_1$ तेजो in text. १०९०. [1]) Thus A; perhaps to be emended मुङ्कटाः; cf. vii. 589. १०९३ [1]) Emended (i.e. पाञ्चालाः); A पाञ्चालो.—[2]) Thus A; perhaps read with C फाल्गुन°. ११०४. [1]) Thus $A_2$; $A_1$ दिषाम्. ११०८. [1]) Emended; A °तिष्ठ-मेन; C °तिष्ठत्सुस्सेन. १११०. [1]) Emended with C; A प्राञ्जि°.

आषाढबहुलाष्टम्यां स हयारोहमेलकः । निजशस्त्रध्वनिप्राप्तसाधुवादो महानभूत् ॥१११११॥
ताभ्यां स शमिते युद्धे ससूनुः ससमीरणः । दावो नभोनभस्याभ्यामिव प्रापाम्बुवृष्टिभिः[1] ॥१११२॥
संग्रामबहुले काले तादृगन्यो न कोप्यभूत् । यादृक्स दिवसो वीर्यशौटीर्यनिकषोपलः ॥१११३॥
अनीकिनी लाहरी सा विलम्बेनायया[1]विति । तेषामुत्पाटनेच्छूनां नाभवद्धस्तमेलकः ॥१११४॥
अन्योन्यस्य परिज्ञाता दिवसे तत्र संकटे । भिक्षोर्भूमिभृता शक्तिर्भूमिभर्तुश्च भिक्षुणा ॥१११५॥ 1115
ततो मडवराज्यांस्तान्योद्धुं तत्रैव निर्दिशन् । क्षिप्तिकारोधसा युद्धमेत्य पृथ्वीहरोमहीत् ॥१११६॥
दिगन्तरादथायातो यशोराजो महीभुजा । मण्डलेश्वरतां निन्ये रिपून्प्रतिजिहीर्षुणा ॥१११७॥
खेरीकार्ये पुरा तस्य लवन्या दृष्टविक्रमाः । रणेषु मुखमालोक्य शतशः प्रचकम्पिरे ॥१११८॥
कुङ्कुमालेपनच्छत्रहयादिप्रतिपत्तिदः । सर्वेषामभिनन्द्यत्वं तं राजा स्वमिवानयत् ॥१११९॥
दीर्घोपप्लवयाप्येन दुःस्थितः स्वास्थ्यलिप्सया । जनो बबन्ध तत्रास्थां नववैद्य इवातुरः ॥११२०॥ 1120
ज्यायांसं पञ्चचन्द्राख्यं शेषाणां गर्गजन्मनाम् । नृपतिर्मल्लकोष्ठस्य प्रातिपक्ष्ये[1] न्ययोजयत् ॥११२१॥
शिशुश्छुडाख्यया मात्रा पालितः स शनैः शनैः । आश्रीयमाणोनुचरैः पित्र्यैः किंचित्प्रथां ययौ ॥११२२॥
यशोराजानुयातेन राज्ञा जन्येषु निर्जिताः । केचित्तत्पक्ष[1]मभजन्भग्नाः केचिच्च डामराः ॥११२३॥
सभिक्षुः प्रययौ पृथ्वीहरः स्वमुपवेशनम् । मल्लकोष्ठोन्मुखो राजा निर्जगामामरेश्वरम् ॥११२४॥
अत्रान्तरे मल्लकोष्ठो विसृज्य निशि तस्करान् । सदाशिवान्तिके शून्यां राजधानीमदाहयत् ॥११२५॥ 1125
पृथ्वीहरेण भूयोपि योद्धुमागच्छतासकृत् । प्रज्जिसुज्जिमुखा युद्धमकुर्वन्क्षिप्तिकातटे ॥११२६॥
वारं वारं लवन्यः स नगरे निर्दहन्गृहान् । प्रायः शून्यत्वमनयद्वितस्तातीरमुत्तमम् ॥११२७॥
तत्र तत्र रणान्कुर्वन्प्राणसंदेहदायिनः । आचक्रामाथ नृपतिर्लहरं बहलैर्बलैः ॥११२८॥
निःसेतु तरतः सिन्धुं दृतिभङ्गाद्ययुर्जले । मन्दिरं कन्दराजाद्यास्तदीयाः समवर्तिनः ॥११२९॥
दरद्देशं ययौ मल्लकोष्ठो राज्ञा निराकृतः । सपुत्राप्यभजच्छुड्डा प्रारोहं लहरान्तरे ॥११३०॥ 1130
आनिन्यिरे जय्यकेन लवन्येन नृपान्तिकम् । विषलाटान्तरात्तेथ जनकश्रीवकादयः ॥११३१॥
लहरात्प्रध्यातिक्रान्तनिदाघः शरदागमे । शमालां निर्ययौ राजा यशोराजान्वितस्ततः ॥११३२॥
भग्नं पृथ्वीहरत्रासात्सैन्यं रक्षन्मनीमुषे । आजौ सज्जात्मजो डोम्बनामा राजसुतो हतः ॥११३३॥
युद्धं सुवर्णसानूरग्रामशूरपुरादिषु । कुर्वञ्शश्वन्नृपः प्राप पर्यायेण जयाजयौ ॥११३४॥
श्रीकल्याणपुराद्रङ्गं नीते पृथ्वीहरादिभिः । श्रीवक्के नागवट्टाद्या युधि प्रापुः प्रमापणम् ॥११३५॥ 1135
पौषे सुवर्णसानूरान्निहन्तुं मातुरन्तकम्[1] । टिक्कं स देवसरसं व्यसृजद्गर्गवल्लभाम् ॥११३६॥
स्वेन राज्ञश्च सैन्येन सहिता सा'जिताहिता । अकस्मात्तत्र टिक्केन निपत्य निहता युधि ॥११३७॥
स स्त्रीवधं व्यधात्पापी द्वितीयम[1]पि निर्घृणः । विशेषः कोथ वा तिर्यङ्म्लेच्छतस्कररक्षसाम् ॥११३८॥
अबलां स्वामिनीं हन्यमानां त्यक्त्वा पलायिताः[1] । चित्रं पशूपमाः शस्त्रं स्वीचक्रुर्लाहराः पुनः ॥११३९॥

---

१११२. [1]) The text of this verse appears to be defective. १११४. [1]) A विलम्भेन ११२१. [1]) Emended with C, A प्रातिपक्षे. ११२३. [1]) Emended with C, A °त्पान्पक्ष°. ११३६. [1]) Conjectural reading, A मातुरन्तिकम्. Cf. viii. 1069 ff. and 1138. ११३८. [1]) Emended with C; A द्वितीयामपि. ११३९. [1]) Emended with C; A °यित.

1140 ईषत्त्यागागतं शय्यां भूय एवोल्बणं नृपः । ज्ञात्वा मडवराज्यं स प्रययौ विजयेश्वरम् ॥११४०॥
मल्लराजतनूजानां निजा जिह्वेव दुर्जना । बभूव प्रभविष्णुत्वे व्यापदापातदूतिका ॥११४१॥
प्रायश्चाद्यतने काले भृत्यास्तितउवृत्तयः । दर्शयन्ति समुत्सार्य सारं दोषतुषग्रहम् ॥११४२॥
आ बाल्यात्संस्तुताश्लीलवचःपरुषभाषितैः । निर्गौरवैर्यशोराजो राज्ञि तस्मिन्व्यरज्यत ॥११४३॥
स दुर्जातिर्महासैन्ययुतोर्वान्तिपुरस्थितः । अभजत्तत उत्थाय प्रतिपक्षसमाश्रयम् ॥११४४॥
1145 वैरिपक्षगते तस्मिन्बलैः सर्वोत्तमैः समम् । विह्वलो विजयक्षेत्रात्पलायिष्ट महीपतिः ॥११४५॥
धिग्राज्यं यत्कृते सोपि सेहे प्राणान्निरक्षिषुः । मुष्णद्भिश्चौरचण्डालप्रायैः परिभवं पथि ॥११४६॥
माघे पलाय्य नगरं प्रविष्टः स व्यथाभिधे । भृत्ये द्रोग्धर्यशङ्किष्ट स्वेषामपि तनूरुहाम ॥११४७॥
काश्मीरके[1] जनेशेषे निराशो[2] नितरां ततः । अङ्कन्यस्तोत्तमाङ्गोभूत्प्रज्ञिपक्षे क्षमापतिः ॥११४८॥
मुद्रिता रुद्रपालादिपूर्वराजात्मजप्रथा । प्रज्जिना विक्रमत्यागनयाद्रोहादिभिर्गुणैः ॥११४९॥
1150 तेनैव वर्धितामुत्र देशे विशदकीर्तिना । कालदौरात्म्यलुठिता प्रतिष्ठा शस्त्रशास्त्रयोः ॥११५०॥
अमन्त्रयत संगम्य यशोराजस्तु भिक्षुणा । नेच्छन्ति डामरा राज्यं तव विक्रमशङ्किताः ॥११५१॥
उत्पाद्य पुनरुत्पिञ्जं साधिष्ठानबला वयम् । राज्यं स्वयं ग्रहीष्यामो यास्यामो वा दिगन्तरम् ॥११५२॥
इति तैर्मन्त्रिते[1] लुड्डां हतां श्रुत्वा दरत्पुरात् । आगत्य मल्लकोष्ठोपि प्राविशत्स्वोपवेशनम् ॥११५३॥
वर्षोथ दुस्तरः ख्यात एकान्नशतसंख्यया । सर्वभूतान्तकृल्लोके प्रावर्तत सुदारुणः ॥११५४॥
1155 वसन्ते डामराः सर्वे प्राग्वन्मार्गैर्निजैर्निजैः । आगत्य भूयो भूपालं नगरस्थमवेष्टयन् ॥११५५॥
धीरः सुस्सलदेवोपि पुनरासीद्दिवानिशम् । निःसीमसमरस्तोमारम्भसंरम्भभाजनम् ॥११५६॥
दाहलुण्ठनसंग्रामकर्मशौण्डैः स डामरैः । प्राग्विप्लवेभ्योप्यधिको विप्लवः पर्यवर्धत[1] ॥११५७॥
महासरित्पथे निर्निरोधे तस्थुर्विविक्षवः । नगरं ते यशोराजभिक्षुपृथ्वीहरादयः ॥११५८॥
ततः कतिषुचिद्युद्धाहेषु यातेषु संगरे । निजैनैव यशोराजः परकीयभ्रमाद्धतः ॥११५९॥
1160 कल्यात्मजेन हि समं विजयाख्येन सादिना । सौस्सलेन तु संग्रामे परावृत्तीः प्रदर्शयन् ॥११६०॥
विप्रलब्धैः सवर्णाश्वकवचावेक्षणान्निजैः । शूलायुधिभिरुद्दामैः शूलाघातैरहन्यत ॥११६१॥
भिक्षो राज्यं समर्थोयं दातुं हन्तुं ततश्च नः । भीत्या तैर्डामरैरेव स घातित इति श्रुतिः ॥११६२॥
यथैव तेन विश्वस्तः स्वामी द्रोहेण वञ्चितः । तथैव प्राप विश्वस्तः क्षिप्रमेव वधं मृधे ॥११६३॥
पृथ्वीहरस्तत्र तत्र योधयित्वाथ डामरान् । क्षितिकारोधसा भूयोभ्येत्य संग्राममग्रहीत् ॥११६४॥
1165 तत्राधिष्ठानयोधानां भिक्षुपक्षोपजीविनाम् । पौरुषं स्वपरोत्कर्षपरिभावि व्यभाव्यत ॥११६५॥
वह्निदानमहायोधसंहाराद्यैरुपद्रवैः । एकमेकमहस्तत्रानेहस्यासीद्भयावहम् ॥११६६॥
अतपत्तरणिस्तीक्ष्णमभीक्ष्णं भूरकम्पत । ववुर्द्रुमाद्रीन्भञ्जन्तो महोत्पातप्रभञ्जनाः ॥११६७॥
पवनोत्थापितैः पांसुकूटैर्दध्रे मदोद्धतैः[1] । व्योम्नि प्रोत्तम्भनस्तम्भभङ्गैर्निर्घातदारिते ॥११६८॥

---

११४८. [1]) A काश्मीरिके.—[2]) Emended; A निराशो. ११५३. [1]) Emended with C, A °न्त्रितेच्छुड्डां. ११५७. [1]) Thus corr. by $A_3$ from $A_1$ - - - - भूत. ११६८. [1]) Thus A; G महोद्धतैः.

ज्यैष्ठस्य शुक्लैकादश्यां प्रवृत्तेथ महारणे । काष्ठीले डामरा वह्निमेकस्मिन्प्रददुर्गृहे ॥११६९॥
सोमित्र्या मारुतोद्भूतः प्रसरन्वैद्युतोथ वा । जज्वालैकपदे कृत्स्नं नगरं निरवग्रहः ॥११७०॥ 1170
दृष्टस्तदानीमेतावन्नजम्बूह इवापतन्[1] । माक्षिकस्वामिनो धूमो बृहत्सेतौ यदुत्थितः ॥११७१॥
अथेन्द्रदेवीभवनविहारं सहसागमत् । ततो नगरमुज्ज्वालं क्षणात्सर्वमदृश्यत ॥११७२॥
न भूमिर्न दिशो न द्यौर्धूमध्वान्ते व्यभाव्यत । हुडुक्कामुखचर्माभो दृश्यादृश्योभवद्रविः ॥११७३॥
धूमान्धकारसंछन्नास्ततः प्रज्वलताग्निना । अपुनर्दर्शनायेव मुहुराविष्कृता गृहाः ॥११७४॥
वितस्ता दृश्यतोज्ज्वालवेश्माश्लिष्टतटद्वया । रक्ताक्तोभयधारेव कृतान्तस्यासिवल्लरी ॥११७५॥ 1175
ब्रह्माण्डोर्ध्वकवाटान्तसंस्पर्शात्पतितोन्नतैः । ज्वालाकलापैः संवृद्धैर्हैमच्छत्रवनायितम् ॥११७६॥
उच्चावचैर्युतो ज्वालाशृङ्गैर्हैमाद्रिसंनिभः । वह्निर्धूमच्छलान्मूर्ध्नि बभाराम्बुधरावलिम् ॥११७७॥
आविर्भवन्तो[1] ज्वालाभ्यो गृहाश्चक्रुर्मुहुर्मुहुः । अदग्धा एते[2] इत्याशां विमुग्धगृहमेधिनाम् ॥११७८॥
ज्वलितैस्तापितजला[1] वितस्ता पतितैर्गृहैः । और्वोष्मवेदनाक्लेशं विवेद सरितां प्रभोः ॥११७९॥
दीप्रपक्षैः खगैः साकं ज्वलिता बालपल्लवाः । उद्यानद्रुमषण्डानां व्योमोड्डयनमादधुः ॥११८०॥ 1180
सुधासिताः सुरगृहा ज्वालासंवलिता व्यधुः । क्षयसंध्याम्बुदाश्लिष्टहिमाद्रिशिखरभ्रमम् ॥११८१॥
मज्जनात्रासनौसेतुकदम्बैः प्लोषशङ्कया । अपास्तैर्नगरस्यान्तर्ययुर्नद्योपि शून्यताम् ॥११८२॥
किमन्यन्मठदेवौकोगृहाद्यादिविवर्जितम् । नगरं क्षणमात्रेण दग्धारण्यमजायत ॥११८३॥
लोष्टावशेषे नगरे धूमश्यामो निरास्पदः । उच्चैरेको बृहद्बुद्धो दृष्टो दग्धद्रुमोपमः ॥११८४॥
सैन्येषु ज्वलितात्रासत्राणाय चलितेष्वथ । शतमात्रेण योधानां युतो भूभृदजायत ॥११८५॥ 1185
पारं गन्तुं वितस्ताया भिन्नसेतुं तमक्षमम् । लब्धरन्ध्रा द्विषोनन्ता निहन्तुं पर्यवारयन् ॥११८६॥
पुरं दग्धं स्वमुत्सन्नं[1] प्रजा नष्टाश्च चिन्तयन् । आसन्नं मरणं राजा निर्विण्णो बह्वमन्यत ॥११८७॥
प्रस्थातुमथ तं प्रत्यङ्मुखमाशङ्क्य विद्रुतम् । संज्ञितोन्यैः कमलियः क्व देवेत्यब्रवीद्वचः ॥११८८॥
संरम्भस्मितविद्योति चन्दनोल्लेखमाननम् । परिवर्त्य निरुद्धाश्वो धीरः स तमभाषत ॥११८९॥
तदद्य करवै भूमेः कृते हम्मीरसंगरे । चकार राजा भिञ्जो यत्सोभिमानी पितामहः ॥११९०॥ 1190
कुतस्त्योप्येष[1] दायादो यद्भ्रातास्माकमस्मि वा । स हर्षदेवोपश्यन्नः कार्यशेषं पलायितः ॥११९१॥
को नाम मानिनां पङ्क्तौ प्रविष्टोन्ते निजां भुवम् । असिक्तां स्वाङ्गरक्ताक्तां[1] व्याघ्रः कृत्तिमिवोज्झति ॥११९२॥
इत्युक्त्वोदञ्चयन्वल्गामुत्क्षिप्ताग्रमुखं हयम् । संस्प्रष्टुमिच्छुः[1] पाणिभ्यां कृपाणमुदनामयत् ॥११९३॥
ततो निगृह्य[1] वल्गायां वाजिनं लवराजजः । ऊचे भृत्येषु सत्स्वग्रे प्रवेशार्हो न भूभुजः ॥११९४॥
प्रहारविक्लवस्तिष्ठन्गृहादेकोभ्युपाययौ । संकटे तत्र भूभर्तुः पृथ्वीपालोन्तिकं परम् ॥११९५॥ 1195
कौलपुत्र्यं स्तुवंस्तस्य वात्सल्यादेष भूपतिः । स्वस्यात्मनिष्क्रयां[1] मेने सेवाविष्कृत्युपक्रियाम् ॥११९६॥

---

११७१. [1]) Thus corr. by $A_1$ from °पतत्. ११७८. [1]) Emended with C; A °भवन्त्यो.—[2]) Emended; A यत. ११७९. [1]) Emended with C; A ज्वलितै?. ११८७. [1]) Emended; A स्वमुत्पन्नं. ११९१. [1]) Emended with C; A कुतस्त्येत्येष; doubtful. ११९२. [1]) Emended with C; A स्वाङ्गरक्तां. ११९३. [1]) Emended; A सम्प्रष्टुमिच्छुः; cf. viii. 1528 ११९४. [1]) Emended with C; A निगृह्य. ११९६. [1]) Emended with C; A स्वस्यात्मनिष्क्रियां.

अथ स्थितास्त्रिभिर्व्यूहैरहितास्तोकिरङ्गशरान् । हन्तुं वामेन ते योधाः सर्वे वाहनदुर्मदाः ॥११९७॥

स प्रेरयंश्च तुरगं दैवात्तस्य च तादृशः । सहस्राण्यपि भूरीणि व्यधीयन्त विरोधिनाम् ॥११९८॥

अल्पसैन्यो द्विषत्खड्गमण्डलप्रतिबिम्बितः । नृपः साहायकायातविश्वरूप इवाबभौ ॥११९९॥

1200 कलविङ्कानिव श्येनः कुरङ्गानिव केसरी । एको व्यद्रावयत्क्रूरीनरीन्सुस्सलभूपतिः ॥१२००॥

निपात्य पत्तीन्युन्धानान्खुराग्राण्यपि वाजिनाम् । प्राहरंस्ते हयारोहा व्यूहव्याहतरंहसः ॥१२०१॥

बिम्बितज्वलनज्वालाः सर्वे एव महाभटाः । हन्तव्याश्च हताश्वासस्रस्रोतोरुणा इव ॥१२०२॥

स द्विषां कदनं कृत्वा दिनस्यान्ते न्यवर्तत । बाष्पायमाणोस्तकाशं ह्यश्याशेनोज्झितं पुरम् ॥१२०३॥

तादृशेप्यजिते तस्मिञ्जयाशागौरवं द्विषः । स चैज्जीव्रमणीयस्य विनाशाज्जीवितादरम् ॥१२०४॥

1205 जाग्रन्स्वपंश्चलंस्तिष्ठन्नस्नभञ्चश्च सोरिभिः । निर्गच्छन्नित्यगाहूतो न कैरुद्धाष्पमीक्षितः ॥१२०५॥

वह्निनिर्दग्धसर्वान्नसंभारे मण्डलेखिले । दुःसहः सहसैवाथ घोरो दुर्भिक्ष आययौ ॥१२०६॥

•दीर्घविप्लवसंक्षीणसंचया डामरैर्बहिः । उत्तब्धोत्पत्तयो रुद्धसंचारा दग्धमन्दिराः ॥१२०७॥

अनाप्नुवन्तो विधुरे राशि राजकुलाद्धनम् । दुर्भिक्षे तत्र सामन्ता अपि क्षिप्रं विपेदिरे[1] ॥१२०८॥

वह्निनिश्च्युतशेषाणि वेश्मान्यन्नाभिलाषिभिः । बुभुक्षार्तैर्जनैर्दन्तो ददाहाग्निर्दिने दिने ॥१२०९॥

1210 सरितां सेतवो वारिसंसेकोच्छूनविग्रहैः । दुर्गन्धाः कुणपै रुद्धप्राणैस्तीर्णास्तदा जनैः ॥१२१०॥

निर्मांसनरकङ्कालकपालशकलाकुला[1] । उवाह सर्वतः श्वेता क्षितिः कापालिकव्रतम् ॥१२११॥

कृच्छ्रसंचारिणोर्कांशुश्यामक्षामोच्चविग्रहाः । व्यभाव्यन्त बुभुक्षार्ता दग्धस्थाणुनिभा जनाः ॥१२१२॥

अथ प्रबन्धयुद्धेन दिनैः क्वापीषुणा क्षतः । पृथ्वीहरो मृत इति श्रुतिर्मिथ्यैव पप्रथे ॥१२१३॥

गाढप्रहारविवशे तस्मिन्प्रच्छादिते जनैः । तां वार्तां श्रुतवान्राजा ननन्दायुद्ध चोद्धतम् ॥१२१४॥

1215 धीरेव पुंश्चली व्याजौत्सुक्यसंदर्शनेन तम् । जयश्रीर्लोभयन्त्यासीन्न तु भेजे समुत्सुकम् ॥१२१५॥

एकान्तवामहृदयो विधिरानुकूल्यं मिथ्या प्रदर्श्य विशिनष्ट्यनुबन्धि दुःखम् ।
अन्धीकरोति भृशमभ्रमगं ज्वलन्तं भास्वन्महौषधिभिदे प्रकटय्य वज्रम् ॥१२१६॥

दीर्घदुःखानुभूत्यन्ते यदीयागमनोत्सवम् । तपःफलमिव क्ष्माभृत्काङ्क्षन्नासीन्मनोरथैः ॥१२१७॥

वात्सल्येनान्वितं प्रेम गौरवेण प्रियं वचः । औचित्येन च दाक्षिण्यं सापत्न्यमिव या दधे ॥१२१८॥

तस्योपकरणीभूतविभूतिर्गृहिणी प्रिया । तस्मिन्काले महादेवी विपेदे मेघमञ्जरी ॥१२१९॥तिलकम्[1]॥

1220 विनोदशून्यनिर्विण्णलोकयात्रं[1] जगद्विदन् । प्राणै राज्येन वा कृत्यं न स किंचिन्निरैक्षत ॥१२२०॥

सा भर्तुर्व्यसनोदन्तैः कृशा काश्मीरसंमुखी । औत्सुक्यात्त्वयात्रासीच्छ्रान्ता फुल्लपुरान्तिके ॥१२२१॥

पूर्वं तद्दर्शनाशाया दुर्वार्तायास्ततोतिथिः । भवन्नतोधिकं राजा दुःखावेगेन पस्पृशे ॥१२२२॥

राज्ञीमज्ञातपारुष्यतयादूषितभक्तयः । अनुसस्रुश्चतत्रस्ताः परिवारवरस्त्रियः ॥१२२३॥

अप्रत्यक्षे क्षयेप्यस्या भक्त्युद्रिक्तत्वमत्यजन् । तेजो नामाभवस्सूदो वन्द्यो भृत्यान्तरेधिकम् ॥१२२४॥

1225 स ह्यसंनिहितोन्यस्मिन्नह्न्यायातो निजं शिरः । तच्चितोपान्तखड्गेन भङ्क्त्वा प्राव्याविशन्नदीम् ॥१२२५॥

---

११९७—११९८. [1]) The text in these two verses appears to be corrupt or incomplete. १२०३. [1]) Thus A. १२०८. [1]) Emended, A प्रपे°. १२११. [1]) Emended with C; A °कुला.. १२१९. [1]) $A_1$ writes here ३ instead of तिलकम्. १२२०. [1]) ण्ण supplied by $A_2$ in space left by $A_1$.

आहवाह्वानसंरम्भैः शोकविस्मृतिकारिणः । राज्ञो द्विषः कार्यवशादुपकारित्वमाययुः ॥१२२६॥
स राज्यमथ निक्षेप्तुकामो निर्विण्णमानसः । व्युत्क्रान्तशैशवं पुत्रमानिन्ये लोहराचलात् ॥१२२७॥
मण्डलेश्वरतां प्रज्ञैर्भ्रातृव्यं भागिकाभिधम् । नीत्वा च गुप्तिमकरोल्लोहरे कोशदेशयोः ॥१२२८॥
वराहमूलं संप्राप्तममायातः प्रियं सुतम् । आश्लिष्य विषयो राजा बभूवानन्दशोकयोः ॥१२२९॥
राजसूनुस्त्रिभिर्वर्षैः प्रत्यायातः स्वमण्डलम् । स पश्यन्पितरं चान्तरसुस्थितमतप्यत ॥१२३०॥ 1230
खेदम्लाननो लोष्टावशेषं सोऽविशत्पुरम् । अम्बुलम्बाम्बुदो दावनिर्दग्धमिव काननम् ॥१२३१॥
राज्येऽभ्यषिञ्चदाषाढस्याद्येऽह्नि जनकोऽथ तम् । अवादीद्राज्यतन्त्रं च कृत्स्नमुत्कासुगद्गदः ॥१२३२॥
भ्रान्ताः पितृपितृव्यास्ते न यां वोढुमशक्नुवन् । धुरमुद्वह तां वीर त्वयि भारोऽयमर्पितः ॥१२३३॥
साम्राज्यप्रक्रियामात्रपात्रं पुत्रं नृपो व्यधात् । न त्वार्पिपदधीकारं तस्मिन्दैवविमोहितः ॥१२३४॥
अभिषेकविधावेव राजसूनोः शमं ययुः । पुरोपरोधावमाहव्याधिचौराद्युपद्रवाः ॥१२३५॥ 1235
संपन्नसस्या च तथा देवी संववृते मही । दुर्भिक्षं श्रावणे मासि यथावत्प्रशमं ययौ ॥१२३६॥
अत्रान्तरे सिंहदेवो रणे कुर्वन्परिक्षयम् । कर्णजपैर्जनयितुर्द्रोग्धायमिति सूचितः ॥१२३७॥
कोपादविमृशत्तत्त्वं स बन्द्धुं तं व्यसर्जयत् । कृप्यात्मजं राजसूनुस्तत्तु प्रागेव बुद्धवान् ॥१२३८॥
कोपस्मितोत्कटस्याग्रे स तस्याप्रतिभोऽभवत् । निनाय रक्षामात्रेण पार्थिवाज्ञाममोघताम् ॥१२३९॥
अभुक्तवान्मनस्तापात्प्रत्ययोत्पत्तये पितुः । साकं तेन सुतोऽन्येद्युर्गन्तुं प्रावर्ततान्तिकम् ॥१२४०॥ 1240
आक्षेप्तुं शङ्कितोऽशक्य इति मत्वा स मन्त्रिभिः । मार्गाद्व्यवर्तयत तं पिता मिथ्या प्रसादयन् ॥१२४१॥
अन्तस्तु निश्चिकायेति प्रविश्यातर्कितागमः । बद्ध्वैनं स्थापयिष्यामि कारायामिति सोऽनिशम् ॥१२४२॥
धिग्राज्यं यत्कृते पुत्राः पितरश्चेतरेतरम् । शङ्कमाना न कुत्रापि सुखं रात्रिषु शेरते ॥१२४३॥
पुत्रपत्नीसुहृद्भृत्या येषां शङ्कानिकेतनम् । विस्रम्भभूर्भूपतीनां कस्तेषामिति वेत्ति कः ॥१२४४॥
साह्याभिधानप्रख्यातकुग्रामोपान्तवासिनः । खलपालस्य तनयः स्थानकाख्यस्य कस्यचित् ॥१२४५॥ 1245
शैशवे पाशुपाल्येन वर्धितो डामरोद्भवैः । गृहीतशस्त्रस्तन्नित्यं क्रमाट्टिक्कस्य लब्धवान् ॥१२४६॥
प्रथमाब्दात्प्रभृत्यात्तदूत्यो भूभर्तुराप्तताम् । प्रययावुत्पलो नाम वैरिविच्छेदमिच्छता ॥१२४७॥
स हि भिक्षाचरं टिक्कमथ व्यापादयेत्यमुम् । जगादाङ्गीकृतैश्वर्यदानष्टिक्कोपवेशने ॥१२४८॥
कृतप्रतिश्रवं तस्मिन्नर्थे तं च महर्द्धिभिः । दानैरुपाचरद्गञ्जपतिनाप्याप्ययोजयत् ॥१२४९॥
भोगलोभप्रभुद्रोहचिन्तादोलायमानधीः । स कार्यं परिहार्यं वा न कृत्यं निश्चिकाय तत् ॥१२५०॥ 1250
प्रासोष्टापत्यमत्रान्तस्तद्वधूः कार्यतो नृपः । तत्तच्च मांहिणोत्तस्यै पितेव प्रसवोचितम् ॥१२५१॥
सा तस्यास्युपचारस्य कारणं परिशङ्किता । पतिं पप्रच्छ निर्बन्धात्सोऽपि तस्यै व्यवर्णयत् ॥१२५२॥
न कार्यः स्वामिनो द्रोहः कृते वास्मिन्न सुस्सलः । त्वामेव शनकैर्हन्याद्द्रोग्धायमिति चिन्तयन् ॥१२५३॥
वरं स एव विश्वास्य व्यापाद्यस्तत्र चेद्वधः । भवेन्ने स्वामिपुत्रादिकुटुम्बं स्याद्विभूतिभाक् ॥१२५४॥

१२३८. [1]) A °विमृषं°.—[2]) Emended; A बन्धुं. १२४४. [1]) Thus A. १२५१. [1]) Emended with C; A मांहिणो°.

1255 भार्ययेति प्रेर्यमाणः स निश्चयविपर्यये । टिक्कं विदितवृत्तान्तं कृत्वा बद्धोद्यमः कृतः ॥१२५५॥
गतागतानि कुर्वाणे दुधुक्षावथ पार्थिवः । स पुत्र इव विश्वासं ययौ दैवविमोहितः ॥१२५६॥
विपर्यस्ता मतिः पुत्रे विश्वासो वैरिसंश्रिते । जायते क्षीणभाग्यानां को नाम न विपर्ययः ॥१२५७॥
वैधेयैः स्वार्थलोभान्धैर्यद्वानर्थसमागमः । सरघोपद्रवः[1] क्षौद्रलुब्धैरिव न चिन्त्यते ॥१२५८॥
तं पीडितं प्रज्जिना च राज्ञा चावनतिं ततः । उत्पलोऽकारयट्टिक्कं नीविं चादापयत्सुतम् ॥१२५९॥
1260 राजाथ देवसरसं जितं संत्यज्य कार्तिके । वाङ्ककाख्यमगाद्ग्रामं खेरीविषयवर्तिनम् ॥१२६०॥
स कल्याणपुराभ्यर्णे रणैस्तैस्तैर्विलक्षताम् । भिक्षुकोष्ठेश्वरमुखानपि निन्ये महाभटान् ॥१२६१॥
मध्याद्भिक्षाचरादीनां सुज्जिः[1] काककुलोद्भवम् । जीवग्राहं महावीरं युधि जग्राह शोभकम् ॥१२६२॥
भवकीयस्य कृत्वादौ विजयस्य पराभवम् । भूभुजा तद्गृहा दग्धाः कल्याणपुरवर्तिनः ॥१२६३॥
दग्धे वडोसके[1] भिक्षाचरो नष्टाभयो व्यधात् । त्यक्त्वा तां क्ष्मां शमालायां ग्रामे काकरुहे स्थितिम्[2] ॥१२६४॥
1265 अनुजो भवकीयस्य विजयस्य भयान्नृपम् । संश्रितस्तेन तूर्णेन बद्ध्वा कारागृहेऽर्पितः ॥१२६५॥
भूरिसैन्यानुगं शूरपुरे विन्यस्य रिल्हणम् । आस्कन्दाशङ्किनीं राजा चक्रे राजपुरीमपि ॥१२६६॥
इत्थमुद्दण्डया वृत्त्या खण्डितोद्दण्डडामरः । स्तोकावशेषं सोऽपश्यत्कर्तव्यमरिनिर्जयम् ॥१२६७॥
भिक्षाचरो लवन्याश्च शक्तिक्षयमुपागताः । विदेशगमनं भीता रिपौ बलिनि मेनिरे ॥१२६८॥
किमप्यभाग्यावतारैर्भिक्षुपक्षजुषां यतः । जीवतामप्यनुल्लासान्निर्जीवत्वमिवाययौ ॥१२६९॥
1270 स सोमपालकौटिल्यं स्मरन्कुर्यां हिमात्यये । श्मशानोर्वीं राजपुरीमिति ध्यायन्व्यवर्तत ॥१२७०॥
शान्तप्रायस्वदेशोर्वीविप्लवस्य महीपतेः । तस्यार्णवान्तक्रमणप्रतीतिः समभाव्यत ॥१२७१॥
शतैकीयो योऽवशिष्टो विप्लवक्षपिते जने । वर्षं वर्षं स तद्राज्ये युगदीर्घं त्वमन्यत ॥१२७२॥
अस्वस्थत्रासदारिद्र्यप्रियनाशादिवैशसैः । स राज्यकालः सर्वस्य परितापावहो ह्यभूत् ॥१२७३॥
नरः पौरुषनैष्ठुर्यशठत्वेन करोति किम् । विधातृवृत्तिवैचित्र्य[1]पराधीनासु सिद्धिषु ॥१२७४॥
पुरोभूतं कंचित्परिहरति राशिं तम इव व्यतीते कस्मिंश्चिद्धरिरिव विवृत्यास्यति दृशम् ।
1275 स्वमुल्लङ्घ्यासन्नं क्वचन नृपतिं दर्दुर इव क्रमेत्स्रष्टुर्दृष्टः स्फुटमिति गतीनामनियमः ॥१२७५॥
विश्वासंनिहतान्विन्दन्सुस्सलादीन्पुरावसत् । नित्यं विक्रोशशालो यः पुराविज्ञो निशम्य च ॥१२७६॥
विदूरथादि[1]वृत्तान्तं नादात्केलिक्षणे ब्रुवन् । स्त्रीषु संभुज्यमानासु[2] विश्वासविशदां दृशम् ॥१२७७॥
स बन्धाविव निर्बन्धाद्विशश्वास यदुत्पले । तत्र संभाव्यते केन दैवादन्यो विमोहकृत् ॥१२७८॥
टिक्कादयो भूमिपतेः सुज्जेर्वान्यतरे[1] हते । त्वां तुल्यकार्यकर्तारं विद्म इत्यूचुरुत्पलम् ॥१२७९॥
1280 सुज्जिर्न व्यश्वसीत्तस्मिन्स जिघांसुस्तु भूभुजम् । तत्र तत्राभवत्सज्जः प्रसङ्गं नासदत्पुनः ॥१२८०॥
प्रतिभूतविलम्बेन समन्योरथ भूपतेः । प्रत्ययोत्पत्तये देवसरसाग्नीविमात्मजम् ॥१२८१॥

---

१२५८. [1]) $A_2$ gloss सरघा मधुमक्षिका (*Amara.* ii. 5. 26). १२६२. [1]) Emended; A सुज्जि· १२६४. [1]) A वळोसके, perhaps read वडोस्सके. Cf. वाडोस्सः viii. 1306.—[2]) Emended with C; A स्थितं. १२७१. [1]) The last two *pâdas* have become in A partly illegible by an ink blot and have been repeated in the margin by the same hand which supplemented the gloss to i. 110. १२७४. [1]) Emended with C; A °वैचित्र्य°. १२७७. [1]) Emended with C; A विदूरथा°. —[2]) Emended, A °मानास्वविश्वास°. १२७९. [1]) Emended; A °न्यतमे.

व्याघ्रप्रशस्तराजादींस्तीक्ष्णांश्चात्मसमान्परान्[1] । आदाय कार्यमेतैर्मे सिध्येदित्युक्तवान्नृपम् ॥१२८२॥
उच्छ्रित्योच्छ्रित्य सेनाभ्यो गृहीतैः साहसक्षमैः । शतैः समं त्रिचतुरैः पत्तीनामेकदा ययौ ॥१२८३॥तिलकम्[1]॥
समयान्वेषिणो हन्तुस्तस्यासन्नस्य सर्वदा । प्रियाहारादिदानेन हन्तान्तःप्रीतिकार्यभूत् ॥१२८४॥
तुरंगं मन्दुराचक्रवर्त्याख्यं नगरस्थितम् । अस्वस्थमुल्लाघयितुं तुरगव्यसनी नृपः ॥१२८५॥ 1285
स लक्ष्मक[1]प्रतीहारकय्यात्मजमुखान्निजान् । पार्श्वाद्विसृष्ट[2]वानासीत्क्षणे तस्मिन्मितानुगः ॥१२८६॥
भृङ्गारो लक्ष्मकापत्यं निशम्याप्तैर्निवेदितम् । व्यधाच्छ्रुतिपथे राज्ञस्तदुत्पलचिकीर्षितम् ॥१२८७॥
विरुद्धे बन्धुधीर्दृष्टहिंसारम्भेपि संभवेत् । आसन्नजीवितान्तस्य जन्तोः सूनापशोरिव ॥१२८८॥
स शापो गान्धार्यास्तदपि सहृदो भाषितमृषेस्त उत्पाताश्चक्षुः स्वमपि तदभौमं प्रकटयत्[1] ।
कुलान्तं तत्त्राणाक्षममकृत वैकुण्ठमपि तद्विदन्नप्यन्यस्त्वं क इव भवितव्यस्य कुरुताम् ॥१२८९॥
मिथ्यैतदित्यधिक्षिप्य क्षितिपालः प्रदर्शयन् । तमङ्गुल्योत्पलादींस्तानग्रस्थानेवमब्रवीत् ॥१२९०॥ 1290
द्रोग्धुः श्रुतोभवद्योगादनिच्छन्स्वास्थ्यमेष मे । त्वां दुष्टमुत्पलाचष्टे स्वेनान्यैर्वाथ चोदितः ॥१२९१॥
ते छादयन्तः स्मेरास्या धार्ष्ट्येन भयवैकृतम् । वक्ति देवो यदस्माभिर्वाच्यमित्येवमूचिरे ॥१२९२॥
निर्यातेष्वथ तेष्वीषत्साशङ्क इव निश्चलान् । द्वाःस्थेनाकारयद्द्वित्रानन्तिके मुख्यशस्त्रिणः ॥१२९३॥
उन्मनाश्च किमप्यासीद्विनिःश्वस्य स चिन्तयन् । साश्रुश्च न रतिं लेभे नृत्तगीतादिदर्शने ॥१२९४॥
मेने वैदेशिकप्रायानाप्तानपि धृतभ्रमः । पुण्यक्षये विपतिषुर्वैमानिक इवाम्बरात् ॥१२९५॥ 1295
राजान्तरङ्गाः साशङ्काः प्रभौ शाठ्येन मोहिते । पूत्कारमैच्छन्दातारमन्यं केचिदचेतनाः ॥१२९६॥
अयमेव स कालस्य बलात्कवलनग्रहः । विदन्तोपि यदायान्ति जन्तवः कृत्यमूढताम् ॥१२९७॥
सर्वान्तरक्षणेष्वस्तचक्षुषो दिवसद्वयम् । उत्पलाद्याश्च साशङ्काः कथमप्यत्यवाहयन् ॥१२९८॥
रहः क्षणप्रार्थिनस्तांस्तृतीयेह्न्यब्रवीन्नृपः । स्नात्वा प्रत्यूषे तद्यूयं भोक्तुं यात मुहुर्गृहम् ॥१२९९॥
देवतार्चनपर्यन्तमवसायाह्निकं विधिम् । आजुहावोत्पलं दूतैर्मध्याह्नेथ रहःस्थितः ॥१३००॥ 1300
कार्यसिद्धिं श्रद्दधानो वैजन्याद्राजसद्मनः । राज्ञोभ्यर्णे स साशङ्कं द्वाःस्थ[1]रुद्धानुगोविशत् ॥१३०१॥
प्रावेशयद्द्वारि रुद्धं व्याघ्रं तदनुजं नृपः । शेषाणामपि भृत्यानामादिदेश बहिःस्थितिम् ॥१३०२॥
विलम्बमानेष्वाप्तेषु केषुचित्त्वरयो वचः । सत्यं तस्योद्ययावास्तां सोत्र द्रोग्धा य इत्यपि ॥१३०३॥
ताम्बूलदायकः प्रौढवयास्तेनावशेषितः । सांधिविग्रहिको विद्यान्नाहिलश्चान्तिके परम् ॥१३०४॥
दूतौ टिक्कस्यार्घदेवतिष्य[1]वैश्याभिधावुभौ । तत्र प्रसङ्गादासातामज्ञातोत्पलसंविदौ ॥१३०५॥ 1305
वाडोरसः[1] सुख[2]राजाख्यो डामरो भिक्षुसंमतः । प्रयास्यति प्रभोर्दृष्ट्वा पादौ तत्कार्यसिद्धये ॥१३०६॥
इत्युक्तवांस्तेष्वहःसु तं नृपं नातिदूरगम् । ससैन्यं डामरं[1] चक्रे स्वस्य त्राणार्थमुत्पलः ॥१३०७॥
तथा चैनं तस्थिवांसं कृत्यमस्त्यमुनेति च । उक्त्वा प्रशस्तराजं तं पार्श्वं प्रावेशयद्द्रुतम् ॥१३०८॥
प्रविष्टो निर्जनं बाह्यमाकलय्य स मण्डपम् । अलक्ष्यमाणव्यापारो द्वारमर्गलितं व्यधात् ॥१३०९॥

---

१२८२. 1) Emended; A °त्मसरान्परान्. १२८३. 1) $A_1$ writes here ३ instead of तिलकम्. १२८६. 1) Thus $A_1$; $A_3$ पद्मक.°— 2) वा supplied by $A_3$ in space left by $A_1$. १२८९. 1) Emended; A प्रकटयन्. १३०१. 1) Emended; A द्वास्थ. १३०५. 1) Emended; A °स्याघदेवतिष्ठवैश्य°; Cf. viii. 1543. १३०६. 1) A वाळौरसः perhaps read वाडोरस. Cf. वडोसके viii. 1264.— 2) A सु × ख°. १३०७. 1) A डमरं.

1310 स्नानार्द्रकेशं शीतालुतया प्रावारवेष्टितम् । कृत्वा कृत्स्नं वपुः कृष्टशस्त्रीकं विष्टरोपरि ॥१३१०॥
आसीनं वीक्ष्य नृपतिं प्रसङ्गो नेदृशो भवेत् । विश्रम्भं कुरु भूभर्तुरित्यूचे व्याघ्र उत्पलम् ॥१३११॥
स तया संज्ञया व्यग्रः पादप्रणतिकैतवात् । राज्ञोग्रमेत्य तच्छस्त्रीं विष्टरस्थामपाहरत् ॥१३१२॥
विकोशां चाकरोत्पश्यंस्तां तयोद्भ्रान्तलोचनः । प्राह स्म हा धिक्किं द्रोह इति यावद्वचो नृपः ॥१३१३॥
प्राहरत्प्रथमं तावत्सव्ये पार्श्वे तथैव सः । तस्य प्रशस्तराजेन मूर्धनि प्रहृतं ततः ॥१३१४॥ युग्मम् ॥
1315 व्याघ्रेणाथ क्षतं वक्षस्ताभ्यामेवासकृत्तदा । प्रहृतं तत्र स पुनः प्राहरत्स द्विरुत्पलः ॥१३१५॥
पूर्वयैव प्रहृत्या हि भिन्नपार्श्वास्थिमालया । मेने कृष्टान्त्रतन्त्रीकं स तं प्रोषितजीवितम् ॥१३१६॥
गत्वा तमोरिं पुत्कर्तुमिच्छन्व्याघ्रेण राहिलः । पृष्ठे कृताहतिश्छिन्ना नालिका नोज्झितोसुभिः ॥१३१७॥
ताम्बूलदायकस्त्यक्त्वा कङ्कोलाद्यज्जको व्रजन् । दीनो निजेभ्यः कारुण्यादुत्पलेनैव रक्षितः ॥१३१८॥
अन्तः समुत्थिते क्षोभे बाह्यमण्डपवर्तिभिः । टिक्काद्यैः कृता लुण्ठिर्द्रोहगृध्नैरुदायुधैः ॥१३१९॥
1320 उत्पलो निहतो राज्ञेत्यत्रेत्य कटकस्थितैः । बहिःस्थान्हन्यमानान्स्वान्समाश्वासयितुं ततः ॥१३२०॥
रक्तार्द्रशस्त्रं संदर्श्य तमोरेर्वपुरुत्पलः । ऊचे मया हतो राजा न त्याज्या तद्भूरिति ॥१३२१॥
तच्छ्रुत्वा दुःश्रवं राजभृत्याः क्वापि भयाद्ययुः । द्रोहानुगास्त्वङ्गनान्तर्लब्धोल्लासा व्यधुः स्थितिम् ॥१३२२॥
निर्यान्तो मण्डपात्तीक्ष्णा निजघ्नुर्नागकाभिधम् । द्वारात्प्रविष्टं निष्कृष्टकृपाणीकं नृपानुगम् ॥१३२३॥
भूपालशय्यापालस्य त्रैलोक्याख्यस्य सेवकः । निन्दन्द्रोहं टिक्काद्यैर्द्वाःस्थश्चैको विपादितः ॥१३२४॥
1325 उत्कृष्टं नष्टसत्त्वानां मध्ये राजानुजीविनाम् । सखेटकासिं धावन्तं भावुकान्वयभूषणम् ॥१३२५॥
दृष्ट्वा सहजपालाख्यं पार्श्वद्वारेण निर्ययुः । तीक्ष्णाः स त्वपतद्भूमौ तद्भृत्यप्रहतिक्षतः ॥१३२६॥
जाते कुकीर्तिकालुष्यपात्रे राजात्मजव्रजे । वैलक्ष्यक्षालनं सिद्धं तस्य स्वक्षतजैः परम् ॥१३२७॥
हतो दैशिकसंवादिदेहो राजात्मजभ्रमात् । विद्वान्द्विजन्मा नोनाख्यस्तीक्ष्णपक्षैः पुरो गतः ॥१३२८॥
अक्षतान्व्रजतो वीक्ष्य तीक्ष्णान्धामान्तरोन्मुखान् । चित्रार्पिता इव क्रोधान्नाधावन्केपि शस्त्रिणः ॥१३२९॥
1330 राजवंश्या महीपालप्रीतिपात्रमथाययुः । स्थगयन्तोङ्गनं स्थूलकाया जनविवर्जितम् ॥१३३०॥
तांस्तान्कापुरुषान्हर्षदेवोदन्तात्प्रभृत्यलम् । स्मृत्वा च कीर्तयित्वा च कृतभारमहा इव ॥१३३१॥
जाता दुष्कृतसंस्पर्शात्खेदात्कर्तुं न शक्नुमः । पापात्पापीयसां येषां नामग्रहणसाहसम् ॥१३३२॥
अङ्गनान्मण्डपारूढिं मन्वानाः पौरुषं महत् । पापिनः केपि तन्मुख्या ददृशुः स्वामिनं हतम् ॥१३३३॥
अधरेणास्त्रसंस्कारलेशावेशप्रकम्पिना । वदन्तं दन्तदष्टेन स्वान्तस्यान्तेनुतप्तताम् ॥१३३४॥
1335 वञ्चितः कथमेषोहमिति नामेति चिन्तया । निस्पन्दे जीवितान्तेपि तथैव दधतं दृशौ ॥१३३५॥
श्यामायमानं बाष्पेण व्रणवक्त्रैरुदञ्चता । अन्तःप्रशान्तामर्षाग्निशेषधूमलतात्विषा ॥१३३६॥
आननस्यास्फुटीभूतचन्दनोल्लेखकुङ्कुमम् । सक्तया लिखितस्येव घनक्षतजलाक्षया ॥१३३७॥
आश्यानास्रजटीभूतकेशं नग्नं भुवि च्युतम् । पर्यस्तपाणिचरणं स्कन्धालम्बिकन्धरम् ॥१३३८॥

---

१३१३. [1]) Emended with C; A चिकोशां. १३१४. [1]) $A_1$ writes here २ instead of युग्मम्. १३१८ [1]) Emended; A काकुला°. १३२४. [1]) Conjectural reading; A °शकचापालस्य.—[2]) Emended; A °द्वास्थश्चैको.—[3]) Emended; A स्वपादितः. १३२८. [1]) Emended; A हतदैशि°. १३३३. [1]) The first *páda* of this verse has been first omitted and subsequently supplied by $A_1$ in margin. १३३८. [1]) A कन्धरम्.

तं वीक्ष्य नोचितं किंचिदाचिरुस्ते नराधमाः । वैजन्यस्य फलं भुङ्क्ष्वेत्यावेगादधिचिक्षिपुः ॥१३३९॥
बद्धा तुरंगे युग्ये वा न तैर्नीतश्चितामिसात् । कर्तुं न वा पारितः स प्राणत्राणाय धावितैः ॥१३४०॥ 1340
आस्तां विलम्बसाध्यं त्वा कर्मैतद्भाष्ट्रदारुसात् । सज्जाग्नि चाग्निसाद्देहमपि कश्चिन्न नाकरोत् ॥१३४१॥
राजवाजिनमेकैकं तेध्यारुह्य पलायिनाः । निर्लुण्ठितस्तु कटको व्रजन्ग्रामेषु डामरैः ॥१३४२॥
न पुत्रः पितरं पुत्रं पिता वा प्रत्यपालयत् । मृतं हतं लुण्ठितं वा प्रचलन्सहिमेध्वनि ॥१३४३॥
न कोपि शस्त्रभृत्सोभूत्स्मृत्वा मानोन्नतिं पथि । परैराक्षिप्यमाणो यः शस्त्रं वस्त्रं च नात्यजत् ॥१३४४॥
लवराजयशोराजद्विजौ व्यायामवेदिनौ । कान्दश्च राजा निहता वीरवृत्त्या त्रयः परम् ॥१३४५॥ 1345
अदूरादुत्पलाद्यास्तु कटकं वीक्ष्य विद्रुतम् । प्रविष्टा वाहुत्रं छित्त्वा शिरो निन्युर्महीपतेः ॥१३४६॥
गतेषु देवसरसं तेषु छिन्नशिरा नृपः । हतश्चौर इव प्राप ग्राम्याणां प्रेक्षणीयताम् ॥१३४७॥
एवं द्रोहैस्तृतीयाब्दामावास्यायां स फाल्गुने । पञ्चपञ्चाशतं वर्षानायुषोतीतवान्हतः ॥१३४८॥
विलासशयनस्थस्य सिंहदेवस्य सा श्रुतौ । प्रेमाढ्येनैत्य दुर्वार्ता धात्रेयेण व्यधीयत ॥१३४९॥
संभाव्यते योनुभावः सशस्त्रस्याप्रियश्रुतौ । हतशस्त्रोपि तं प्राप स तदा पितृवत्सलः ॥१३५०॥ 1350
मोहलुप्तस्मृतिः स्मृत्वा चिरादुन्नतचेतनः । तद्दुःखाहतधर्तिर्विललाप स्फुटास्फुटम् ॥१३५१॥
मदर्थं कुर्वता राज्यं प्रयत्नादपकण्टकम् । अधमे किं महाराज त्वयात्मा परिभावितः ॥१३५२॥
अहेतेः पश्यतः शत्रूनन्ते वैरविशुद्धये । अपि ते मानिनोगच्छंस्तात संभावनाश्रुत्रम् ॥१३५३॥
त्वया निषेधिते वैरे पिता भ्राता च ते दिवि । निर्मन्युः संप्रति त्वं तु वर्तसे मन्युदुःस्थितः ॥१३५४॥
अनरण्यकृपद्रोणजामदग्न्यादिषु स्पृहाम् । कुल्यक्षालितवैरेषु मा कार्षीः कांचन क्षणम् ॥१३५५॥ 1355
शोच्यस्त्वदाश्रयो मन्युरहं शोधयिता नृप । द्वये न तत्र यातं यत्त्रैलोक्यमभियोज्यताम् ॥१३५६॥
वात्सल्योत्पुलकस्मेरं स्निग्धोक्तिमधुरं मुखम् । मद्दर्शने यदासीत्ते तन्मे पुर इवाधुना ॥१३५७॥
इति चान्यच्च विलपन्गाम्भीर्यालक्ष्यवैकृतः । ह्रीशोकभयमूकान्स ददर्शामात्पितुः पुरः ॥१३५८॥
अशिक्षयत यन्मन्युर्दाक्षिण्यं निहरोध तत् । तथाप्येवं स तानूचे किंचिदाक्षेपकर्कशम् ॥१३५९॥
कोशैः सद्दंशतां वीक्ष्य कुर्वतः सत्क्रियां गताः । धिग्भवन्तश्च शस्त्रं च तातस्यान्ते विपर्ययम् ॥१३६०॥ 1360
यन्मत्पितृव्ये निहते कृतमुच्छिष्टजीविभिः । मान्यानां भवतां सिद्धं हा धिक्तदपि नाधुना ॥१३६१॥
इत्युपालम्भमानस्तान्द्वित्रैरन्तिकमागतैः । द्वित्रैरमात्यैः कर्तव्यश्रुतयेत्रहितः कृतः ॥१३६२॥
प्रस्थानं लोहरे केचिदूचुः संत्यज्य मण्डलम् । त्वरां च तत्र राज्यन्ते वदन्तो भैक्षवं भयम् ॥१३६३॥
गर्भात्मजं पञ्चचन्द्रमालम्ब्यं लहरस्थितम् । द्वैराज्याचरणायान्ये धीरमाया बभाषिरे ॥१३६४॥
न हि स्वगृहवद्भिक्षोर्विक्षोर्नगरान्तरम् । अज्ञायि प्रत्यवस्थानं केनाप्यसति सुस्सले ॥१३६५॥ 1365
आत्मन्यसंभावनया तादृशां मन्त्रिणां नृपः । सान्तःखेदं श्वो विधेयं द्रक्ष्यथेत्यब्रवीद्वचः ॥१३६६॥
कालापेक्षापरित्यक्तपितृव्यापत्तिदुःस्थितः । स कोशादिव्यथादिसन्नक्षिणस्त्राणदीक्षितान् ॥१३६७॥

१३४६. ¹) Thus A; cf. वाहुत्रं viii. 1459. १३४९. ¹) Emended; A धात्रीयेन. १३५०. ¹) नुभाव supplied by $A_2$ in space left by $A_1$. १३५५. ¹) Thus A. १३६०. ¹) Emended; A कुरुत. १३६१. ¹) Emended with C, A न हते. १३६४. ¹) Emended, A °लम्ब. १३६६. ¹) तादृशां supplied by $A_2$ in space left by $A_1$.

इतश्चेतश्च बम्भ्रम्यमाणैः प्रोच्चप्लुतस्वरम् । अन्योन्याह्वयार्थिभिर्लोकैः पुरं मुखरतामगात् ॥१३६८॥

पतद्वेतालमालेव कालरात्र्याकुलेव च । बभूव सा यामवती सर्वभूतभयावहा ॥१३६९॥

1370 दीपैर्निर्वातनिष्कम्पैश्चिन्तास्पन्दैश्च मन्त्रिभिः । तिष्ठन्परिवृतो राजा स्वन्तरेवमचिन्तयत् ॥१३७०॥

निर्द्वारे सतमस्युग्रमारुते शून्यवेश्मनि । तातोपि निहतः शून्ये मयि जीवत्यनाथवत् ॥१३७१॥

कष्टमेतादृशासह्यवैशसक्षालनावधि । कथं गोष्ठीषु शक्ष्यामि द्रष्टुं मानवतां मुखम् ॥१३७२॥

विरोधिवशवर्तिभ्यो देशेभ्यः सैन्यनायकाः[1] । सहिमैरेव दुर्लङ्घ्यैः कथमेष्यन्ति वर्त्मभिः ॥१३७३॥

इत्थं विमृशतस्तस्य[1] तत्तत्तीव्राभिषङ्गिनः । ययौ भीतिमतो भीमा कथंचित्सा निशीथिनी[2] ॥१३७४॥

1375 प्रातश्चतुष्किकां पौरसमाश्वासाय निर्गतः । नष्टं कटकमन्वेष्टुं सोश्वारूढान्व्यसर्जयत् ॥१३७५॥

मार्गानसूचीसंचारैस्तुषारैर्विवरोज्झितान् । आश्लिष्टवसुधा मेघाः कर्तुं प्रारेभिरे ततः ॥१३७६॥

नामाप्यलब्ध्वा सैन्यस्य मोघसैन्येषु[1] दूरतः । निवृत्तेषु नियुक्तेषु विमृश्य[2] नृपतिः क्षणम् ॥१३७७॥

यद्यद्येनाहृतं तत्तत्परित्यक्तं मयाधुना । दत्तं चारीञ्झितवतामभयं सागसामपि ॥१३७८॥

इत्याज्ञां भ्रमयामास पटहोद्घोषणैः पुरे । साशीर्घोषास्ततः पौरास्तत्रारज्यन्त सर्वतः ॥१३७९॥तिलकम्[1]॥

1280 अनन्तरनृपाचारवैधर्म्योकारकल्पया । तया सोनघया वृत्त्या फलं सद्योनुभावितः ॥१३८०॥

शतादप्यूनसंख्यैर्यैः स्थितश्चाननुगैः समम् । अनुरागहतैर्लोकैस्तत्कालं पर्यवार्यत ॥१३८१॥

प्रियोक्त्यावेदनं प्रीतिदायोपायः प्रभोः पुरः । भजंल्लोकस्याप्यमन्त्रिपदवीं लक्ष्मकोग्रहीत् ॥१३८२॥

राज्यं शम्यां नयत्येवं प्राज्ञे राज्ञि नयक्रमैः । याति मध्यं दिने भिक्षुर्विविक्षुः पुरमाययौ ॥१३८३॥

तस्य डामरपौराश्ववारलुण्टाकसंकुलः । अदृष्टपूर्वो ददृशे सैन्यव्यतिकरस्तदा ॥१३८४॥

1385 हतं श्रुत्वा रिपुं राज्योत्सुकः स नगरं व्रजन् । राजा काकात्मजेनेति तिलकेनाभ्यधीयत ॥१३८५॥

हतः समस्तविद्वेष्यः स दैवाद्यदि सुस्सलः । कथं प्रकृतयो जह्युर्गुणवन्तं तदात्मजम् ॥१३८६॥

पुरप्रवेशे का राजंस्तस्मादेकमहस्त्वरा । एहि पद्मपुरं यामो मार्गं रोद्धुं विरोधिनाम् ॥१३८७॥

आगच्छन्तो नष्टसैन्याः सुज्जिमुख्या महाभटाः । निहता यदि वा रुद्धास्तत्र सायुधवाहनाः ॥१३८८॥

प्रविष्टोसि ततो न्यस्तशस्त्रो द्वित्रैर्दिनैर्ध्रुवम् । नगरं नगरीकोभिः स्वयमभ्यर्थितागमः ॥१३८९॥

1390 अलमेतैर्जरन्मन्त्रैर्वदन्त इति चक्रिरे । स च कोष्ठेश्वराद्याश्च स्मेरास्तस्यावधीरणाम् ॥१३९०॥

राज्यं विदद्भिः संप्राप्तं[1] तांस्ताञ्शासनपट्टकान् । द्रुतमर्थयमानैश्च विलम्बं कारितो निजैः ॥१३९१॥

अतो बहुहिमापातविवशाशेषसैनिकः । आसदन्नगरोपान्तं समयेन स तावता ॥१३९२॥

एतस्मिन्नन्तरे लब्धे निःसैन्यस्य ससैनिकः । गर्गात्मजः पञ्चचन्द्रो नृपतेः पार्श्वमाययौ ॥१३९३॥

हतस्वामिपरित्यागमन्युक्षालनकाङ्क्षिभिः । राजपुत्रैः समं सोथ वीरो योद्धुं विनिर्ययौ ॥१३९४॥

1395 असंभावनसंग्रामान्वीक्ष्य तान्भिक्षुसैनिकाः । यावत्प्रारेभिरे योद्धुं तावत्किमपि सर्वतः ॥१३९५॥

क्षणेनैव ययुर्भङ्गं तांस्तान्वीक्ष्य हतान्निजान् । न संस्तम्भयितुं शेकुः स्वचमूश्च पलायिनीः ॥१३९६॥

---

१३७३. [1]) Emended; A °नायकः. १३७४. [1]) A विमृषत°.—[2]) A निषीथिनी. १३७७. [1]) Thus A; perhaps read मोघसैन्येषु.—[2]) A विमुश्य. १३७९. [1]) A₁ writes here ३ instead of तिलकम्. १३९१. [1]) Emended; A संप्राप्तांस्तांस्ता°.

सेनानाथाश्च ये मुख्या भिक्षुपृथ्वीहरादयः । अदृष्टपूर्वं संत्रासं तेप्यशस्त्रिवदाययुः ॥१३९७॥
विद्रवन्तोनुयाताः स्युस्ते चेद्दूरं नृपानुगैः । तन्नूनमवशिष्येत क्षणादेव न किंचन ॥१३९८॥
वैमुख्यं तेषु यातेषु चिरात्सांमुख्यमाययौ । नवभूभृत्प्रभावेण नगरे विधुरे विधिः ॥१३९९॥
अन्यथा कलितो लोकैरन्यथा दैवयोगतः । इत्थं राज्ञोर्द्वयोरासीद्विजयावजयक्रमः ॥१४००॥ 1400
कंचिन्निपातयति बद्धपदं क्षणेन कंचित्परं पिपतिषुं नयति प्ररूढिम् ।
संकल्पनिर्विषयचित्रतरानुभाव ओघोम्भसामिव तटं पुरुषं विधाता ॥१४०१॥
अथ तत्तद्भयस्थानशान्तः सुज्जिर्दिनात्यये । दावव्याप्ताद्विनिष्क्रान्तो निःसहोहिरिवाययौ ॥१४०२॥
मेधाचक्रपुरमामस्थितः श्रुत्वा हतं नृपम् । स हि संमन्त्य राष्यन्तर्नोत्तस्थाववसत्परम् ॥१४०३॥
रिल्हणादीन्स्थिताञ्शूरपुरादौ सैन्यनायकान् । प्रतीक्षमाणस्तैः साकं निर्बाधं नगरेविशत् ॥१४०४॥
तमिस्रायां प्रत्यभिज्ञाकृते तेषामनश्वरान् । स्वावासपृष्ठे ज्वलतो दीपानस्थापयत्ततः ॥१४०५॥ 1405
वैमत्यात्ते तु पत्तीनां विद्रुतानां पृथक्पृथक् । निशि क्वापि परिभ्रष्टा न तत्कटकमाययुः ॥१४०६॥
प्रत्यूषे प्रबलंस्तैस्तैः पृष्ठलग्नैः स डामरैः । न मुहूर्तमपि त्यक्तः प्रहरद्भिरितस्ततः ॥१४०७॥
वृद्धस्त्रीबालभूयिष्ठान्सहप्रस्थायिनो जनान् । ययौ रक्षन्पुरः कृत्वा पशुपालः पशूनिव ॥१४०८॥
पञ्चाशत्या हयारोहैः सह व्यावृत्य तिष्ठता । कंचित्क्षणं तेन रक्षा तेषां कर्तुमशक्यत ॥१४०९॥
द्राक्षाषण्डद्रुमव्यूहसंबाधेध्वन्यसाध्वसैः । बाध्यमानोरिभिर्लोकं सोत्याक्षीत्तु पदे पदे ॥१४१०॥ 1410
हतस्य स्वामिनः स्वामिसूनोश्च व्यसनस्थितेः । आनृण्याकाङ्क्षिणा तेन तत्र ह्यात्मैव रक्षितः ॥१४११॥
येषां प्राणपरित्यागे निश्चयं बध्नतामपि । न योग्यकालापेक्षास्ति किं तैर्हिंस्रपशूपमैः ॥१४१२॥
हन्तुं तं नष्टमायान्तं रुद्ध्वा पद्मपुरान्तिकम् । अत्रसण्डामराः क्रूराः खडूवीविषयौकसः ॥१४१३॥
खेरीतलालग्रामामादुत्थाय पृथुसैनिकः । व्रजंस्तेनाययौ तत्र प्रसङ्गे श्रीवकः पथा ॥१४१४॥
तमनष्टानुगं सुज्जिरसाविति विशङ्किताः । निपत्य ते विदधिरे हतलुण्ठितसैनिकम् ॥१४१५॥ 1415
मेरुश्च सज्जनश्चाश्ववारौ तत्राहवे हतौ । क्षतो वड्डात्मजो मल्लो दिवसैर्यो व्यपद्यत ॥१४१६॥
उदीपंविहितश्वभ्रवहत्सलिलसंकटम् । उदीपपूरबालाख्यं स्थानं तत्र क्षणेभवत् ॥१४१७॥
युद्ध्वा युद्ध्वा प्रचलतस्तत्र पद्मपुराद्बहिः । रुद्धसैन्यस्य विशिखः श्रीवकस्याविशद्गलम् ॥१४१८॥
प्रहाराद्विवशो नासौ सुज्जिर्ज्ञात्वेति डामरैः । स निर्लुण्ठ्य परित्यक्तः पूर्वमैत्र्यनुरोधतः ॥१४१९॥
लुण्ठितं श्रीवकानीककोशभारमहानतैः । तैः कैश्चिद्यलितैरासीत्सुज्जेर्मार्गोनुपद्रवः ॥१४२०॥ 1420
प्रस्थिते पथिकेकस्माद्यन्त्रेषूत्सादयन्वने । आयुःशेषो मृगेन्द्रस्य विदध्याद्ध्वशोधनम् ॥१४२१॥
निःशब्दसैन्यो निर्यातः सुज्जिः पद्मपुरान्तरे । उदीपश्वभ्रसाविधं संप्राप्तोज्ञायि डामरैः ॥१४२२॥
पदातिकोशांशस्त्रादि मुष्णतः सोनवेक्ष्य तान् । तीर्त्वा श्वभ्रं वाजिगम्यां साश्ववारो भुवं ययौ ॥१४२३॥
ततः परं प्रशान्तारिभयं दूराद्विरोधिनः । भ्रूभङ्गतर्जनीकम्परूक्षालापैरतर्जयत् ॥१४२४॥

---

१३९८. ¹) Emended with C; A ताचून°. १४०३. ¹) Emended, A मेधाचक्रं पुर°. १४१७. ¹) A₂ had written in margin gloss of which only इति भावबा is now legible. १४२०. ¹) Emended; A लुण्ठित: श्री°. १४२३. ¹) A °कोष°.— ) Emended with C; A सोनवीक्ष्य.

1425 संत्रस्तैश्छत्त्रमात्रं तैस्त्यक्तमादाय च द्रुतम् । प्रविश्य नगरं साश्रुर्नृपतेः पार्श्वमाययौ ॥१४२५॥
ज्यायसि भ्रातरीवामं तस्मिन्प्राप्ते जहौ नृपः । दुःखोष्णैरश्रुभिः सार्धं वैरिव्यापातसाध्वसम् ॥१४२६॥
महत्तमोनन्तसूनुरानन्दस्तत्र वासरे । लोचनोड्डारकग्रामे डामरैः प्रचलन्हतः ॥१४२७॥
तत्तन्मङ्गल्यदण्डादिदुःसहायासकारणात् । स विपत्पतितो नाभूत्कस्यापि करुणावहः ॥१४२८॥
भासाभिधः सुज्जिभृत्यो लोकपुण्यात्पलायितः । भ्रान्तोवन्तिपुरेविक्षदवन्तिस्वामिनोङ्गनम् ॥१४२९॥
1430 कम्पनोऽग्राहक[1]: क्षेमानन्दः स च तदन्तरे । अमर्षणैरवेष्टयेतां डामरैर्होलडोद्भवैः ॥१४३०॥
इन्दुराजोपि सेनानीः कुलराजकुलोद्भवः । टिक्कं तद्वेष्टितो ध्यानोड्डारे[1] व्याजादशिश्रियत् ॥१४३१॥
पिञ्छदेवादयोन्येपि बहवः सैन्यनायकाः । अतिष्ठन्क्रमराज्यान्तर्डामरैः कृतवेष्टनाः ॥१४३२॥
पाते वनस्पतेः शावा इव तन्नीडविच्युताः । इत्थं हताः क्षताश्वा[1]सस्तत्र तत्र नृपानुगाः ॥१४३३॥
निष्पादत्रा हिमप्लुष्टचरणा नग्नविग्रहाः । क्षुत्क्षामा बहवोभूवन्मार्गेषु गलितासवः ॥१४३४॥
1435 न व्यलोक्यत मार्गेषु तदा नगरगामिषु । पलालच्छन्नदेहेभ्यो मानुषेभ्यः परः क्वचित् ॥१४३५॥
घासं विलासवासस्त्वं तेपि चित्ररथादयः । निन्युर्यैरचिरेणैव महामात्यैर्भविष्यते ॥१४३६॥
द्वितीयेपि दिने रुद्धसंचाराः पत्त्रिणामपि । तुषारवर्षिणो मेघा न मुहूर्तं व्यरंसिषुः ॥१४३७॥
वनपूर्वाभिधग्रामस्थितस्य कटकाङ्कटान् । भिक्षोर्निक्षिप्य धन्योथ सिंहदेवमशिश्रियत्[1] ॥१४३८॥
निशम्य कृतसत्कारं नृपं तदनुयायिनाम् । सर्वेपि भैक्षवास्तस्थुः सैनिका नगरोन्मुखाः ॥१४३९॥
1440 मन्दप्रतापे दायादे संप्राप्तावसरास्ततः । राज्यश्वतत्र्यो राजानमनुमर्तुं विनिर्ययुः ॥१४४०॥
परापातभयाच्छीतापाताच्च विवशैर्जनैः । न ता नेतुं[1]मशक्यन्त दूरस्थं पितृकाननम् ॥१४४१॥
चक्रिरे स्कन्दभवनोपान्ते देहांश्चितामिषात् । ते सत्वरं ततस्तासामदूरे राजसद्मनः ॥१४४२॥
राज्ञी चम्पोद्भवा देवलेखा तरललेखया । स्वस्रा सहाविशद्वह्निं रूपोल्लेखावधिर्विधेः ॥१४४३॥
गुणोज्ज्वला जज्जला —[1] मृता वल्लापुरोद्भवा । गग्गात्मजा राजलक्ष्मीरपि वह्नौ व्यलीयत ॥१४४४॥
1445 मत्वा हिमव्यपायान्तं राज्यरोधं निजप्रभोः । डामरा नवभूभर्तुर्हिमराजाभिधां व्यधुः ॥१४४५॥
ददर्श सौस्सलं मुण्डमथ भिक्षुरुपागतम् । गाढामर्षाग्निसंदीप्तैर्दृक्पातैर्निर्दहन्निव ॥१४४६॥
कोष्ठेश्वरज्येष्ठपालादयस्तत्सत्क्रियोद्यताः । असहासन्नतां वैराद्व्रजता तेन वारिताः ॥१४४७॥
नगरं हिमवृष्ट्यन्ते स यियासुर्युयुत्सया । ताटस्थ्येनाहिताकूतान्भृत्याञ्ज्ञात्वाब्रवीदिदम्यः ॥१४४८॥
प्रसह्य प्राप्नुयां राज्यमिति पृथ्वीहरे सति । हते तु तस्मिन्दायादेविपन्नः[1] स्यां पतिर्भुवः ॥१४४९॥
1450 इत्यचिन्तयमेतत्तु दैवात्संजातमन्यथा । राज्यस्याशापि विरता हते प्रत्युत यद्विपौ ॥१४५०॥
किं राज्येनाथ वा कृत्यं भोगमात्रोपयोगिना । जिगीषोरुचितं कस्य ममेवान्यस्य सेत्स्यति ॥१४५१॥
मुण्डं न्यपातयद्भूमौ यः पूर्वेषां पुरा मम । सिंहद्वारे मदीयेद्य तन्मुण्डं वर्तते लुठत् ॥१४५२॥
दश मासान्मदाद्यानां सुखच्छेदं व्यधत्त यः । तद्दुःखं स तु मया दशाब्दाननुभावितः ॥१४५३॥

१४३०. [1]) Doubtful emendation; A नोड्रोहकः.—[2]) Emended with C; A °रवेष्टयेत. १४३१. [1]) Emended; A °द्वारं. १४३३. [1]) A क्षताश्वाश्वासंस्तत्र with diplography. १४३८. [1]) Emended; A °शिश्रयत्. १४४१. [1]) Thus $A_1$; corr. by later hand into तामेतु°. १४४४. [1]) One *akshara* wanting; the *lacuna* not indicated in A; C supplements सा. १४४९. [1]) Emended; A विपन्नां; C °दायादे विपन्नः

एवं निर्व्यूढकर्तव्यतया नेष्याम्यवन्ध्यताम् । उपशान्तमनस्तापः सुस्थित्या शेषमायुषः ॥१४५४॥
इत्याद्युक्त्वा गतष्टिक्काभ्यर्णं तं प्रणतं व्यधात् । प्रीत्या स हेमघटिकश्वेतच्छत्रादिभाजनम् ॥१४५५॥
तद्विस्रम्भेण राज्याशापिशाच्योदितया पुनः । गृहीतोभ्येत्य शीतार्तस्तस्थावन्तर्विचिन्तयन् ॥१४५६॥
अत्यन्तानुचितं चान्यद्भ्रवन्त्यैः संविधित्सुभिः । रक्षितं रक्षिणो न्यस्य हतक्ष्माभृत्कलेवरम् ॥१४५७॥
विपक्षाश्रयणेप्यस्मिन्स्वामिनोन्ते किमीदृशी । दशा शरीरस्येत्यन्तः कृतशल्येन चिन्तयन् ॥१४५८॥
दिदृक्षाव्याजतः सज्जकाख्यो नगरशस्त्रभृत् । आयातो वाड्डुकं गोमृन्युद्गैर्जित्वाग्निसाद्व्यधात् ॥१४५९॥तिलकम्[2]॥
स चतुर्नवताद्वर्षादारभ्यासादितच्छलैः । भूतैरधिष्ठितस्तिष्ठन्प्रजासंहारकार्यभूत् ॥१४६०॥
देवताधिष्ठिताविष्टदेहिवाक्यादिति श्रुतिः । भाविनद्वधसंवादजनितप्रत्ययोदयी ॥१४६१॥
तदीयानन्यथात्वेन छेत्ता भ्रमयिता च यः । तन्मुण्डस्यास्य स पुमांल्लब्धः सुमो मृतस्तथा ॥१४६२॥तिलकम्॥
भिक्षुः कापुरुषाचारहतौचित्यो व्यसर्जयत् । प्राचण्ड्यख्यातये मुण्डमथ राजपुरीं रिपोः ॥१४६३॥
उत्पलात्मजया तत्र देव्या सौभाग्यलेखया । नेतृन्पितृव्यमुण्डस्य जिघांसन्त्या निजानुगैः ॥१४६४॥
राजपुर्यामाकुलत्वं नीतायामाससाद तत् । तद्भर्तुः सोमपालस्य दूरस्थस्यान्तिकं चिरात् ॥१४६५॥युग्मम्॥
आदीनस्य मधुक्षैव्यमाम्यधर्मादिकर्मसु । तिरश्च इव शोच्यस्य नेयबुद्धेः खशप्रभोः ॥१४६६॥
सभ्यैरुच्चावचं तत्र कर्तव्यं परिचिन्तितम् । स्वोचितं व्यञ्जितौचित्यानौचित्यं निरवग्रहैः ॥१४६७॥
नागपालस्तु सौभ्रात्रं लब्ध्वा भ्रातुः स्थितोन्तिके । सेहे मुण्डावशेषस्य नोपकर्तुर्विमाननाम् ॥१४६८॥
सुदीर्घदर्शिनोप्यन्ते कश्मीरेभ्यः पराभवम् । विशङ्क्योचुः सर्वथेदं सत्कार्यं वः शिरः प्रभोः ॥१४६९॥
क्रियते येन नियतेरन्यथात्वं सनाथताम् । विनिहस्य हरेर्दृष्टाः कुर्वन्तो यत्र जम्बुकाः ॥१४७०॥
तद्धोपालपुरे कालागुरुचन्दनदारुभिः । काष्ठैर्निष्ठां शिरो निन्ये वीतिहोत्रेथ शत्रुभिः ॥१४७१॥
यथा प्राप्तिभ्रंशा धरणिपतिभावस्य विविधा यथा ह्रासोल्लासा अपि समरसीमासु बहुशः ।
यथा तत्तद्दीर्घव्यसनविनिपातानुभवनं तथा दृष्टस्तस्य प्रमयसमयोप्यद्भुततरः ॥१४७२॥
कस्यापरस्य तस्येव लेभिरे वह्निसत्क्रियाम् । एकत्रेतरगात्राणि मुण्डमन्यत्र मण्डले ॥१४७३॥
टिक्कादयोथ नगरं यान्तोवन्तिपुराध्वना । तत्र हन्तुं व्यलम्बन्त भासादीन्पूर्ववेष्टितान् ॥१४७४॥
युद्धाग्न्युद्दीपनप्रायप्रहारच्छेदकारिभिः । न ते जेतुमशक्यन्त तैः प्रयत्नपरैरपि ॥१४७५॥
स्थितैर्महाश्मप्राकारगुप्ते सुरगृहाङ्गने । तैर्हन्यमानास्ते स्थातुं गन्तुं वा नाभवन्क्षमाः ॥१४७६॥
एवं प्राप्तविलम्बेषु तेषु लब्धान्तरः सुधीः । स्वीचकार प्रदानेन खड्गवीडामरान्नृपः ॥१४७७॥
गृहीतनीविना तेषां सुज्जिः प्रायोजि सत्वरम् । तेन भासादिमोक्षाय पञ्चचन्द्रादिभिः समम् ॥१४७८॥
प्रापावन्तिपुरं यावन्न स तावत्तदग्रगान् । कय्यात्मजादीनालोक्य भङ्गं टिक्कादयो ययुः ॥१४७९॥
देवागाराद्विनिर्याता भासाद्यास्ते च विद्विषाम् । भग्नानामनुगान्हत्वा सुज्जेरन्तिकमाययुः ॥१४८०॥

---

१४५६. [1]) Emended with C; A सीतार्त°. १४५९. [1]) Thus A; cf. वाड्डुवं viii. 1846. — [2]) $A_1$ writes here ३ instead of तिलकम्. १४६२. [1]) $A_1$ writes here ३ instead of तिलकम्. १४६५. [1]) $A_1$ writes here २ instead of युग्मम्. १४६६. [1]) Emended; A आदीनास्य. १४७०. [1]) Emended with C; A बे. १४७३ [1]) Emended with C; A एकत्रेतगा°.

लब्धप्रतापे नगरं प्रविष्टे कम्पनापतौ । आययाविन्दुराजोपि टिक्कं संत्यज्य सानुगः ॥१४८१॥
चक्रे चित्ररथश्रीत्रभासादीनपि भूपतिः । पादाग्रद्वारखेर्यादिकर्मस्थानाधिकारिणः ॥१४८२॥
यथापूर्वमधीकारानजहत्सुज्जिरप्यभूत् । प्रतीहारमुखप्रेक्षी का कथेतरमन्त्रिणाम् ॥१४८३॥
प्रतीहारोपि निःसीमडामरग्रामसंमतः । तद्भेदचक्रिकां कुर्वन्नगाद्राज्ञः प्रतीक्ष्यताम् ॥१४८४॥
1485 स नासीदस्य दद्वचूहे कोपि तत्प्रेरणेन यः । नाशिश्रियन्नृपं नो वा बभूवाभ्यर्णोन्मुखः ॥१४८५॥
निह्नुतेशित्वसदृशस्फूर्तिर्धूर्तो महीपतिः । आहारमप्यनासाद्य तन्मतं न न्यषेवत ॥१४८६॥
इत्थं नगरमात्रान्तर्लब्धपादप्रसारिकः । सोवार्तिष्ट समासन्नफलं कन्दलयन्नयम् ॥१४८७॥
संघट्याखिलान्भिक्षुर्डामरान्विजयेश्वरे । अथाध्यष्ठाद्दधिष्ठानं जिघृक्षुः शिशिरात्यये ॥१४८८॥
अदृष्टपूर्वं स्वचमूचक्रैक्यं वीक्ष्य डामराः । भिक्षोर्हस्तगतं राज्यं मत्वाशङ्किषताथ ते ॥१४८९॥
1490 एकैकस्यैषं धीशौर्यमित्रामित्रादि दृष्टवान् । नोत्तिष्ठेत्प्राप्तराज्यः किमास्कन्देषु गृहान्तरात् ॥१४९०॥
इति संमन्त्र्य ते राज्यं सोमपालाय दित्सवः । दूताभिगूढं प्राहिण्वन्सोपि दूतं व्यसर्जयत् ॥१४९१॥
आकाराचारवैकल्यैः पशुतुल्यस्य तस्य तैः । राज्यभोगा अभङ्गा नो भविष्यन्तीत्यचिन्त्यत ॥१४९२॥
भोगलोभोज्झितौचित्यदस्युसंघचिकीर्षितम् । देशेत्र पापात्पापीयो दैवान्न समपादि तत् ॥१४९३॥
दास्येप्ययोग्यो यो राज्ये स,इत्यास्तां नृपान्यतः । शक्येत पातुं देशोयं किमीषदपि तादृशा ॥१४९४॥
शालीन्पलालपुरुषोवति यः कृशानुदग्धाननश्टकपेटकभीतिदानैः ।
1495 त्रातुं स काननतरून्विहितो त्रिदध्यात्किं तत्र भञ्जनकृतां वनकुञ्जराणाम् ॥१४९५॥
भिक्षोर्नैदिष्ठतां दिष्टवृद्धिव्याजात्ततो.भजन् । तद्दूतो डामरान्गूढं नीविदानोद्यतान्व्यधात् ॥१४९६॥
वैशाखेथ कृतारम्भस्तदा संभावितत्वरः । निर्गत्य नगरात्सुज्जिर्गम्भीरातीरमाययौ ॥१४९७॥
तस्याभियोगः श्लाघ्योभूद्योद्धुं यत्समवायिनः । एकाकी तावतो वीरानूरीकृत्य स निर्ययौ ॥१४९८॥
अन्तःपाते साहसानां नाद्भुतं तद्विधेर्वशात् । जीयते लक्षमेकेन लक्षेणैकोथ वा युधि ॥१४९९॥
1500 पारं तरीतुं निःसेतोः सरितोपारयन्नसौ । पारे परस्मिन्नहितानपश्यच्छरवर्षिणः ॥१५००॥
द्वित्रा निशाः स ते चासंस्तस्याः सिन्धोस्तटद्वये । रुद्धाः संनाहिनोन्योन्यरन्ध्रावेक्षणदीक्षिताः ॥१५०१॥
अथावन्तिपुरान्नौभिरानीताभिरबन्धयत् । सेतुं साभ्रोतरत्सुज्जिरारुह्य तरणीं स्वयम् ॥१५०२॥
तरन्तमेव तं दृष्ट्वा योधैः कतिपयैः समम् । द्विषच्चमूर्मरुल्लोला द्रुमालीवाभवच्चला ॥१५०३॥
दृष्टं मुहूर्तादेतावदारूढः स च यत्तटम् । बद्धश्च सेतुस्तीर्णाश्च योधा भग्नाश्च विद्विषः ॥१५०४॥
1505 न खड्गी न हयारोहो नापि शूली न चापभृत् । व्यावृत्य प्रेक्षितुं कश्चिदशकद्विद्रुताद्बलात् ॥१५०५॥
निबद्धवध्रशैथिल्याल्लोलपल्ययने हये । कोष्ठेश्वरस्याश्वारा व्यलम्बन्तान्तरे क्षणम् ॥१५०६॥
निर्यन्त्र्य तेपि पर्याणं सुज्जौ पश्चात्प्रधाविते । वात्योद्धूतं रजश्चक्रमिव क्षिप्रं तिरोदधुः ॥१५०७॥
हतलुण्ठितविध्वस्तध्वजिनीका विरोधिनः । ध्यानोड्डारादिषु ग्रामेष्वमिलन्खण्डशो गताः ॥१५०८॥

१४८५. [1]) Emended with C; A नाशिश्रयन्नृपं. १४८८. [1]) Emended; A भिभून्डा°.—[2]) Emended; A अथाधिष्ठद°; C अथातिष्ठद°. १४९०. [1]) Conjectural reading; A एकैकस्योपधीशौर्य°. १४९३. [1]) Emended; पापीके. १५०१. [1]) Emended with C; A °वीक्षण°. १५०५. [1]) Emended with C; A प्रेक्षितुः. १५०७. [1]) Emended; A निर्यन्त्य; C निर्यत्य.

विजयेशाग्रगं तीर्त्वा वितस्तासेतुमग्रगः[1] । भासोपि दस्यून्विदधे पलायनपरायणान् ॥१५०९॥
उषित्वा विजयक्षेत्रे तदान्येद्युरुपागते । कम्पनेशे[1] ययुस्त्यक्त्वा ऽयानोद्धारं विरोधिनः ॥१५१०॥ 1510
तत्र स्थित्वा दिनैः कैश्चित्स देवसरसोन्मुखः । शिश्रिये भेदनिर्यातैरेत्य टिक्कस्य गोत्रिभिः ॥१५११॥
जयराजयशोराजौ तन्मुख्यौ भोजकात्मजौ । प्रविश्य देवसरसं ऽथधाङ्किकोपवेशने ॥१५१२॥
ययुर्विनष्टसंघातास्तस्मिन्पश्चात्प्रधाविते । भिक्ष्वादयः शूरपुरं स्वोर्वीं कोष्ठेश्वरादयः ॥१५१३॥
गर्हां महाभये सोमपालदूतः पलायितः । दास्याः सुतेन प्रहितः कुत्रास्मीति प्रभोर्व्यधात् ॥१५१४॥
स हि तादृङ्महारम्भक्षोभसाध्योन्नतीच्छुताम् । तस्य सिंहीस्पृहाक्रान्तगोमायुवदमन्यत ॥१५१५॥ 1515
प्रमादात्स्वामिनो राज्यं चिरं नष्टं मितैर्दिनैः । सुज्जिः प्रसाध्य प्रददावेवं स स्वामिसूनवे ॥१५१६॥
शमालादीनपि व्यूढान्दानोपायेन डामरान् । पौरांश्च भिक्ष्वाश्रयिणो राजाभ्येतुं प्रचक्रमे ॥१५१७॥
राज्ञः परीक्ष्य सामर्थ्यमथ कुर्मो यथोचितम् । इति सर्वाभिसारेण तं संमन्त्र्य रणं दधुः ॥१५१८॥
रजोजवनिकालक्ष्य[1]भटीघनटताण्डवः । दामोदरेभूत्संग्रामः स वीरग्रामघस्मरः ॥१५१९॥
कोष्ठेश्वरवशं यातं रक्षता पितरं क्षतम् । लब्धाः सहजपालेन श्लाघाः प्रकृतिभिः समम् ॥१५२०॥ 1520
श्रमस्तत्राविशेषोभूद्राज्ञो भिक्षाचरस्य च । भिक्षुस्त्वहन्यसंवेद्यं विवेदात्मपराजयम् ॥१५२१॥
ततः प्रभृति यः प्रातः स न सायमदृश्यत । योद्य वा न परेद्युः स सैनिको भैक्षवे बले ॥१५२२॥
एवं त्यक्त्वा परान्पौरडामरेषु नृपान्तिकम् । प्रयात्सु लाभसत्कारानुचितान्प्राप्नुवत्सु च ॥१५२३॥
काप्यहंपूर्विकोत्तस्थौ मनुजेश्वरकोष्ठयोः । प्रयातुं पार्थिवाभ्यर्णं लाभसौख्याभिलाषिणोः ॥१५२४॥
ज्ञात्वाथ तत्काकरुहाद्गृहीतस्वपरिच्छदः । देशान्तरोन्मुखो भिक्षुराषाढे मास्यवाचलत् ॥१५२५॥ 1525
अनुयाद्भिः स दाक्षिण्यशेषाद्विहितसान्त्वनैः । तदावैर्डामरैः क्रुध्यन्न निरोद्धुमपार्यत ॥१५२६॥
अकरोत्स्वैरिणीसूनुतया शीलबहिष्कृतः । अतिरूपेषु दारेषु तस्य कोष्ठेश्वरः स्पृहाम् ॥१५२७॥
सटां हरेः फणारत्नमहेर्ज्वालां हविर्भुजः । बालां च तस्य संस्प्रष्टुं[1] कोप्रशान्तस्य शक्नुयात् ॥१५२८॥
समं सौस्सलिना बद्धसंधिराभयकाङ्क्षिणः । सोमपालः स्वविषये नादात्तस्य प्रतिश्रयम् ॥१५२९॥
उद्वेजितः प्राणहरैः प्रयत्नैस्तस्य सर्वतः । तद्देशं[1]दुर्गममहीसीमान्तं सुल्हरीं ययौ ॥१५३०॥ 1530
त्रिगर्तेषु दया शीलं चम्पायां मद्रमण्डले । त्यागो दार्वाभिसारेषु मैत्री नामर्त्यधर्मिणाम् ॥१५३१॥
पीडयेत्त्यक्तभीर्भूभृद्दूरस्थे त्वयि डामरान् । त्वामेवाभ्यर्थ्य राजानं ततः कुर्युः क्रमेण ते ॥१५३२॥
क्ष्मां तद्भुजामेर्थयितुं सांप्रतं नरवर्मणः । मन्त्रिभिर्युक्तमित्युक्तमपि मन्त्रं न चाग्रहीत् ॥१५३३॥
त्रसाल्पपरिवारोस्मद्गृह इत्यथ गृह्णतः । श्वशुरप्रार्थनां तस्य भृत्याः पार्श्वादवाचलन् ॥१५३४॥
प्रावर्तताथ नगरे विशद्भिर्विभवोज्ज्वलैः । सुलभसुलभे काले वरयात्रेव डामरैः ॥१५३५॥ 1535
वीक्ष्याश्वच्छत्रतुरगैरेकैकं पार्थिवाधिकम् । सुस्सलक्ष्मापतेर्धैर्ये नैष्ठुर्यं तुष्टुवुर्जनाः ॥१५३६॥
औदार्याकारतारुण्यवेषसौन्दर्यमन्दिरम् । कोष्ठेश्वरोधिकं स्त्रीणां प्रययौ प्रेक्षणीयताम् ॥१५३७॥

---

१५०९. [1]) Thus corr. by $A_1$ from °मग्रतः. १५१०. [1]) Emended; A कम्पनेशं. १५१९. [1]) Emended with C; A °जवनिकां लक्ष्य°. १५२८. [1]) Emended with C; A संप्रष्टुं; cf. viii. 1193. १५३०. [1]) Emended with C; A तद्देश°.

प्रशान्तविप्लवे देशे यथावुत्सववाद्यताम् । विशङ्कूरिलवन्यौघतूर्यघोषो[1] दिवानिशम् ॥१५३८॥

क्षीराद्या लक्ष्मकेणापि सर्वे मडवराज्यतः । आनीताः पार्थिवाभ्यर्णे सैन्यार्णवभयंकराः ॥१५३९॥

1540 अपि भूपालवाल्लभ्यादभूद्राजोपजीविनाम् । प्रतीहारगृहद्वारप्रवेशो बहुमानकृत् ॥१५४०॥

लवन्यलुण्ठितग्रामतया दुर्भिक्षदुःसहः । व्ययोत्तरङ्गः कालोभूत्स राज्ञो धनदश्रियः ॥१५४१॥

डामरेभ्यो नृपः पारात्[1]संगृह्णन्कृतवेतनः । निनायाभ्यन्तरं वृद्धिं बाह्यं चापत्त्रयं जनम् ॥१५४२॥

तिष्यत्रैश्यार्घदेवा[1]द्या ज्ञातयो जनकद्रुहाम् । राजद्रोहोचितां राज्ञा विपत्तिमनुभाविताः ॥१५४३॥

मासैश्चतुर्भिः स पितृप्रमयाहादनन्तरम् । अनन्यशासनं राष्ट्रं स्वमेव समपादयत् ॥१५४४॥

1545 नि[1]र्धाम नगरं पौराः सर्वसामर्थ्यवर्जिताः । अनन्ते राष्ट्रमाकीर्णे डामरैः पार्थिवोपमैः ॥१५४५॥

बद्धमूलो नातिदूरे सर्वभारसहो रिपुः । सबाह्याभ्यन्तरा मन्त्रिसामन्ता वैरिसंश्रिताः ॥१५४६॥

मन्त्रोपदेशो[1] वृद्धस्य नैकस्यापि नृपास्पदे । अधर्मबहलाः सर्वे भृत्या द्रोहैकवृत्तयः ॥१५४७॥

राज्यारम्भे बभूवेयं या सामग्र्यस्य भूपतेः । सा स्मर्तव्यान्तराज्ज्ञातुं प्रत्युदन्तं विवेक्तृभिः ॥१५४८॥

प्राप्तप्रसङ्गात्तदिदं गुणग्रामोपवर्णनम् । वक्ष्यमाणं सुबहुशोप्यत्र लेशात्प्रदर्श्यते ॥१५४९॥

1550 पूर्वापरानुसंधानबन्ध्यैर्दृ[1]ष्टान्तवत्कथाः । नाबुद्धातिगभीराणां शक्या रसयितुं गुणाः ॥१५५०॥

प्रत्यक्षस्य गुणान्प्राज्ञो विचिन्वन्तो यथास्थितान् । अनीर्ष्यस्य भविष्यामो विवेकस्यानृणा वयम् ॥१५५१॥

स्थितस्य तत्त्वविज्ञाने नान्यस्य हि पटुर्जनः । अमानुषानुभावस्य राज्ञः किं पुनरीदृशः ॥१५५२॥

हितानां दाराणां सदृशसुखदुःखस्य सुहृदः कवेः सोल्लेखस्य प्रियसकललोकस्य नृपतेः ।

स्थितानां कोप्यत्र व्यवहितविवेकः स्वकुकृतैरसामान्यं ज्ञातुं सुभगमनुभावं न कुशलः ॥१५५३॥

भवेत्प्राप्तप्रसरणा परिणामेथ वा मतिः । कथं सर्वस्याद्भुतायां निष्ठायां गुणदोषयोः ॥१५५४॥

1555 सन्त्येवास्यापि विषमाः स्वभावा दोषतां जनः । येषां विपाकभव्यत्वमजानन्गणयत्ययम् ॥१५५५॥

विकासः केषांचिन्नयनविषमैर्विद्युदुदयैः परेषामुद्भूतिः श्रवणकटुभिर्दीर्घरसितैः ।

न चेष्टा काप्यन्योपकृतिपरिहीना जलमुचो जडो वर्षादन्यं गणयति गुणं नास्य तु जनः ॥१५५६॥

गुणांल्लोकोत्तराञ्शृण्वन्नस्यानुभवगोचरान् । भविता पूर्वभूपालकृत्ये सप्रत्ययो जनः ॥१५५७॥

अनुच्चलन्नपि स्थानाद्भूभं[1]ङ्गेन चकार सः । विलोलांल्लोमकम्पेन दिङ्नाग इव भूधरान् ॥१५५८॥

विरुद्धग्राहिनीवृन्दा गूढं यद्भयसंभवम् । वहन्ति तापं भूपाला और्वाग्निमिव सिन्धवः ॥१५५९॥

1560 भूमिभृद्भास्वतस्तस्य तेजसाप्यायितो गतः । पूर्वराजयशश्चन्द्रो भुवनेष्वप्रकाशताम् ॥१५६०॥

यो यस्तं पश्यति स्वात्मसंमुखं स स सर्वतः । जानात्यवक्रोल्लिखितं देवबिम्बमिवेश्वरम् ॥१५६१॥

स्थिरप्रसादो दत्ते यत्तदादत्ते न स क्वचित् । भयं पुनः प्रणमतां दत्तं हरति विद्विषाम् ॥१५६२॥

कृष्टासेः प्रतिबिम्बं स्वं हित्वा नान्योस्य संमुखः । नापरः प्रतिशब्दाच्च गर्जतः प्रतिगर्जति ॥१५६३॥

तस्य नातिशितं कोपे प्रसादे निशितं पुनः । धत्ते तीक्ष्णैकधारस्य तरवारेस्तुलां वचः ॥१५६४॥

१५३८. [1]) Doubtful emendation; A °घोषा; G °विप्लवी देशो and °घोषादिवा°. १५४२. [1]) Thus A; C पौरान्सं° १५४३. [1]) Cf. वृत्तौ टिक्कस्यार्घदेवतिष्यवैश्या° (A) viii. 1305. १५४५. [1]) Thus $A_1$; R C निवासन°, as apparently corr. by later hand in A. १५४७. [1]) Conjectural emendation; A मन्त्रोपदेशावृद्धस्य. १५५०. [1]) दृष्टान्त supplied by $A_3$ in space left by $A_1$. १५५८. [1]) Emended with C; A °भ्रूभङ्गेन.

तस्याकुजन्मनो नित्याम्लानलक्ष्मीविकासिनः । प्रभवन्त्याश्रिताः कल्पशाखिनः पल्लवा इव ॥१५६५॥ 1565

राज्ञि गाम्भीर्यदुर्लक्ष्यमाहात्म्यप्रभविष्णुताम् । विवेद मन्त्रिणां लोकः सिषेवे तांश्च सर्वतः ॥१५६६॥

प्रहस्तस्तु प्रतीहारो न विषेहेऽन्यमन्त्रिणाम् । पार्श्वद्रुमाणामेषाढ्यौषधिस्तम्भ इवोन्नतिम् ॥१५६७॥

तस्योत्पाटयतः सर्वांस्तृणानीवावहेलया । स्फूर्जञ्जनकसिंहोऽभूदशक्योन्मूलनः परम् ॥१५६८॥

आ बाल्यात्संस्तुतो राज्ञः स कृत्स्नव्यवहारवित् । अधृष्यस्तरुणीभूततनयो ह्यास्त सर्वतः ॥१५६९॥

अवैधं यौनसंबन्धादिच्छतस्तत्सुतो मदात् । छुड्डाभिधस्तस्य ततः कृतावशोऽतनोत्त्रपाम् ॥१५७०॥ 1570

रन्ध्रान्वेषी स तद्रोषादुपजापैः क्षणे क्षणे । सस्तूनी जनके यत्नान्नृपं[1] द्वेषमजिग्रहत् ॥१५७१॥

राज्ञस्तुल्यवयःस्थौ हि जननीगाढसंस्तवात् । राज्यकाले हि सोत्सेकावास्तां तदवकाशदौ ॥१५७२॥

तुरंगयोग्योपस्कारस्नानाहारादि राजवत् । अकालज्ञावकुरुतां राजधान्यन्तरेव तौ ॥१५७३॥

सह स्ववृद्धैः समशीर्षिका प्रभोर्न युज्यते प्राप्तसमुन्नतेः क्वचित् ।

श्रितोन्नतेर्दर्दुरवृन्दलङ्घनं सरोजषण्डस्य महाविडम्बना ॥१५७४॥

तद्भित्तिलाभसंरूढपैशुनालेख्यकल्पनाः । तद्वर्गेऽप्यखिले चक्रुस्तद्द्विषः कलुषं नृपम् ॥१५७५॥ 1575

अथ राजा विजयिनं सत्कर्तुं कम्पनापतिम् । कृतज्ञः श्रावणे मासि जगाम विजयेश्वरम् ॥१५७६॥

अत्रान्तरे पिञ्छदेवादागच्छन्गिरिगह्वरे । प्राप शूरपुरद्रङ्गाधीश्वरादुत्पलो वधम् ॥१५७७॥

पुष्याणनाडादुत्पिञ्छकृतये पुनरागतः । द्रङ्गाधिपेन गुटिकान्वेषिणा स ह्यवाप्यत ॥१५७८॥

क्षितौ निपतितः पार्श्वप्राप्तमेकं द्विषद्भटम् । मुमूर्षुर्विशिखाविद्धजानुमर्मापि सोऽवधीत् ॥१५७९॥

प्रत्यावृत्तस्य सत्कृत्य कम्पनेशं महीपतेः । द्वार्यवन्तिपुरस्थस्य[1] द्रङ्गेशोऽरिशिरो व्यधात् ॥१५८०॥ 1580

स दृढग्राहिकामुष्टिरसुहृन्मुण्डमुद्गरः । चक्रे तस्य वृद्धामर्षशोकशङ्कुविपाटनम्[1] ॥१५८१॥

आद्यायामेव यात्रायां जातारातिक्षयो जनैः । स निःशेषयिताशेषकण्टकानामगण्यत ॥१५८२॥

तस्मिन्प्रविष्टे नगरं विद्रुताः केऽपि सागसः । प्रापुर्जनकसिंहाद्याः केऽपि कारागृहस्थितिम् ॥१५८३॥

कैश्चित्पलायितैः[1] शङ्कां माहिताः पृथिवीपतेः । ततः कोष्ठेश्वरमुखाः प्रातिलोम्यं प्रपेदिरे ॥१५८४॥

शालां निर्गतः श्रीमान्कार्तिकेऽथ कृती नृपः । तत्र तत्रासुहृद्ग्रामं संग्रामेऽप्रममबाधत ॥१५८५॥ 1585

यत्र सुस्सलभूपाद्याः प्रापुर्भग्नप्रतापताम् । तं हाडिग्राममदहत्सुज्जिरूर्जितविक्रमः ॥१५८६॥

महीभुजा पीड्यमानैराहूतः कोष्ठकादिभिः । अथ भिक्षाचरो राज्यगृध्नुर्भूयोऽप्युपाययौ ॥१५८७॥

एकेनाह्ना योजनानि प्रोल्लङ्घ्य दश पञ्च च । शिलिकाकोट्टनामानं गिरिग्राममवाप सः ॥१५८८॥

क्षुत्पिपासाक्रमारातिभीतिमार्गश्रमोद्भवम् । क्लेशं नाजीगणन्मानी धावितः स जिगीषया ॥१५८९॥

कार्यमायाति वैमुख्यं जिगीषोर्विधुरे विधौ । प्रस्थितस्य पुरोवाते रयस्येव ध्वजांशुकम् ॥१५९०॥ 1590

आरम्भमात्रमपि कस्यचिदेव सिद्ध्यै कश्चित्प्रयत्नपरमोऽप्यफलप्रयासः ।

मन्थाद्रिणामृतमवाप्युदधेर्मुहूर्तात्सक्तिं चिराद्विदधता न हिमाद्रिजेन ॥१५९१॥

---

१५७१. [1]) Emended; A नृपो. १५८०. [1]) Emended with C; A °पुरस्त्यस्य. १५८१. [1]) Emended; A विपाटनम. १५८४. [1]) Emended with C; A कैश्चित्प°.

भ्रष्टा सरित्स्वयसतेर्जलधिप्रवेशे वेलोर्मिवेल्लनवशेन विवर्तमाना ।
मिथ्यैव यच्छति धियं पुनरुन्नतेति नोत्थानमस्ति तु विधिव्यपरोपितानाम् ॥१५९२॥

तस्य तावन्महायत्नकठोरस्योदयक्षणे । सिद्धेर्विबन्धो विधिना विधुरेण व्यधीयत ॥१५९३॥

आयातं तमबुद्ध्वा तु[1] तस्मिन्नेव क्षणेऽभयत् । पृथ्वीहरानुजः प्राप्तभङ्गः कृत्वाञ्जलिर्नृपम् ॥१५९४॥

1595 कोष्ठेश्वरः स चावेत्य संप्राप्तं तमतिष्ठताम् । कृत्याक्षमौ ततः सर्पाविव मन्त्रनियन्त्रितौ ॥१५९५॥

ताभ्यां स्थानेश सोन्यस्मिंस्त्याजितोऽध्वपरिभ्रमम् । कार्कोटद्रङ्गमार्गेण निर्गतः सुल्हरीं ययौ ॥१५९६॥

आसीच्च तत्र प्रोच्चण्डदर्पकण्डूलदोर्द्रुमः । ऊष्मायमाणः कश्मीराक्रान्तिसंततचिन्तया ॥१५९७॥

उदीपसलिलस्येव तस्य रन्ध्रगवेषिणः । पुरं प्रविष्टो राजापि प्रतीकारमचिन्तयत् ॥१५९८॥

अद्वितीयस्त्वमात्येषु प्रतीहारो मदोन्नताम् । सुज्जेरसहमानोऽभूच्छलान्वेषणतत्परः ॥१५९९॥

1600 आययावथ विस्रम्भावष्टम्भं वल्गतः प्रभोः । धन्यात्मजः पूतमूर्तिर्जाह्नवीजलमज्जनात् ॥१६००॥

तदाद्याः संस्तुता राज्ञश्चिरसंभाविताস্ततः । अनाप्नुवन्तोऽधीकारान्पर्यतप्यन्त चिन्तया ॥१६०१॥

कुर्वाणे कार्यतस्तस्मिन्भरं पित्र्येषु मन्त्रिषु । कालप्रतीक्षाक्षमतामूहुस्ते गहनाशयाः[1] ॥१६०२॥

प्रतीहारस्तु दुर्लक्ष्यसुज्जिनिर्लोडनोद्यतः । अप्रियानपि तान्प्रीत्या जयाहोमोपयोगिनः ॥१६०३॥

व्यतीतेष्वथ मासेषु केषुचिद्दैवयोगतः । अकस्मादभवद्भूभृत्स्फीतलूतामयातुरः ॥१६०४॥

1605 विस्फोटशोफातीसारवह्निमान्द्यायुपद्रवैः । संदिग्धाभ्युदये तस्मिन्देशः पर्याकुलोऽभवत् ॥१६०५॥

इत्थं स्थितः कुलस्यैक[1]भर्तुः स्वामी बली रिपुः । तत्पक्षा डामरा राष्ट्रं दुष्टमेव व्यचिन्तयन् ॥१६०६॥

आयत्यां च तदात्वे च हितकृत्यं विचारयन् । राज्ञः श्रीगुणलेखाया जातमेकसुतं शिशुम् ॥१६०७॥

पञ्चाब्ददेश्यं पर्मोण्डि सुज्जिर्भूमिपतिं तदा । चिकीर्षुर्मन्त्रयामास मातुलेनास्य गार्गिणा[1] ॥१६०८॥

इत्थं भूतस्य दुधुक्षुः ससूनुः सुज्जिरद्य ते । पञ्चचन्द्रादिभिः सार्धं युक्त्या मन्त्रयतेनिशम् ॥१६०९॥

1610 लब्धरन्ध्रः प्रतीहारो धन्याद्याश्च तदीरिताः । इत्यवोचंस्ततो भूपं स तथेत्यमहीच्च तत् ॥१६१०॥

पूर्वप्रजासृजं इवाद्भुतवस्तुतत्त्व[2]व्यावर्णनेन कुतुकं जनयन्ति तज्ज्ञाः ।
बाला इवाल्पमतिहार्यधियश्च सन्ति प्रायो नृपा नियमभून्यमनोनुभावा[1] ॥१६११॥

शौचस्थाने कृतवसतिभिः स्त्रीव्यवायालये वा निःशस्त्रो यच्छलनकुशलैर्मानसं संप्रविश्य ।
नीतो भूतैरिव विवशतां निर्भरं गर्भचेटैर्भद्रं भूपात्कथमिव ततः स्यादवष्टब्धचेष्टात् ॥१६१२॥

निर्हेतु प्रहसन्विटः प्रविशति क्षोणीपतेरन्तिकं प्रीत्युत्फुल्लदृगेष किं किमिति तं पृच्छत्यनच्छाशयम् ।
ब्रूते किंचिदसौ कथानथ कथन्सवैकथं मानिनां मानप्राणगुणेषु यत्सरभसं दम्भोलिपातायते ॥१६१३॥

सविभ्रमगतागतः किमपि भाषमाणः श्रुतौ प्रभोर्वलितलोचनं जगदवज्ञयालोकयन् ।
निजस्य मुखविक्रियाप्रणयताडनाद्यैर्विदन्ननुग्रहमिवाहितं नृपतिवल्लभो दुःसहः ॥१६१४॥

1615 अपि जातु स दृश्येत निःसंक्षोभमतिर्नृपः । यो यन्त्रपुत्रक इव व्यक्तं धूर्तैर्न नर्त्यते ॥१६१५॥

---

१५९४. [1]) Here one *akshara* is wanting in A; तु supplemented with C. १६०२. [1]) Emended; A °क्षमतां मुहुस्ते. १६०६. [1]) Thus corr. by $A_1$ from कुलेस्यै°. १६०८. [1]) Emended; A गर्गिणा. १६११. [1]) Emended; A °भाजा.— [2]) Emended with C; A °तत्त्वं व्या°.

यतो भृत्यान्तराज्ञानाज्जातः सर्वस्वसंक्षयः । तत्प्रजादुष्कृते राज्ञां हा धिङ्नाद्यापि शाम्यति ॥१६१६॥
सुज्जिरारोग्यमन्वेष्टुमागच्छन्पूर्ववत्प्रभोः । विन्यस्तरक्षिणः पश्यन्नविश्वासमखिद्यत ॥१६१७॥
दाक्षिण्यं वामतां यातमाशये प्रतिबिम्बितम् । दर्पणस्येव राज्ञः स विभाव्याभूत्पराङ्मुखः ॥१६१८॥
तस्मिन्राजगृहे खेदान्मन्दीकृतगतागते । नृपतेस्तद्रतां प्रीतिं निःशेषां जहिरे खला[1]: ॥१६१९॥
भृत्यः सुज्जेश्चित्ररथोप्यास्थानद्विजभूः शठः । प्रातिलोम्यावहैर्भर्तुर्मन्त्रैरासीच्छ्रियोन्तकृत् ॥१६२०॥ 1620
नीरोगे राज्ञि दृष्टः स दिष्टवृद्ध्यै नृपास्पदे । बद्धवर्षी विनिर्याय प्रार्थनार्थी गृहान्ययौ ॥१६२१॥
न तं प्रासादयद्राजा विशालबलवाहनः । आक्रम्योसौ[1] कथं नः[2] स्यादित्युपायं त्वचिन्तयत् ॥१६२२॥
त्यज्येत हतकार्योसौ निराशैरनुजीविभिः । मत्वेति तदधीकारानन्येभ्यस्तूर्णमार्पयत् ॥१६२३॥
राजस्थानात्स्वजं धन्य[1]मुदयं कम्पनादपि । अजिमहन्नरपतिः खेरीकार्यं च रिल्हणम् ॥१६२४॥
ह[1]ताधिकारे प्रव्यक्तवैकृते नृपतौ ततः । अल्पावशेषानुचरः सुज्जिरासीद्विशङ्कितः ॥१६२५॥ 1625
विमानितः पुराद्गङ्गायात्रामुद्दिश्य मानवान् । सोथ सुस्सलभूभर्तुरस्थीन्यादाय निर्ययौ ॥१६२६॥
औत्सुक्यात्प्रार्थनाकाङ्क्षी राजधान्यन्तिके न सः । निर्गच्छन्राजपुरुषैर्न राज्ञा वान्वरुध्यत ॥१६२७॥
तन्निर्वासनगर्वस्य स्थापनायानुयात्रिके । प्रतीहारस्तस्य गुप्त्यै कोशादेः स्वात्मजं व्यधात् ॥१६२८॥
निग्रहानुग्रहावस्मदायत्ताविति रक्षिणम् । पुत्रं प्रादाल्लक्ष्मको म[1] इति ध्यायन्स विव्यथे ॥१६२९॥
निवृत्तो लक्ष्मको द्वारात्पर्णोत्सं शनकैर्गतः । अवारोपयदद्रोहो भागिकं लोहराचलात् ॥१६३०॥ 1630
प्रतीहारविसृष्टाय धात्रेयाय महीभुजः । प्रेमाभिधाय तत्कोष्ठाधीकारं च समार्पयत्[1] ॥१६३१॥
उत्खाय लोहरत्यागाच्छङ्काशङ्कुं महीपतेः । स ग्रीष्मविषमं कालं राजपुर्यामलङ्घयत् ॥१६३२॥
अमात्यकन्दुकव्रातपातनोत्पातन[1]क्षमः । आयत्तडामरः प्राप प्रथां कामपि लक्ष्मकः ॥१६३३॥
द्वारेथाकारयत्सुज्जिप्रतिमल्लविधित्सया । कृष्यमाणो राजवंशपौरुषं राजमङ्गलम् ॥१६३४॥
अनन्यदेशजः सुज्जेः[1] शूरो मत्कोश[2]पोषितः । कीर्तिमेष हरे[3]ध्यामितीर्ष्याकलुषो हि सः ॥१६३५॥ 1635
खड्गमात्रसहायः स क्षुण्णः पर्यटितुं पथि । निःस्वखशोपहास्यश्च तेन कार्यार्पणात्कृतः ॥१६३६॥
कर्तुं पदव्यां योग्यानामयोग्यान्प्रभवेन्न कः । तेषां गुणैस्तान्संयोक्तुं न शक्यं कारणैरपि ॥१६३७॥
पदे श्रीखण्डस्यानुचितमुचिते वर्ष्मणि निजे वृषाङ्कः प्रक्षेप्तुं प्रभवति चिताभस्म रभसात् ।
न तत्स्वेच्छायत्तत्रिजगदुदयापायघटनोप्यसौ तद्गन्धेन स्फुटमिह पटुः[1] संघटयितुम् ॥१६३८॥
तस्मिन्सुज्जिप्रतिस्पर्धामप्रौढे वोढुमक्षमे । दूतानसृजदानेतुं सज्जपालं दिगन्तरात् ॥१६३९॥
निर्वीरे मण्डले द्वेष्योप्यवापत्कार्यगौरवात् । कोष्ठेश्वरो नरपतेर्नितरामन्तरङ्गताम् ॥१६४०॥ 1640
प्रीतिदायैस्तोष्यमाणस्तैस्तैस्तुष्टेन भूभुजा । विस्रब्धो नगरे तस्थौ सोपि लूतामयातुरः ॥१६४१॥

---

१६१९. [1]) Emended; A जहिरेखिला:. १६२२. [1]) Emended, A आक्रम्यासौ.—[2]) Thus corr. in A from न. १६२४. [1]) Emended; A धान्य°. १६२५. [1]) Emended; A हिता°. १६२९. [1]) Conjectural reading; A °कोष; R C °कोथ. १६३१. [1]) Emended; A समर्पयत्. १६३३. [1]) Thus $A_1$; $A_2$ °पातनोत्थापनक्षमः. १६३५. [1]) Thus $A_1$; $A_3$ सुज्जि:.—[2]) Thus corr. by $A_3$ from $A_1$ मत्कोश°.—[3]) Thus corr. by $A_3$ from $A_1$ स्पर्धामेष वहे ‒ ‒ विती°. १६३८. [1]) पटु: supplied by $A_3$ in space left by

एवं दमकदम्बैक्यं राज्ञि कुर्वति कार्यतः । चालकैः सोमपालाद्यैः सुज्जिर्निन्येथ वैकृतम् ॥१६४२॥
प्रतिज्ञाय लतामात्रसाध्यं कश्मीरनिर्जयम् । सोमपालाय तद्राज्यं सोङ्गीचक्रेवमानितः ॥१६४३॥
प्रतिभुभाव्य तस्मै च भागिनेयीं स कन्यकाम् । धीमानवान्तरे सामदाने प्रयुयुजे नृपः ॥१६४४॥
1645 द्वौ तावल्पाशयौ राजकन्ययोः स्वीक्रियां तदा । रभसाद्यावकुर्वाणावदत्तामन्तरं द्विषाम् ॥१६४५॥
उपायैर्जयसिंहस्य शकुनैश्च निरीक्षितैः । प्रेरितः सोमपालोथ सुज्जेर्मन्दादरोभवत् ॥१६४६॥
स्वयमेत्य प्रतीहारस्तत्र राजपुरीपतिम् । सीमान्तर्भुवमानिन्ये कन्यकोद्वाहसिद्धये ॥१६४७॥
जातां कल्हनिकाख्यायां महादेव्यां महीपतेः । उपयेमे नृपसुतां सोमोम्बापुत्रिकाभिधाम् ॥१६४८॥
याते तस्मिन्कृतोद्वाहे नागलेखाभिधां सुधीः । तत्स्वस्रेयीं[1] प्रतीहारो भूभुजे प्रत्यपादयत् ॥१६४९॥
1650 इत्थं राष्ट्रद्वये बद्धसंधौ निरवकाशताम् । प्राप्तः प्रतस्थे हेमन्ते सुज्जिस्त्रिपथगोन्मुखः ॥१६५०॥
जालंधरे संघटितो ज्येष्ठपालो निनाय तम् । गाढावमाननिर्नष्टसौष्ठवं भिक्षुपक्षताम् ॥१६५१॥
त्वयि भिक्षाचरे चैकसैन्यनायकतां गते । नोपेन्द्रो वा महेन्द्रो वा समर्थौ प्रत्यवस्थितौ ॥१६५२॥
राज्यप्रदस्य ते यश्च चक्रे राजा विमाननाम् । तस्थुषो यश्च विषये प्रतिकुर्मस्तयोर्द्वयोः ॥१६५३॥
इति संप्रेरितस्तेन देङ्गपालान्तिकस्थितेः । यियासुः सोन्तिकं भिक्षोर्भागिकेन न्यषिध्यत ॥१६५४॥
1655 अनिक्षिप्तवतोस्थीनि स्वामिनो जाह्नवीजले[1] । न युक्तमेतत्ते कृत्यमित्यावेगादशासि[2] च ॥१६५५॥
स्नात्वा पुनश्चामेष्यामि पार्श्वं व इति निश्चयम् । स पीतकोशः कृत्वास्य ययौ प्रस्तुतसिद्धये ॥१६५६॥
प्रतीहारकरन्यस्तसर्वभारस्तु भूपतिः । मन्दाक्रान्तितया राज्यमसुस्थितममन्यत ॥१६५७॥
यो यो हि व्यग्रहीत्तं तं संधाय सविधस्थितः । तमन्वहं प्रतीहारः सानुग्रहमिवैक्षत ॥१६५८॥
प्रगल्भमाने शास्त्येवं[1]मुदयः कम्पनापतिः । अवधीच्छद्मना दृप्तं प्रकटं कालियात्मजम् ॥१६५९॥
1660 अविश्वासोल्बणान्सर्वलावन्यानथ लक्ष्मकः । निर्मर्यादान्कम्पनेशमीवत्सान्त्वमजिग्रहत् ॥१६६०॥
स्नात्वाभ्येष्यति गङ्गायां यावत्सुज्जिर्विसूत्रताम् । यावत्कथं मया नेया कश्मीरा इति चिन्तयन् ॥१६६१॥
तावन्मात्रान्तरव्याप्त्या राज्ञो विज्ञाय डामरान् । भिन्नान्भिक्षाचरोविक्षद्विषलाटां हिमागमे ॥१६६२॥
मण्डलस्यान्तरे तस्य विविक्षो रुद्धडामरः । प्रतीहारो हिमर्तुश्च निषेद्धा समपद्यत ॥१६६३॥
स टिक्केन पितृद्रोहादेकान्तद्वेषिणा रिपोः । आनीतः संमतैर्दत्ताप्यायः सर्वैश्च डामरैः ॥१६६४॥
1665 प्रतीक्षमाणो राज्याप्तिहेतुं सुज्जिसमागमम् । निर्भयष्टिक्कजामातुर्भागिकस्य खशप्रभोः ॥१६६५॥
बाणशालाभिधे दुर्गे वसन्नल्पोच्छ्रितावपि । दूतैर्विभेदमनयत्सर्वं डामरमण्डलम् ॥१६६६॥
प्रमोदं सुहृदां त्रासं द्विषां न विसृजन्पुरः । व्यावर्तताथ गङ्गायाः सुज्जिर्विहितमज्जनः ॥१६६७॥
पूर्वविप्रकृते भिक्षावस्मिंश्चाभेदमागते । यथामुष्य महीभर्तुस्तथास्माकं भयं भवेत् ॥१६६८॥
ध्यात्वेति सिंहदेवेन प्रार्थितो व्याजमादधे । सुज्जिस्वीकरणोद्योगे सोमपालो भयाकुलः ॥१६६९॥
1670 सुज्जिर्जालंधरं प्राप्तः प्रातर्भिक्षाचरान्तिकम् । यावद्यास्यति तं सायं तद्दूतस्तावदासदत् ॥१६७०॥

---

१६४९ [1]) Emended with C; A स्वस्रेयी. १६५५. [1]) These two *pâdas* have been twice written by A.— [2]) Emended with C, A °शाधि. १६५९. [1]) Thus A; perhaps read शास्त्यैवमु°.

प्रेरितो ज्येष्ठपालेन निषिद्धो भागिकेन च । विरराम स तस्योक्त्या विपक्षाश्रयणग्रहात् ॥१६७१॥
शरणं देशान्तरोपान्ते तव भूपोऽपनेष्यति । स्वं च दास्यत्यधीकारं मन्मुखप्रहितार्थनः ॥१६७२॥
इति दूतमुखेनोक्तः सोमपालेन चान्वहम् । विपक्षौत्सुक्यमुत्सार्य तद्देशाभिमुखो ययौ ॥१६७३॥
उदयः कम्पनाधीशो वैशाखे तीर्णसंकटः । खशान्वितेन संग्रामं प्रत्यपद्यत भिक्षुणा ॥१६७४॥
प्राक्तस्युष्यल्पपृतने जाते पृथुबले ततः । तस्मिन्कोट्टान्तरं भिक्षुः प्राविशद्ग्रामवेष्टनः ॥१६७५॥ 1675
राजाथ विजयक्षेत्रं निर्यातः प्रत्यपूरयत् । कम्पनेशस्य कटकं तास्ताः संप्रेषयंश्चमूः[1] ॥१६७६॥
यन्त्रोपलशरासारविविधायुधवर्षिणी । दुर्गस्थितैर्नृपचमूः प्रत्ययोध्यश्मवर्षिभिः ॥१६७७॥
पतत्स्वश्मसु भिक्षोश्च नामलक्ष्मसु पत्रिषु । ग्रहीतुं दुर्गजान्राजसेना दीर्घापि नाशकत् ॥१६७८॥
दिनैरभ्यधिके मासमात्रे याते महीस्ततः । विदार्य मूलं दुर्गस्य धन्यैः[1] खाताम्बु संभृतम् ॥१६७९॥
दुर्गभाजो बलासाध्या राज्युपायपरे धियम् । जाततद्वैरिबाधेच्छा धनलुब्धामदर्शयन् ॥१६८०॥ 1680
विससर्ज प्रतीहारमथ तद्वस्तुसिद्धये । राज्ञा[1] डामरसामन्तमन्त्रिराजात्मजैः समम् ॥१६८१॥
कोष्ठेश्वरत्रिल्लकाद्याः कृच्छ्रस्थस्य[1] विमोक्षणम् । करिष्यामो वयं भिक्षोरिति बुद्ध्या तमन्वयुः ॥१६८२॥
पश्यन्संकटशैलाग्रादधः कोट्टं मितोन्नति । जितं मेने प्रतीहारो वीक्ष्यानन्ताः स्ववाहिनीः ॥१६८३॥
पूर्वस्थितैः प्रतीहारानुगैश्चान्यत्र वासरे । अयोधि सर्वसैन्यस्य बलात्कोट्टं जिघृक्षुभिः ॥१६८४॥
ते तावन्तोऽप्यश्मवृष्ट्या तथा तैः प्रतिचक्रिरे । नास्तीदं विक्रमेणेति यथागृह्णन्विनिश्चयम् ॥१६८५॥ 1685
वीरदेहद्रुमाग्रेभ्यो न्यपतन्नश्मभिर्हताः । निर्यदस्रौघसरघाः शीर्षभ्रमरगोलकाः ॥१६८६॥
कोष्ठेश्वरस्य मूढत्वं निर्व्यूढं तत्र किंचन । स्वस्य भिक्षोर्लवन्यानामन्येषां च विनाशकृत् ॥१६८७॥
नास्त्यत्र मत्समो वीर इत्येतावत्प्रसिद्धये । स ह्ययुद्धोद्धतं भिक्षोर्यत्प्राणक्षयकार्यभूत् ॥१६८८॥
बुभुक्षूणां खशानां स संकटे धैर्यमादधे । कोष्ठेश्वरोऽस्मि चाभिज्ञौ तद्वद्या डामराः परे ॥१६८९॥
यदेतद्दृश्यते भूरि सैन्यमस्मद्धिताय तत् । पर्यवस्येदिति वदन्समभाव्यन्यथा च तत् ॥१६९०॥ 1690
विस्रम्भभूरमुष्यारिर्यत्र कोष्ठेश्वरोऽप्यसौ । अन्येषु तत्र कैवास्थेत्यथ ते निश्चयं दधुः ॥१६९१॥
भूभृत्पितृद्रुहः कार्यवशेन स्वोपवेशने । अङ्गीकृताधिकारस्तु धीमांष्टिक्कस्य लक्ष्मकः ॥१६९२॥
खशाधीशं महाग्रामस्वर्णादित्यागलंभयात् । स्वीकृत्य भिक्षुदुधुक्षां[1]बद्धकक्ष्यमकारयत् ॥१६९३॥
आनन्दाख्यः खशाधीशस्यालः कृतगतागतः । नीत्वा टिक्कं प्रतीहाराभ्यर्णं भूयोऽप्यरोपयत् ॥१६९४॥
प्रतीहारस्य टिक्केन सहैक्यं वीक्ष्य डामरैः । निःसंशयं हतोऽज्ञायि भिक्षुः कोष्ठेश्वरादिभिः ॥१६९५॥ 1695
संरब्धास्तद्विमोक्षाय प्राहिण्वंस्ते खशान्तिकम् । दूतानूरीकृतस्वर्णदाना भूरिधनैः समम् ॥१६९६॥
खशस्तु दध्या[1]वुत्कोचं गृहीत्वास्माभिरुज्झितः । जानाति रक्षितान्प्राणान्भिक्षुः कोष्ठेश्वरादिभिः ॥१६९७॥
समन्युः प्राग्राज्योऽथ देङ्गपालोऽथ दूरगः । हन्यान्मां जयसिंहस्तद्वध्यः पक्ष्यः प्रयत्नतः ॥१६९८॥
मत्वेति तेन प्रत्युक्ता भिक्षुं[1] शौचस्थितं गृहात् । विपाद्यातः फलहकं निर्गच्छेत्यूचिरेऽपि ते ॥१६९९॥

---

१६७६. 1) Emended; A संप्रेषयचमूः. १६७९. 1) Emended; A धान्व ; C धान्वखा°; cf. viii. 1624. १६८१. 1) Emended; A राज्ञां. १६८२. 1) Thus corr. by $A_2$ from $A_1$ कृच्छ्रातस्य. १६९३. 1) Emended; A °बुभुक्षु°. १६९७. 1) Emended with R; A दध्याउ°. १६९९. 1) Emended; A भिक्षुणो°

1700 स त्वमेध्योपलिप्ताङ्गः श्वेवावस्करवर्त्मना । यात इत्ययशो लोके ध्यायन्मानी न निर्ययौ ॥१७००॥
कोष्ठेश्वरोऽव्यक्तकृत्यः सैन्यक्षोभेच्छयाक्षिपन् । रूक्षं कालविदा प्राज्ञे प्रतीहारेण सान्त्वितः ॥१७०१॥
नीवी खशाधिपैर्दत्तायामा प्रत्यूषादगृह्यत । व्यवसायः प्रतीहारमुख्यैर्भिक्षुप्रमापणे ॥१७०२॥
गच्छद्भिरागच्छद्भिश्च राजा दूतैः प्रतिक्षणम् । अन्विष्यन्विजयक्षेत्रे वार्तां पर्याकुलोभवत् ॥१७०३॥
तावद्भिराहवैस्तैस्तैः साहसे दश वत्सरान् । कृतयत्नस्य[1] साध्योभून्न यो वृद्धमहीभुजः ॥१७०४॥
1705 डिम्बो राजानुगा डिम्बारतस्य भिक्षोः प्रमापणम् । साध्यमेते हि मन्यन्ते हन्त किं केन संगतम् ॥१७०५॥
विहस्य नीयते वित्तं खशैरेत्य क्षणादमी । भग्ना नूनं प्रयास्यन्ति मुषिताश्चाखिलाः परैः ॥१७०६॥
पृथग्भूतः कोष्ठकोयं त्रिल्लकोस्यैव बान्धवः । एते भिक्षाचरोच्छिष्टपुष्टा आभ्यन्तरा अपि ॥१७०७॥
को नूतनोत्र संप्राप्तो यो राज्ञः साधयेद्धितम् । सामग्री नूनमायाता सेयमस्यैव सिद्धये ॥१७०८॥
इत्यूचुः शिबिरे यावज्जनास्तावदवेष्ट्यत । कटकैर्मन्त्रिणां दुर्गं विकोशायुधवाहिभिः ॥१७०९॥
1710 एकाकी चिरसंक्लिष्टो हन्तव्यस्तत्कृतेखिलैः । हा धिक्परिकरो बद्धो निर्लज्जैः सर्वशस्त्रिभिः ॥१७१०॥
त एवेत्यूचुरासीच्च कचच्छस्त्रोर्मिनिर्मलः । स्फुरद्योधाक्षिशफरो निःशब्दः सैन्यसागरः ॥१७११॥
व्योम्नोड्डीयेत वा सैन्यं लङ्घयेद्वा मृगप्लुतैः । दुष्टाभ्रवृष्टिरिव वा निखिलांस्ताडयेत्समम् ॥१७१२॥
साश्चर्यशौर्यैः पर्यन्ते स्वीकुर्वन्भिक्षुरायुधम् । संभ्रान्तश्चकितश्चासीदित्यन्तश्चिन्तयञ्जनः ॥१७१३॥
एतावन्मन्त्रिणां सिद्धमथ प्रत्यूहसंभवः । तच्छान्तिः कार्यसिद्धिश्च प्रतापैर्नृपतेरभूत् ॥१७१४॥
1715 सैन्ये भिक्षाचरापातं पश्यत्यूर्ध्वार्पितेक्षणे । कोट्टान्निष्कृष्टशस्त्रीकः पुमानेको विनिर्ययौ ॥१७१५॥
रुदतीभिः परीतस्य नारीभिस्तस्य त्रिक्षिपुः । पृष्ठे केपि वपुर्लोलकौसुम्भाधरवाससः ॥१७१६॥
बद्धः पलायमानोत्र सोयं भिक्षुरिति ब्रुवन् । उन्मुखः स जनोभीषीद्दिक्कं तमथ निर्गतम् ॥१७१७॥
स हि[1] भिक्षोः कृतद्रोहतुमुले प्रस्तुतो[2] वधम् । तस्माद्राजानुगेभ्यो वा स्वस्याशङ्क्य विनिर्ययौ ॥१७१८॥
अद्रोहोस्मीति लोकस्य प्रत्ययाय चकर्ष च । कृपाणीमुदरं हन्तुं रक्ष्यमाणो निजानुगैः ॥१७१९॥
1720 सानुगस्त्यक्तमार्गां स विलङ्घ्य नृपवाहिनीम् । अद्रिप्रस्रवणोपान्ते नातिदूरेभ्युपाविशत् ॥१७२०॥
उच्छ्वसंश्चिरसंप्राप्तैरम्भोभिर्दुर्गनिर्गतः । मायां प्रयोक्तुं प्रारेभे प्रेरितः सोन्यडामरैः ॥१७२१॥
संजातं लम्बमानार्कमहस्तत्रक्ष्यतां क्षणम् । भिक्षुः क्षपायामास्कन्दमपनेष्यन्ति डामराः ॥१७२२॥
इति तद्वाचिकात्तीक्ष्णा नीविभिर्मन्त्रिणां समम् । खशैस्त्यजद्भिर्दृषदो न्यरुध्यन्तारुरुक्षवः ॥१७२३॥
ततः किलकिलारावमुखरैः करतालिकाः । योधैर्ददद्भिः सचिवा व्यगृह्यन्ताकुलाशयाः ॥१७२४॥
1725 मुक्ताः स्वामिद्रुहः कृच्छ्रगता राज्यं प्रसाधितुम् । द्विषतो मन्त्रिभिः स्वार्थो[1] दत्त्वार्थान्को नु साधितः ॥१७२५॥
राजकार्ये च भानौ च लम्बमानेथ लक्ष्मकः । किमेतदिति तं नीर्षि खशास्यालमभाषत ॥१७२६॥
सोभ्यधात्कुम्भदास्यापि रोद्धुं शक्यं चिकीर्षितम् । खशानां प्रत्यवस्थाता कथं तत्रास्त्यसंनिधिः ॥१७२७॥
स हन्तुं वैपरीत्यं तं खशानां त्वं व्रजेत्यथ । उक्त्वा व्यसृजदानन्दं जहसे चान्यमन्त्रिभिः ॥१७२८॥

---

१७०४. [1]) Emended; A °त्नस्य. १७१८. [1]) Emended; A सह.—[2]) Thus A; perhaps read कृतद्रोहस्तुमुले प्रस्तुते.
१७२१. [1]) Emended with C; A °र्गधस्ता°. १७२५. [1]) Emended; A स्वार्थो.

स दूरदर्शिना राज्ञा विषलाटाध्वपातितः । देङ्गपालगृहा – –[1]रम्भः समभाव्यत ॥१७२९॥
अतः प्रधानकोट्टेशस्यालः समभगृह्यत[1] । प्रागेवार्थैरेतदर्थं प्रभुणा दीर्घवागुराम् ॥१७३०॥ 1730
संक्षोभावसरे क्षत्ता ततो निःसंभ्रमोऽभवत् । शिक्षितं पक्षिणमिव त्यक्तं प्राप्यं विवेद तम् ॥१७३१॥
स तानूचे न हास्यं मे नष्टे कार्येऽत्र साहसम् । सर्वनाशे हतेऽमुष्मिन्खशस्यालेऽपि किं भवेत् ॥१७३२॥
अकुण्ठया भाग्यशक्त्या राज्ञः स्यालः खशस्य सः । सर्वान्नियन्त्र्य दुर्गाप्तांस्तीक्ष्णादीनाजुहाव तान् ॥१७३३॥
दस्यूनामसवः कण्ठे संदेहं मन्त्रिणां धियः । स्वःस्त्रीणां प्रीतयः काष्ठां तीक्ष्णाधारहदुर्गिरिम् ॥१७३४॥
स चर्मकौपीनपटीबन्धस्तत्स्वाभिधाङ्कितैः । इषुभिः स्वामिवत्स्वस्य ख्यापनं सर्वतो युधि ॥१७३५॥ 1735
स ताम्बूलाधरः सक्तिः सा केशश्मश्रुयोजने । याभूदनुमुमूर्षूणां भिक्षुराजोपजीविनाम्[1] ॥१७३६॥
निश्चितान्ते ततस्तस्मिन्स तेषां संन्यवर्तत[1] । कोष्ठेश्वरादिशिबिरं तूर्णं शरणमीयुषाम् ॥१७३७॥ तिलकम्[2]॥
एकैकशो लक्ष्मकेण युक्त्या स्वैः प्रेरितैर्भटैः । टिक्कः स्वं वीक्ष्य वलितं निचकर्ताङ्गुलिं भयात् ॥१७३८॥
खशैरस्मिन्नवसरे स पलायनशङ्किभिः । रक्ष्यमाणस्तेष्वहःसु मनस्तापादभुक्तवान् ॥१७३९॥
वीरस्याम्यन्विलम्बेन तीक्ष्णानामाहवोत्सुकः । तस्थौ भिक्षाचरः स्वान्तमक्षवत्या विनोदयन् ॥१७४०॥ 1740
हर्म्यप्राङ्गनमायाते तीक्ष्णलोके युयुत्सया । उत्तिष्ठता तेन दायः स्तोकशेषः समाप्यत ॥१७४१॥
दीव्यतः[1] कान्तया साकं कामिनः सुहृदागमे । प्रत्युत्थातोरिव क्षोभो नान्तस्तस्य व्यजृम्भत ॥१७४२॥
किमद्यापि वधेन स्याद्बहूनामिति चिन्तयन् । स विहाय शरावापं सासिधेनुर्विनिर्ययौ ॥१७४३॥
सुदीर्घचिन्तागलितायामश्यामलिभिः कचैः । चञ्चच्चित्रपताकाङ्कमिव वीरपटाञ्चलैः ॥१७४४॥
गण्डताण्डविनाच्छिन्नशङ्खताडङ्करोचिषा । चन्दनोल्लेखकान्त्या च द्योतिताहार्क्रियास्मितम् ॥१७४५॥ 1745
वितीर्णं चित्रचार्यन्ते विपर्यस्ताङ्घ्रिताडनम् । द्योतयन्तमिवालातैः शस्त्रीनेत्राधरांशुकैः ॥१७४६॥
कौसुम्भाधरवासोभवद्धौताधराञ्चलैः । लोलैर्वीरहरिं बद्धसटाटोपमिवांसयोः ॥१७४७॥
गूढनःपाणिपादैक्यचारुप्रचुरचारिभिः । चरन्तं मण्डलैश्चित्रैर्लघुचित्रस्थिरक्रमैः ॥१७४८॥
औचित्यस्योचितां चर्याम्[1]अलंकारमहंकृतेः । अभिमानविभूतीनां नित्योत्सेकमनत्ययम् ॥१७४९॥
अलक्षितक्षिप्रपातं स सर्वोऽप्युन्मुखो जनः । विचरन्तं तमैक्षिष्ट भिक्षुमग्रे विरोधिनाम् ॥१७५०॥ 1750
राजबीजी मधोर्नप्ता तं प्रवीरः कुमारियः । भ्रातापि ज्येष्ठपालस्य निर्यातो रक्तिकोऽन्वगात् ॥१७५१॥
हर्म्यैर्निम्नोन्नतैस्तैस्तैस्त्रिंशतः परिपन्थिनः । रुरोधैकः शरासारैर्गार्गिको भिक्षुसंश्रितः ॥१७५२॥
ते धावन्तो व्यभाव्यन्त[1] शरैस्तच्चापनिर्गतैः । वर्षोपलैः पुरोवातप्रेरितैरिव दन्तिनः ॥१७५३॥
स रोद्धा प्रतियोधानां पापैः क्षिप्राश्मभिः खशैः । क्षताङ्गो भग्नचापश्च चिरेण विमुखीकृतः ॥१७५४॥
तस्मिन्प्रचलिते मार्गैः प्रविश्योच्चावचैर्भटाः । ते च भिक्षाचरादीनां सर्वे गोचरमाययुः ॥१७५५॥ 1755
भिक्षोरेकं क्षणालक्ष्यधैर्यं पार्श्वभृतायुधम् । अधावत्तूर्णमादाय शूलमेको बृहद्भटः ॥१७५६॥

---

१७२९. [1]) $A_1$ omits here two *aksharas* without indicating the *lacuna*; C देङ्गपालगृहावस्मारारम्भः; perhaps read °गृहाभ्यर्णावारम्भः. १७३०. [1]) Thus A; C स समगृह्यत. १७३६. [1]) Emended with C; A राज्ञोपजी°. १७३७. [1]) Emended: A तेषां सन्यव°.—[2]) $A_1$ writes here ३ instead of तिलकम्. १७४२. [1]) Emended with C; A दीव्यन्तः. १७४९. [1]) चर्या supplied by $A_3$ in space left by $A_1$. १७५३. [1]) Emended; A व्यभा°

तस्य प्रहरतः शूलं भिक्षुरामिलवत्सलः | छित्त्वापहस्तेनावेगात्केशाञ्जग्राह धावितः ||१७५७||
प्रजहार कृपाण्या च निर्यत्प्राणे पतिष्यति | तस्मिन्प्राहरतां भूयस्तौ कुमारियरक्तिकौ ||१७५८||
निर्विभागैर्हते तस्मिन्विविधायुधवाहिभिः | विरोधियोधैः संनद्धैस्त्रयो युयुधिरेथ ते ||१७५९||
1760 अजायन्त विविक्ताश्च शस्त्रसंत्रासिताहिताः | कोटराजगरापास्तखगौघा इव द्रुमाः ||१७६०||
अशक्नुवन्तस्तान्हन्तुं खड्गशूलादिभिर्द्विषः | अपसृत्य शरासारैस्ततो दूरादवाकिरन् ||१७६१||
भिक्षाचरमृगेन्द्रस्य भञ्जतः शरपञ्जरान् | ततो हर्म्याग्रखण्डैर्मुक्ताः पुष्टाः पाषाणवृष्टयः ||१७६२||
धावतस्तस्य घोराश्मवृष्टिकुट्टितवर्ष्मणः | निममज्ज यकृत्पिण्डं भञ्जन्पार्श्वे शिलीमुखः ||१७६३||
क्रान्त्वा त्रीणि पदान्याशु स पपात दिशन्क्षितेः | ततश्चिरप्ररूढं द्रु कम्पं विद्विषतां हरन् ||१७६४||
1765 कुमारियोऽपि बाणेन विद्धवङ्क्षणवर्त्मना | प्रणितोऽप्यपतद्भर्तुः पादोपान्तेऽपजीवितः ||१७६५||
रक्तिकस्तु शरेणैव विद्धो मर्मणि विह्वलः | सजीवितोऽपि निर्जीव इव भूमावुपाविशत् ||१७६६||
महाकुलीनैः सहितो हतो भिक्षुरशोभत | वज्रावभुग्नः शिखरैः पुष्पितैरिव पादपः ||१७६७||
इयतो राजचक्रस्य मध्ये हर्षनृपात्मजः | नावमानस्य मानस्य स्वभुग्द्विड्क्षौः परं पदम् ||१७६८||
विधाता नित्यविधुरस्तेनान्तेऽप्यभिमानितः | अकुण्ठेन ध्रुवं चक्रे गृहीतात्मपराजयः ||१७६९||
1770 को वराको महर्द्धीनां सोमे पूर्वमहीभृताम् | उदास्तेनान्तकृत्येन ते त्वस्यामे न किंचन ||१७७०||
अहोपुरुषिकायस्तैरारोहद्भिर्द्विषद्भटैः | तदवस्थस्तदार्तोऽपि शक्त्यायुद्ध कुमारियः ||१७७१||
स्फुरन्योद्धव्यमित्येव स महारावशस्तथा | विज्ञाततत्त्वैररिभिर्वितत्य बहुशो हतः ||१७७२||
त्रिपक्षेऽस्मिन्नलं मूढाः प्रहारैरिति निन्दिताः | खशैः प्रजह्रुर्बहुशो हते भिक्षौ द्विषद्भटाः ||१७७३||
अविधेयायुधस्त्रीभ्रमणवेदनयाधमैः | कैश्चिन्निर्जीवितप्रायो रक्तिकः शस्त्रिभिर्हतः ||१७७४||
1775 वयसस्त्रिंशतिं वर्षांश्च मासांश्च भुक्तवान् | स षष्ठाब्दासितज्यैष्ठदशम्यां नृपतिर्हतः ||१७७५||
निदानं विप्लवे दीर्घे सर्वनाशेऽपि कारणम् | येषा बभूव तेऽप्येवं तुष्टुवुः सत्त्वविस्मिताः ||१७७६||
नेत्रस्पन्दं भ्रुवोः कम्पं स्मेरास्यत्वं च नामुचत् | सजीवमिव तन्मुण्डं कियतीरपि नालिकाः ||१७७७||
एकं व्योम्न्यविशच्चित्रभानुं भूमौ पुनः परम् | तद्देहमप्सरःसङ्गं धराम्बु च विदज्जडम् ||१७७८||
सचिवा विजयक्षेत्रस्थितस्यामे महीपतेः | तेषां त्रयाणां मुण्डानि ततोऽग्र्येषुरुपाहरन् ||१७७९||
1780 श्रीदुधारक्षदन्त्यश्वशशाङ्कादिप्रकाशने | दृष्टचित्रस्वभावोऽब्धिर्यथायं पार्थिवस्तथा ||१७८०||
तत्र तत्राद्भुतं भावं दर्शयन्भुवनाद्भुतम् | परिच्छेद्यानुभावत्वं न केषामपि गच्छति ||१७८१||युग्मम्||
नाकृप्यद्विहतोऽसाध्यः पितुर्मे योऽप्यभूदिति | न जहर्ष विनष्टोऽयं राजकण्टक इत्यपि ||१७८२||
नाकुप्यन्मत्पितुर्मुण्डमेष भ्रमितवानिति | वीक्ष्य भिक्षोः शिरोऽव्याजभावौदार्यस्त्वचिन्तयत् ||१७८३|| युग्मम्||
आकारस्यास्य संभाव्यं सत्त्वं न द्वेषवैकृतम् | वैशद्यं स्फटिकस्येव नार्कालोकोपतप्तता ||१७८४||

---

१७५८. [1]) Emended; A प्रह°. १७६५ [1]) Emended, A पादोपान्ते. १७६६. [1]) Emended with C; A भक्तिकस्तु. १७६८. [1]) Thus A; C °स्वभ्र:.—[2]) Perhaps read °द्विशुः. १७७०. [1]) Thus A, R C °नान्तकृत्येन. १७७५. [1]) Emended with C, A ज्येष्ठ°. १७७६ [1]) Emended; A सत्त्वविस्मितः. १७७८. [1]) Emended; A धारा°. १७८१. [1]) A₁ २. १७८३. [1]) Emended, A₁ had first written नाकुप्यत्स पितु° and subsequently corrected this to नाकुप्यत्स्मत्पितु°.—[2]) Emended; A₁ °भावो – – स्त्वचि°, writing in margin भावाशय, R G C °भावाशयस्त्व°. Cf. अव्याजौदार्यचर्यस्य iii. 308.—[3]) A₁ २. १७८४. [1]) Emended; A °तप्तता.

उत्कर्षात्प्रभृति व्यक्रममुं यावन्महीभुजम् । हा धिक्स्वमृत्युना दृष्टं नेह देहविसर्जनम् ॥१७८५॥ 1785
प्रसादवित्ता येप्यासन्पूर्वमस्योर्वराभुजः । तटस्था इव वीक्षन्ते तेद्य मुण्डावशेषताम् ॥१७८६॥
इति क्षितीशोसामान्यसौजन्योन्तर्विचारयन् । आदिदेश रिपोः शीघ्रं तादृशस्यान्तसत्क्रियाम् ॥१७८७॥
निद्राच्छेदे च निशि च[1] ध्यायंस्तस्योदयात्ययौ[2] । भवस्वभाववैचित्र्यं मुहुर्मुहुरचिन्तयत् ॥१७८८॥
अपि वर्षसहस्रेण देशे दायाददुःस्थितिः । नूनं न भविता भूय इति लोकोप्यमन्यत ॥१७८९॥
दग्ध्वा तृणं तनु घनं प्रतनोति शष्पं वृष्टिं सृजत्युपचितोष्म दिनं[1] प्रदर्श्य ।
वैचित्र्यसंस्पृशि विधेर्नियमेन कृत्ये न प्रत्ययः क्वचन चञ्चलनिश्चयस्य ॥१७९०॥ 1790
कृत्यं निर्वर्त्य विश्रान्त्यै धीरस्याबध्नतो मनः । विधिर्विधत्ते दीर्घान्यकार्यभारसमर्पणम् ॥१७९१ ॥
आरोढुं प्रथमस्य दीर्घदमनं[1] प्रक्रमस्याङ्घ्रिणा नो संत्यज्यत एव पादकटको यावद्द्वितीयोखिलः ।
वाहस्यासनरक्षिणः कलयतो भारावतारात्सुखान्यारोहेण परेण तावदसहाधिष्ठीयते पृष्ठभूः ॥१७९२॥
एवमेव क्षपामात्रं राज्ये निःशत्रुतां गते । शोकमूको नृपस्याग्रं प्राविशल्लेखहारकः ॥१७९३॥
पृष्टः सभ्यैः स संभ्रान्तैर्यस्मिन्नेवाह्नि भूपतेः । यातो भिक्षाचरः शान्तिमरातिर्दत्तदुःस्थितिः ॥१७९४॥
भ्रातरौ लोहरगिरौ बद्धौ द्वैमातुरौ पुरा । न्यस्तौ सुस्सलभूपेन यौ तौ सल्हण[1]लोठनौ ॥१७९५॥ 1795
ज्येष्ठे मृते कोट्टभृत्यैः कनिष्ठं लोठनं हठात् । तमिहाद्य त्रियामायामभिषिक्तमभाषत ॥१७९६॥
हतभ्रातृसुतैर्दृप्तै राज्यार्हैः सह पञ्चभिः । निर्यातं बन्धनादूचे कोशेषु स तमीश्वरम् ॥१७९७॥
द्रुयेत मुह्येदाक्रन्देत्प्रसारितभुजः पतेत् । स्वप्यादिसञ्ज्ञो निःस्पन्दस्तल्पं गच्छेदथ ध्रुवम् ॥१७९८॥
दीर्घदौःस्थ्यशमक्षिप्रमृदूकृतमना नृपः । असौ तत्कालनिपतद्वार्तावज्रघूर्णितः ॥१७९९॥
इति संभाव्य दिक्पालैरपि साकूतमीक्षितः । नाकाराचारचेष्टाभिः प्रागवस्थां जहौ नृपः ॥१८००॥ 1800
न ह्यनन्याभिभूतेन सर्वतोसह्यवर्तिना । तादृशा वैशसेनान्यः सृष्टपूर्वो हि भूपतिः ॥१८०१॥
पित्रास्य यद्बलाद्भ्रष्टं राज्यं भूयः प्रसाधितम् । अनेनापि हताराति विहितं पैतृकं पदम् ॥१८०२॥
हारितौ दुर्गकोशौ[1] तौ नष्टनामापि दारकः । दायादशेषो यत्रैको निर्धनो वीतबान्धवः ॥१८०३॥
धनमानान्तकृद्भूरिवर्षान्व्यसनमादधे । उपप्लवप्रिये देशे तत्रैकस्मिन्हतेहिते ॥१८०४॥
मित्रदुर्गार्थसंपन्नाः प्रोद्भूताः षड्विरोधिनः । भिन्नप्रकृतिकं कोशशून्यमेतच्च[1] मण्डलम् ॥१८०५॥ 1805
तादृक्छिद्रकषनिस्तीर्णमाहात्म्यस्य महीपतेः । धैर्येण स्पर्धितुं जाने राघवोपि सलाघवः ॥१८०६॥
प्राक्पोषितं हि साम्राज्यदाने निर्वासने च तम् । तुल्यानुभावमस्मार्षीत्पितैवं गणयन्गुणान् ॥१८०७॥
आहूतस्याभिषेकाय विसृष्टस्य वनाय वा । न मया लक्षितस्तस्य स्वल्पोप्याकारविभ्रमः ॥१८०८॥
कान्तेषु काननान्तेषु सकान्तं सानुजं च तम् । भूयः श्रियं प्रतिश्रुत्य स्थातुं सावधि सोभ्यधात् ॥१८०९॥
एकक्षणानुभूतेस्मिन्संघट्टे सुखदुःखयोः । ईदृक्तत्तादृशाभेदादनयोरन्तरं महत् ॥१८१०॥ 1810
नियतं निरुपादानां शक्तिं दर्शयितुं जने । नानोपकरणग्रामं संनद्धोस्याच्छिनद्विधिः ॥१८११॥

---

१७८८. [1]) च omitted in A; supplemented with C.—[2]) Emended with C; A °ान्ययौ. १७९०. [1]) Thus corr. by A₁ from °तोष्म चिरं. १७९२. [1]) Emended; A दीर्घमहन°. १७९५. [1]) Emended; A सुल्हण°. १८०३. [1]) A °कोषौ. १८०५. [1]) Emended; A °मेतं च.

अत्यद्भुतानि कृत्यानि वक्ष्यमाणानि भूपतेः । कोऽमुष्य बहु मन्येत सामर्थ्ये सति संपदाम् ॥१८१२॥
धैर्याब्धिना कार्यशेषं ज्ञातुं राज्ञा सविस्तरम् । पृष्टोऽथ कोट्टवृत्तान्तमाचख्यौ लेखहारकः ॥१८१३॥
उत्सृज्य भागिके कोट्टं प्रयाते मण्डलेश्वरः । लुप्तोद्योगोऽभवद्भूमौ प्रेमा संपन्नमत्तधीः ॥१८१४॥
1815 मण्डनाभ्यवहारस्त्रीभोगैकामो मदोद्धता । स वृथ्या भृत्यवैमुख्याधाय्याभव्यं व्यवाहरत् ॥१८१५॥
कुल्यानुकम्पिना दृष्ट्युत्पाटनादेः स वारितः । देवेनं नादादृढानां कांचिद्रक्षाक्षमां क्रियाम् ॥१८१६॥
मायाभ्युदयनो नाम कायस्थः स्थूलवाङ्भितः । मात्रिकश्च प्रतीहारो बद्धमूलस्य मन्त्रिणः ॥१८१७॥
पुत्रो भीमाकरस्येन्दाकरश्चात्रान्तरे समम् । बुभुक्षवस्तत्र तत्र वधं प्रेम्णो व्यचिन्तयन् ॥१८१८॥
अलब्धो हन्तुमप्राप्तावसरैस्तैः कदाचन । कोट्टादट्टालिकां कार्यवशादवरुरोह सः ॥१८१९॥
1820 कश्मीरेभ्यो नृपेणाल्पावशेषप्राणवृत्तिना । प्रैषि शासनमेतादृगिति प्रत्ययसिद्धये ॥१८२०॥
कोट्टौकसामशेषाणां गूढलेखान्विधाय ते । निबद्धसंविदः पूर्वमाभिषेच्यस्य भार्यया ॥१८२१॥
दृष्ट्वा दुर्गाद्विनिगडं कृत्वा च निशि लोठनम् । सिंहराजस्वामिविष्णुप्रासादाग्रेऽभ्यषेचयन् ॥१८२२॥ तिलकम् ॥
शारदाख्या वधूरेका कापि सुस्सलभूपतेः । तत्र स्थिताभवत्क्षुद्रा तेषामनुमतप्रदा ॥१८२३॥
तदर्पितैरयोयन्त्रभङ्गैरर्गलानि ते । कोशाद्विवार्य पर्याप्तं कोशरत्नादि जह्रिरे ॥१८२४॥
1825 सभृत्यैः सप्तभिस्तत्तत्साहसं सुमहत्कृतम् । दानेन त्याजिता या सा चण्डालैः प्रतिकूलता ॥१८२५॥
भेरीतूर्यादिनिर्घोषैर्निर्भिन्नाः कोट्टवासिनः । कृतां राजोचिताकल्पमपश्यन्नथ लोठनम् ॥१८२६॥
अदृष्टपूर्वतादृक्षोदात्तवेषः स विस्मयम् । निन्ये जनान्नृपामात्ययोगो दीपैः प्रकाशितः ॥१८२७॥
प्रेम्णः पार्श्वस्थितस्ताभ्यामानयेदारकोऽन्तिकम् । ससैन्यौ त्रिभुवश्चर्मपासिकाख्यौ च ठक्कुरौ ॥१८२८॥
तदास्थयाहितास्कन्दभङ्गस्तेषामशेषतः । रात्रिशेषश्च चन्द्रांशुस्पर्शपाण्डुरशीर्यत ॥१८२९॥
1830 प्रातः प्रेमाथ दुर्वार्ताभ्रंशेनोष्णदारुणः । संताप्यमानश्चोष्णांशुकरै रोद्धुमुपाययौ ॥१८३०॥
तं प्रतोलीतलप्राप्तं निर्यातैर्वैरिसैनिकैः । पराङ्मुखीकृतं वीक्ष्य चलितोऽस्म्यन्तिकं प्रभोः ॥१८३१॥
श्रुत्वेति भूभृत्त्वरया लुब्धं लोहरमन्त्रिणम् । विससर्जोदयद्वारपतिमानन्दवर्धनम् ॥१८३२॥
भूमिज्ञौ तौ हि कोट्टस्य त्रिवेदानन्यदेशजौ । सोऽल्पाश्वत्वादिरन्ध्राणां लक्षणग्रहणक्षमौ ॥१८३३॥
प्रविश्य च पुरं दृष्ट्वा प्रीतिदायार्थिभिः शिरः । भ्राम्यमाणं भटैर्भिक्षोराक्षिप्यैतानदाहयत् ॥१८३४॥
1835 राजादेशादसंरुद्धैः स्त्रीभूयिष्ठैरसौ जनैः । नग्नः पैतामहे देशे दह्यमानोऽन्वशोच्यत ॥१८३५॥
काले ग्रीष्मोदयोद्रिक्तभानौ सुविषमे नृपः । सिद्धिमश्रद्दधानोऽपि प्राहिणोति स्म रिल्हणम् ॥१८३६॥
स शौर्यस्वामिभक्त्यर्थनैःस्पृह्यादिगुणोज्ज्वलः । तेन ह्यमोघप्रारम्भः समभावि जिगीषुणा ॥१८३७॥
भवितव्यतया दत्तव्यामोहः प्रेरितोऽथ वा । शठामात्यैरभूद्भूभृत्स व्यक्तायुक्तमन्त्रितः ॥१८३८॥
हीनोऽर्थदुर्गामात्यैर्यन्निर्वैक्लव्यस्य वैरिणः । अनुमेने कृतारब्धीन्भृत्यान्ग्रीष्मोल्बणे क्षणे ॥१८३९॥
1840 उदयः कम्पनाधीशो राज्ञोऽग्रे पर्यशिष्यत । सर्वामात्याः प्रतीहारमन्वगच्छन्पुनः परे ॥१८४०॥

---

१८१३. [1]) A कोट्ट°. १८१६. [1]) Emended with C; A दृष्ट्युत्पाट°.—[2]) Emended with C; A देवेनादाद° with haplography. १८१८. [1]) Emended; A °चिन्तयत् १८२२. [1]) Emended; A °षेचयत् —[2]) A₁ ३. १८२५. [1]) Emendation doubtful; A °तायामा १८३७. [1]) Emended with C; A चौर्य°.

राजात्मजहयारोहडामरामात्यमिश्रया । दैर्घ्यं तत्सेनयावापि सर्वसामभ्युदयया[1] ॥१८४१॥
संविष्टयत्तद्दलिकानिविष्टकटको दिशः । संभर्तुं प्रववृते सर्वोपायैर्विरोधिनः[1] ॥१८४२॥
लुल्लाद्यः फुल्लपुरे कोट्टोपान्ताश्रये स्थिताः । भयभेदाहवव्यग्रान्प्रकम्पमनयन्रिपून् ॥१८४३॥
सुस्सलक्ष्मापतिर्बद्धं[1] लोठने तत्सुतामदात् । यस्मै प्राक्पद्मलेखाख्यां बहुस्थलधराभुजे ॥१८४४॥
साहायकाय प्राप्तस्य तस्य सैन्यैर्द्विषच्चमूः । भूराभिधस्य युद्धेषु प्रत्यग्राहि प्रतिक्षणम् ॥१८४५॥ 1845
तेषूपरुद्धराष्ट्रेषु भयदोलायमानधीः । अङ्गीचक्रे नरपतेर्नतिं दण्डं च लोठनः ॥१८४६॥
एतावत्सिद्धमफलारब्धीनामत्र दुःसहे । काले व्यावृत्तिरस्माकमुचितास्मिन्नलाघवा[1] ॥१८४७॥
शारदारम्भसुभगे क्रमात्काले बलोर्जिताः । अथारब्धिं विधास्यामः सर्वारम्भेण शोभनाम् ॥१८४८॥
इत्यन्वहं[1] लक्ष्मकेण प्रहितं नादधे नृपः । अन्ये च मन्त्रिणो मन्त्रं शाठ्यादभ्यर्णवर्तिनः ॥१८४९॥ तिलकम्[2] ॥
सर्वाधिकार्युदयनः प्रतिश्रुत्य धनं बहु । साहायकार्थमानिन्ये सोमपालमपि प्रभोः ॥१८५०॥ 1850
अपाङ्क्त्यः स संबन्धबद्धोऽपि धनलुब्धधीः । क्रुध्यति स्म महाव्यापन्निमग्नाय महीभुजे ॥१८५१॥
बह्वर्थदो लोठनश्चेत्किं मे संबन्ध्यपेक्षया । अन्यथा भवतामस्मीत्यन्यान्[1]वक्ष्यामि कैतवात् ॥१८५२॥
दम्भमित्यभिसंधाय सोमपालोऽभ्युपाययौ । समर्थने हेतुरासीत्सुज्जेर्व्याजे कियानपि ॥१८५३॥ युग्मम्[1] ॥
स हि भिक्षाचरोन्मुख्यान्निवार्यानायितो यदा । सोमपालमुखेनोर्वीभुजा राजविसर्जितः ॥१८५४॥
दूतः प्रार्थयमानस्य तस्यार्थान्प्राक्प्रतिश्रुतान्[1] । ऋणिकस्योत्तमर्णेभ्यः प्रदातुमनुबध्नतः ॥१८५५॥ 1855
तदा भिक्षाचरं जानन्हतकल्पमनेन नः । व्यसनप्रशमे कोऽर्थ इत्यवज्ञां प्रकाशयन् ॥१८५६॥
मदेन न ददौ किंचित्सोऽथ भिक्षाचरं हतम् । श्रुत्वा निरुपयोगं स्वं राज्ञो ज्ञात्वा सशोकताम् ॥१८५७॥
यावदेकाहमभजल्लोहरव्यसने भयम् । तावन्निशम्य संप्राप्तोत्सेको भूयोऽपि मन्युभाक् ॥१८५८॥
लोठनं बद्धसंधिं वः करिष्यामीति भूभुजः । उक्त्वा दूतं लोठनेन दापयिष्यामि काञ्चनम् ॥१८५९॥
युष्मभ्यं कथयित्वेति सोमपालं चिकीर्षितुम् । बलितामबलत्वं च सर्वेषां स्वार्थसिद्धये ॥१८६०॥ 1860
समं सोमेन तत्सैन्यमध्यप्रस्थित्यलक्षितैः[1] । मितैरनुगतो भृत्यैर्घोरमूलकमासदत् ॥१८६१॥ कुलकम् ॥
यद्वानौचित्यदुष्पांसुवर्षदूषितकीर्तिना । भोगलुब्धतया तेन हता विततसत्त्वता ॥१८६२॥
तुषारशर्कराभुक्तजलपानाददुर्जरम् । त्यक्तुं भोज्यं मृदु स्निग्धं काश्मीरं न शशाक सः ॥१८६३॥
सतुषं शुष्कसक्त्वादि बहिर्भोक्तुमपारयन् । यैस्तैरुपायैः कश्मीरान्प्रविविक्षुरतोऽभवत् ॥१८६४॥
काश्मीरकाः कार्यशेषमदृष्ट्वा ग्रीष्मशोषिताः । आकर्ण्य च तदापातमाकुलत्वमशिश्रियन्[1] ॥१८६५॥ 1865
भुञ्जानैर्भृष्टमांसानि पिबद्भिः[1] पुष्पगन्धि च । मनोहारामतो हारि मार्द्वीकं लघु शीतलम् ॥१८६६॥
आनेष्यामो जवात्सुज्जिमाकृष्य श्मश्रु संयुगे । इत्थं विकत्थनैस्तैस्तैराहोपुरुषिकाः कृताः ॥१८६७॥
काश्मीरकैर्भर्तृयुक्तं खशैः सैन्धवकैरपि । अभिषेणयितुं शेकुर्न तेऽत्युद्यमिनोऽपि[1] तम् ॥१८६८॥
भ्रातृव्याय च मुख्याय भूभुजां च करार्पणम् । विदध्यां जयसिंहाय वरमित्यभिमानिनाम् ॥१८६९॥

१८४१. 1) Emended with C; A सर्वे. १८४२. 1) Emended, A सर्वोपायावि°. १८४४. 1) Emended; A °बद्धं. १८४७. 1) Emended; A °लाघव; C °लाघवः. १८४९. 1) Emended, A प्रत्य°.—2) $A_1$ ३. १८५२. 1) Emended with C; A °स्मीत्यान्य°, with haplography. १८५३ 1) $A_1$ २ १८५५. 1) Emended; A °मानस्यार्थान्प्रा°, omitting two *aksharas*; C °मानस्य तानर्थान्प्र°. १८६१. 1) Emended; A °मन्यम°. १८६५. 1) Emended; A °शिश्रयन्. १८६६. 1) A पिबद्भिः. १८६८. 1) Emended; A तेऽत्युद्य°.

1870 बह्वर्थमर्थ्यमानेन लोठनेन तिरस्कृतः । सोमपालः प्रियं किंचिद्राजपक्षे न्यदर्शयत् ॥१८७०॥

मयि श्वशुरसैन्यानां व्ययमाणां वैरिविग्रहे । सज्जे हिताय त्वं रन्ध्रमन्विष्यसि किमाश्रितः ॥१८७१॥

इति निर्भर्त्सितस्तेन सुज्जिः स्वाहंक्रियोच्छ्रितः । सर्वानुल्लङ्घ्य संनद्धो ग्रजसैन्यग्रहेभवत् ॥१८७२॥

जरठाषाढसंजातशीतज्वरमहाभयः । वरूथिनीमथोत्थाप्य विद्रवी निशि लक्ष्मकः ॥१८७३॥

विसृष्टदूताः कटकं नष्टं वक्तुं प्रभोर्द्रुतम् । केचिदन्वसरन्सुज्जिं सैनिकास्ते जिघांसवः ॥१८७४॥

1875 पारेणैकेन भूपालसैन्यमन्येन वैरिणः । वर्त्मनः श्वभ्रदुर्गस्य तुल्यमेव प्रतस्थिरे ॥१८७५॥

शारम्बरपथं वैरित्रस्यं त्यक्त्वा यियासवः । स्वोर्वी कालेनकाख्येन संकटेन तदन्तिके ॥१८७६॥

तस्मिन्नहन्यस्खलिता वनिकावासनामनि । ग्रामे सैन्या न्यविक्षन्त लोकैरुष्णायनैः समम् ॥१८७७॥ युग्मम् ॥

अनुप्रस्थायिनोभ्यर्णग्रामकेष्वपि बुभुजुः । भुक्त्वा पीत्वाथ ते निर्युर्निशार्धमकुतोभयाः ॥१८७८॥

अथापातं विद्विषद्भिः स्वस्य भावयितुं द्रुतम् । क्षोभभृत्सुज्जिरभ्येत्य तूर्यघोषमकारयत् ॥१८७९॥

1880 क्षणदाशेष एवाशु पलायां चक्रिरे ततः । नैस्तैः शैलपथैः सेना निरवष्टम्भनायकाः ॥१८८०॥

चित्राम्बराणि मुष्णद्भिः प्राकृत्यज्यन्त मन्त्रिणः । भूप्रकम्पैर्गण्डशैला नानाधातुद्रवैरिव ॥१८८१॥

लुण्ठ्यमानाश्वमूस्त्रातुं नादधे कश्चिदायुधम् । तदा तु येन वा तेन स्वात्मा नान्यस्तु रक्षितः ॥१८८२॥

उत्प्लुत्य लङ्घयन्तोद्रीन्केपि शोणाधरांशुकाः । रक्तस्फिजो गतौ प्रापुर्मर्कटा इव पाटवम् ॥१८८३॥

केप्यम्बरपरित्यागविकचश्रीरविग्रहाः । हरितालशिलाखण्डा इव वातेरिता ययुः ॥१८८४॥

1885 भूलवेणुवनाकीर्णैः शैलैरकृशविग्रहाः । केपि श्वासोत्थपूत्काराः करिपोता इवाव्रजन् ॥१८८५॥

किं नामोदीरणैर्मन्त्री स नासीत्तत्र कश्चन । तिरश्चैव विपर्यस्तधैर्यैर्यैर्न पलायितम् ॥१८८६॥

भृत्यस्कन्धाधिरूढोथ गच्छन्मूढः प्रधावितुम् । प्रतीहारो द्विषद्योधैर्दूरात्कैश्चिद्व्यलोक्यत ॥१८८७॥

निरंशुकः स सूर्यांशुकचलत्केयूरकुण्डलः । प्रतिशायानुसस्रे तैः सर्वप्राणप्रधावितैः ॥१८८८॥

अश्माहतेन भृत्येन त्यक्तः स्कन्धवृषल्क्षतः । स निस्पन्दवपुस्तिर्यक्स्तैरग्राहि महाजवैः ॥१८८९॥

1890 नवबन्धनशोकार्तशारिकाकृशविग्रहः । स  लर्गलिरिव व्यञ्जद्भिषः संकुचितेक्षणः ॥१८९०॥

बद्धस्य मे मानधनप्रहर्तुर्वैशसान्तरम् । इतोधिकं ध्रुवं सुज्जिर्विदध्यादिति चिन्तयन् ॥१८९१॥

स्कन्धेधिरोप्य निःशेषीकृतप्राकारभूषणः । नदद्भिः सोपहासं तैः सुज्जेरग्रं व्यनीयत ॥१८९२॥ तिलकम् ॥

प्रच्छाद्य सत्त्ववान्वक्रं सोंशुकेनैष नोर्चितः । बृहद्राज इवेत्युक्त्वा तस्मै स्वान्यंशुकान्यदात् ॥१८९३॥

प्रावारिताम्बरं कृत्वा हयारूढं च तं पुनः । धैर्येणायोजयत्स्निग्धैर्वचोभिः परिसान्त्वयन् ॥१८९४॥

1895 निर्लुण्ठिततुरंगासिकोशैः परिवृतः खशैः । ततो गृहीत्वा तं श्रीमान्सोमपालान्तिकं ययौ ॥१८९५॥

इमा व्योमाङ्गनाक्रीडत्तडित्तरलविभ्रमाः । भाग्यमेघानुयायिन्यः स्थायिन्यः कस्य संपदः ॥१८९६॥

आराधनधिया स्वैरं यस्याग्रेभोजि भृत्यवत् । गात्राणि कुङ्कुमालेपैरुपाचर्यन्त च स्वयम् ॥१८९७॥

१८७३. 1) Emended; A जरठा°. १८७६. 1) नका written by $A_3$ in space left by $A_1$. १८७७. 1) Emended; A न्यविक्ष्यन्त.—2) $A_1$ २. १८८१. 1) Emended with C; A नानातुधातु°. १८८२. 1) Conjectural reading; A स्वस्मनान्यस्तु. १८८६. 1) Emended, A तिरश्चैर्व १८८७. 1) A °स्कन्धा°.—2) Thus corr by $A_1$ from प्रधावितुम्. १८९०. 1) A °कृशवि°.—2) Thus A without indicating the *lacuna*; perhaps read गर्गालिरिव.—3) Thus $A_1$, apparently corr. from व्यञ्जुम्भिषः: doubtful. १८९२. 1) $A_1$ ३. १८९७. 1) Emended with C; A °रुपचर्यन्त.

सोमपालादिभिः प्रह्वैः स मासैरेव पञ्चषैः । तेषामग्रे तथाभूतस्तिष्ठंल्लोकैर्व्यभाव्यत ॥१८९८॥

लुब्धोपि पलितश्वेतोपान्तश्यामाननः परैः । घनैका इव बद्धोभूच्छोकमूको वनान्तरे ॥१८९९॥

अर्पितं सुज्जिना सोमपालः स्वीकृत्य लक्ष्मकम् । जानन्गृहीतान्कश्मीरान्निजराष्ट्रं न्यवर्तत ॥१९००॥ 1900

लोठनस्यान्तिकादेत्य स भूरैर्माञ्जिकादिभिः । प्रतिभुस्य प्रभूतार्थैः प्रतीहारमयाच्यत ॥१९०१॥

कश्मीरा हि प्रतीहारशिक्षापक्षानुयायिभिः । तदा न कैरमन्यन्त संप्राप्ता डामराण्डजैः ॥१९०२॥

लुब्धेनापि[1] प्रतीहारायत्तं राष्ट्रं जिघृक्षुणा । भूरि चादित्सुना वित्तं राज्ञोकारि न तेन तत् ॥१९०३॥

भज्यमानेष्वमात्येषु प्राप्तेषु नगरं नृपः । हारिते च प्रतीहारे न धैर्यात्पर्यहीयत ॥१९०४॥

यैः सैन्यसारैरैराज्यं पुरा भिक्षाचरोकरोत् । यैश्चाप्युत्कुपिते राष्ट्रे वृत्त्यावर्तिष्ट सुस्सलः ॥१९०५॥ 1905

भूभृता संगृहीतानां शीतज्वररुजा ततः । तेषां दश सहस्राणि योधानां निधनं ययुः ॥१९०६॥

विरराम तदा देशे न मुहूर्तमपि क्वचित् । बान्धवाक्रन्दतुमुलं प्रेतवाद्यमहर्निशम् ॥१९०७॥

घोरधर्मघृणिभ्रान्ताशेषव्यवहृतिस्थितिः । सोनुत्साहहतः कालो नष्टराज्य इवाभवत् ॥१९०८॥

नानादिगन्तरायातैः प्राप्तैः काश्मीरकैरपि । लोहरेथ प्रवृद्धर्द्धि राजद्वारमजायत ॥१९०९॥

काकतालीयसंप्राप्तलोकोत्तरनृपश्रियः । अकुण्ठा लोठनस्यासीत्स्फूर्तिर्वित्तपतेरिव ॥१९१०॥ 1910

तस्याकारपरिक्लेशवैशसाभिन्नवृत्तयः । भोगेष्वबाधा भ्रातृव्यभृत्यपुत्रादयोभवन् ॥१९११॥

नास्थानवर्षी स्थाने वा बद्धमुष्टिर्विभूतिमान् । स वयःपाकनिष्कर्मव्यवहारो व्यभाव्यत ॥१९१२॥

छाया निरङ्कुशमतिः स्वयमातपस्तु छायान्वितः शतश एव निजप्रसङ्गम् ।
दुःखं सुखेन पृथगेवमनन्तदुःखपीडानुवेधविधुरा तु सुखस्य वृत्तिः ॥१९१३॥

तादृगभ्युदयावाप्तेर्मासे न्यूनेधिके गते । एकसूनोः सुतो दिल्हो लोठनस्य व्यपद्यत ॥१९१४॥

तमेकपुत्रा शोचन्ती शोकशङ्कुहताशया । ततः प्रपेदे प्रलयं मल्ला लोठनवल्लभा ॥१९१५॥ 1915

पत्न्यामभिन्नभावायां गुणज्येष्ठे तथात्मजे । विपन्ने स तया लक्ष्म्या न कृत्यं किंचिदैक्षत ॥१९१६॥

निःस्नेहत्वस्य भूपालसुलभस्य विजृम्भितम् । मोहनी वा श्रियः शक्तिर्यदज्ञासीत्पुनः सुखम् ॥१९१७॥

अकारयन्निर्धनोपि तथा वृद्धस्य कालवित् । लक्षैः षट्त्रिंशता मोक्षं लक्ष्मकस्य क्षमापतिः ॥१९१८॥

दिष्टवृद्धिपरिक्षिप्तपुष्पवृष्टी जनैः पथि । तस्मिन्प्राप्ते न कोशासीद्राज्ञा प्रत्याहृतां श्रियम् ॥१९१९॥

स लक्ष्मीमहिमक्षिप्तविस्मृताभिभवप्रथः । प्रभवन्पुनरेवासीन्निग्रहानुग्रहक्षमः ॥१९२०॥ 1920

धनप्रलोभनिर्नष्टसर्वावष्टम्भपाटवः । सुज्जिः साचिव्यमव्याजं भेजे लोठनभूपतेः ॥१९२१॥

दत्तवान्भागिकसुतामविश्वासमपाहरत् । स तस्याश्चप्रियापायदुःस्थितिव्यथया समम् ॥१९२२॥

अभ्यर्थ्य पार्थिवं पद्मरथं चानीतवान्कृती । तस्य सोमलदेव्याख्यामुद्वाहाय तदात्मजाम् ॥१९२३॥

एवं प्रधानसंबन्धैर्बद्धमूलं विधाय तम् । सोव्याहतस्य साचिव्यमहस्यानृण्यमाययौ ॥१९२४॥

अचिन्तयच्च कश्मीरप्रवेशं डामरादिभिः । बहुशः प्रार्थ्यमानेन प्रेरितो नवभूभुजा ॥१९२५॥ 1925

इत्थंभूतं कृतैकर्यं च समं सीमान्तभूमिपैः । अथ छलयितुं शत्रुं नीतिं प्रायुङ्क्त सौस्सलिः ॥१९२६॥

---

१९०३. [1]) Emended, A लब्धेन. १९२१. [1]) व omitted in A; supplied with C.

तत्रोदयद्वारपतिस्तस्यारम्भे गभीरधीः । अलुप्तसत्त्वः स्तुत्यत्वं सारेतरविदामगात् ॥१९२७॥
तत्रत्यः स हि निर्नष्टसर्वस्वोप्यर्थितोहितैः । दानमानादिभिः स्वामिकृत्ये नित्योदितो[1]ऽभवत् ॥१९२८॥
वनप्रस्थाभिधे स्थाने लोहरादूरगे स्थितः । अखिन्नोच्छिन्नसंग्रामैर्भेदं निन्ये द्विषद्बलम् ॥१९२९॥
1930 कटाक्षिताभिप्रायेस्मिन्मिथ्या तथ्येन वा दधुः । भयं लोठनभूपालान्माञ्जिकेन्द्रारका[1]दयः ॥१९३०॥
हन्तव्यांश्चाक्रिकानस्मान्सुज्जौ न्यस्ताशयो नृपः । वेत्ति तत्प्रेरणेनासौ तदाशङ्कितेति ते ॥१९३१॥
संजाते सहजाख्यायां राज्यां सुस्सलभूपतेः । कुर्मो मल्लार्जुनं भूपं लोहरेस्मिन्हिताय वः ॥१९३२॥
तत्प्रेमाणगिनाकस्मादभिसंधत्त[1] लोठनम् । संदिदेशाथ तान्धीमाञ्जयसिंहो महीपतिः ॥१९३३॥
व्याजेन राज्ञा संदिष्टं तत्कोट्टं स्वीचिकीर्षुणा । प्रतिभुतमविश्वस्तैस्तस्मिंस्तैश्च तथैव तत् ॥१९३४॥
1935 मल्लार्जुनं लोठनोथ ज्ञात्वा प्रारब्धचाक्रिकम् । तदाद्यान्भ्रातृसूनुस्ताश्चाक्रिकानप्यबन्धयत् ॥१९३५॥
अवरुद्धातनू[1]जेन शङ्कां सौस्सलिना भजन् । परं विग्रहराजेन प्रातिहार्यमजिग्रहत् ॥१९३६॥
राजा व्याजात्पितृव्येण बद्धसंधिरुपायवित् । तत्वरे हारितं राज्यं तैस्तैः स्वीकर्तुमुद्यतैः ॥१९३७॥
विसृज्य शूरं निष्कम्पराज्यः सुज्जेः परिभ्रमात् । मासान्कांश्चिदसंक्षोभो वृन्दावार्तैष्ट लोठनः ॥१९३८॥
सुज्जिः पद्मरथापत्यं प्राक्कन्यामानिनाय याम् । अनूढाया विवाहाय तस्या[1] गातरमागताम् ॥१९३९॥
1940 आकर्ण्य तेजलादीनां[1] प्रसङ्गेस्मिन्सगौरवाम् । सामात्यो[2] दर्पितपुरं कृतप्रत्युद्गता ययौ ॥१९४०॥
माञ्जिकाद्यैरथ प्राप्तरन्ध्रैर्निर्गत्य बन्धनात् । मल्लार्जुनः कोट्ट[1]राज्ये संहतैरभ्यषिच्यत ॥१९४१॥
ठक्कुरैः प्राग्वदानीतैः प्रतोलीतलमागतान् । भृत्यांस्ते सिंहभूभर्तुः प्रविविक्षून्न्यवारयन्[1] ॥१९४२॥
षष्ठेब्दे लोठनः शुक्लत्रयोदश्यां स फाल्गुने[1] । यथायुज्यत राज्येन तथैवाशु व्ययुज्यत ॥१९४३॥
अनूढां कन्यकां मूढः संपदं चाव्ययीकृताम् । प्राप्तां परस्य भोग्यत्वं भाग्यहीनः शुशोच सः ॥१९४४॥
1945 अटित्वाद्वालिका[1]दिभ्यो देशेभ्यो नष्टशक्तिना । तेन सुज्जिबलात्कोशशेषः कश्चिदवाप्यत ॥१९४५॥
पूर्वाहूतान्सिंहभूभृद्भृत्यानभ्यकृत्य माञ्जिकः । निनायाप्रतिमल्लत्वं मल्लार्जुनमहीभुजम् ॥१९४६॥
तेनातिव्ययिना नव्यवयसा भूभुजा कृतम् । मौक्तिकैः पूगविच्छेदे ताम्बूलार्पणमेकदा ॥१९४७॥
वर्षतो विषयौत्सुक्याद्धाटकं कुट्टनादिषु । त्यागित्वं तस्य तत्त्वज्ञैः सदोषमुदघोष्यत ॥१९४८॥
प्रजोपतापोपचितः कोशः सुस्सलभूपतेः । तेनातिव्ययिना स्वैरमनुरूपव्ययः कृतः ॥१९४९॥
1950 गणिकाचारणद्रोग्धृविटचेटादिपेटकम् । साधून्विधूय सोपुष्णाद्दु[1]र्मौष्ण्यः कुमं[2]तिर्यतः ॥१९५०॥
सपत्नसादहितसाद्यदि वा वह्निसाद्भवेत् । द्रविणं क्षोणिपालानां जनतोपद्रवार्जितम् ॥१९५१॥
प्रजापीडनजं वित्तं जयापीडमहीभुजः । दास्याः पुत्रैरुत्पलाद्यैर्विलुप्तं नमुरन्तकैः[1] ॥१९५२॥
लोकसंक्लेशनोद्भूतः कोशः शंकरवर्मणः । प्रभाकरादिभिः स्वैरं जायाजारैरभुज्यत ॥१९५३॥

१९२८. [1]) Thus A; perhaps read नित्योद्यतो°. १९३०. [1]) Thus corr. by $A_1$ from °केन्द्राकादय.. Perhaps read °केन्द्राकरा°; cf. viii. 1818. १९३३. [1]) Emended with C; A °सन्धात्त. १९३६. [1]) Emended; A अवरुद्धतनू. १९३९. [1]) Emended with C; A तस्य. १९४०. [1]) Thus A; doubtful.—[2]) Doubtful emendation; A सामान्यां. १९४१. [1]) Emended; A कोष्ठराज्ये. १९४२. [1]) Emended A °वारयत्. १९४३. [1]) A फाल्गुणे. १९४५. [1]) Thus $A_1$; $A_2$ °स्वाटिलिका°; cf. viii. 581. १९५०. [1]) Thus $A_1$ in margin; in text °ष्णाद्दुर्मौष्ण:.—[2]) Thus corr. by $A_1$ from कुपति°. १९५२. [1]) Emended with C; $A_1$ नमुरन्तकैः; the reading नमूनर्तकैः, given by $A_2$ in margin, has been struck out.

अनङ्गवशगाः पङ्क्तेरङ्गना वृजिनार्जितम् । ददुः सुगन्धादित्याय धनं संभोगभागिने ॥१९५४॥
राज्ञो यशस्करस्यार्थान्व्ययीचक्रेतिसंचितान् । अङ्गनानङ्गवैवश्यादालिङ्गितजनंगमा ॥१९५५॥ 1955
पूर्वराजार्जितं पार्वगुप्तिः प्राप्य धनं मृतः । दाता जार्योपपत्येन तुङ्गादीनामजायत ॥१९५६॥
संग्रामराजः श्रीलेखामुखाब्जमधुपैर्धनी । मुषितो व्यङ्गसुहार्थैर्निविडोपार्जनस्पृहः ॥१९५७॥
अप्रत्यवेक्षाक्षपितप्रजस्य जगदूर्जिता । अन्तेनन्तमहीभर्तुर्विभूतिर्भस्मसादभूत् ॥१९५८॥
पुत्रेणापात्रसाच्चार्या जारसात्तरसा कृतः । कुकलाकौशलोद्भूतः कोशः[1] कलशभूपतेः ॥१९५९॥
सह गेहैः समं स्त्रीभिः सत्रा पुत्रैरभूद्धनम् । अभ्रान्तार्जनतर्षस्य हर्षदेवस्य वह्निसात् ॥१९६०॥ 1960
चन्द्रापीडोच्चलावन्तिवर्माद्यैर्धर्मनिष्ठुरैः । निष्ठा न्याय्यस्य कोशस्य नावाप्यनुचिता क्वचित् ॥१९६१॥
चौरचाक्रिकसीमान्तभूभृड्डश्यात्रिटादयः । लुण्टिं प्रारेभिरे पुष्टां नवे मल्लार्जुनोदये ॥१९६२॥
पञ्चायिस्त्राप्यरीन्भूभृत्ताम्यन्त्रिघटितेप्सितः । अथ चित्ररथं तूर्णमास्कन्दाय व्यसर्जयत् ॥१९६३॥
द्वारपाद्मयोस्तुल्याधीकारेण प्रवर्धितः । सोनन्तसामन्तयुतः पदं फुल्लपुरे व्यधात् ॥१९६४॥
उत्सेहिरे न वितता अपि दुर्गसमाश्रयात् । मल्लार्जुनचमूर्जन्ये जेतुं तदनुजीविनः ॥१९६५॥ 1965
भेदाय कोट्टमारूढस्तद्भृत्यो राजसंमतः । मल्लार्जुनानुगै रात्रौ हतः संवर्धनाभिधः ॥१९६६॥
युद्धासाध्येपि तिष्ठन्तः कोट्टे भयविधेयताम् । कोष्ठेश्वरेन्वगायाते तत्रामित्राः प्रपेदिरे ॥१९६७॥
प्रतिभुतकरो बद्धसंधिः स व्यसृजत्ततः । सभाजनाय जननीं तेषां मल्लार्जुनोन्तिकम् ॥१९६८॥
सा वैधव्य[1]विविक्तेन वेषेणै[2]श्वर्यशोभिना । कोष्ठेश्वरादीन्सोत्कण्ठांश्चक्रे चपलचेतसः ॥१९६९॥
तस्यां गृहीतविस्रम्भं व्यावृत्तायां तदन्तिकात् । द्वारेशाय ददावूरीकृतं मल्लार्जुनः करम् ॥१९७०॥ 1970
आकृष्टो राजजननीचक्षूरागेण कोष्ठकः । दिदृक्षाकपटात्कोट्टमारुरोह मितानुगः ॥१९७१॥
अर्धकठेन[1] सहितस्तेन चित्ररथस्ततः । संभूतप्राभृतो भूमिभर्तुः सविधमाययौ ॥१९७२॥
राजा तु संमन्त्र्य ततः प्रायुङ्क्ताहतिशालिना । उदयद्वारपतिना नीति जेतुमरीन्पुनः ॥१९७३॥
वीतास्कन्दो लोठनेपि गते पद्मरथान्तिकम् । लेभेभिनवभूपालः किंचित्पादप्रसारिकाम् ॥१९७४॥
उदूढवान्सोमलाख्यां तां पद्मरथकन्यकाम् । उपयेमे धृतायामो नागपालात्मजामपि ॥१९७५॥ 1975
तस्मादहंक्रियामूढाल्लेभिरे गूढकैतवाः । भूभुजः सोमपालाद्या भृत्यभावेन वेतनम् ॥१९७६॥
कविगायनजल्पाकयोधचारणचेष्टितैः । बहवो मुमुषुर्धूर्तास्तेपि तं राजबीजिनः ॥१९७७॥
स बाल्यान्निष्परीपाकप्रज्ञो दृष्टो रटन्बहु । जज्ञे वाक्प्रौढिमात्रेण बालिशैः[1] कुशलाशयः ॥१९७८॥
केतोरिवाभद्रहेतोः प्रदीप्तं वदनं विना । अनिष्ठुराकृतेर्दृष्टं तस्यान्यत्र न सौष्ठवम् ॥१९७९॥
अत्रान्तरे नृपः सुज्जिं संजपाहोमविक्रमम् । माभून्मल्लार्जुनेनापि भिन्नोसाविति चिन्तयन् ॥१९८०॥ 1980
निर्वासने प्रवेशे च प्रभुः सुज्जेस्ततोधिकम् । तात्कालिकीं प्रतीहारः शक्तिं कांचिददर्शयत् ॥१९८१॥
स कम्पनाद्यधीकारस्रजं राजविसर्जिताम् । वितरन्सुज्जये राजस्थानकार्यस्रजं विना ॥१९८२॥
निस्तोषाय गृहायातसोमपालानुरोधतः । प्रसीदन्वामहस्तेन निजजूटस्रजं मदात् ॥१९८३॥

---

१९५९ [1]) A कोष. १९६९. [1]) Emended; A वैधव्यं वि°.—[2]) Emended, A वेषैनैश्व° १९७२ [1]) Emended, A अर्धफ्लेन. १९७८ [1]) A बालिशो

आकृष्य प्रददौ तस्य तत्प्राग्निपरितोषिणः । आप्यायसान्द्रया दृष्ट्या यत्संपद्वीरुधो व्यधात् ॥१९८४॥ वक्कलकम्[1]॥

1985 भर्त्रे हिताय सौहार्दं विधूयोदयधन्ययोः । अभजद्रिल्हणः सुज्जेः प्रद्वेशे प्रतिलोमताम् ॥१९८५॥

प्रत्युद्गमेन संमान्य सुज्जिं प्राद्वेशयन्नृपः । देशाद्विरास्थद्धन्यादीन्मानसान्न तु तद्गिरा ॥१९८६॥

कृतागाः क्ष्मापतौ लब्धक्षणे तीक्ष्णैर्जिघांसति । कोष्ठेश्वरः पलायिष्ट ज्ञातोदन्तस्तदन्तिकात् ॥१९८७॥

आस्कन्दायागते राज्ञि गृहीतमनुजेश्वरे । स्वपक्षभेदोपहतः सोथ देशान्तरं ययौ ॥१९८८॥

लोठनस्तु निजग्राह कांश्चिदालम्ब्य ठक्कुरान् । बप्पनीलाभिधे स्थाने वसन्मल्लार्जुनं बलात् ॥१९८९॥

1990 तत्र दृष्टमसंभाव्यमेवास्य खलु पौरुषम् । परिभ्रष्टोपि यद्रुद्धपदं तमजयत्तदा ॥१९९०॥

जहार तुरगांल्लुण्ठिं चकाराट्टिलिकापणे । मार्गवृक्षादिभङ्गं च — —[1] सर्वत्र सोकरोत् ॥१९९१॥

राजराजाभिधानेन डामरेणार्थितस्ततः । कश्मीरराज्यसंप्राप्त्यै क्रमराज्यमगाहत ॥१९९२॥

तदवेत्य समीपस्थे हते चित्ररथेन सः । तस्मिन्नन्यत्र निर्यातो नियमाद्ब्धामलीं स्थितः॥

तस्मिन्नास्कन्दमसकृद्ददस्यट्टलिकामपि । अवरोद्धुमशक्तोभूत्कोट्टे मल्लार्जुनो वसन्[1] ॥१९९४॥

1995 भ्रातृव्येण पितृव्यस्य दापयित्वा धनं बहु । ततः कोष्ठेश्वरो यात्रासज्जः संधिं न्यबन्धयत् ॥१९९५॥

लोहरे विहितस्थैर्यो[1] गृहीत्वा लोठनं ततः । कश्मीरोर्व्यां पपातासौ विजिगीषुः[2] क्ष्माभुजा ॥१९९६॥

गिरीनुल्लङ्घ्य कार्कोटद्रङ्गे विहितवान्पदम् । निपत्य मार्गेनुद्धाते यावदन्यैश्च डामरैः ॥१९९७॥

नावाप योगं निर्गत्य क्षिप्रकारी क्ष्मापतिः । सर्वोद्योगेन तं तावदुत्थानोपहतं व्यधात् ॥१९९८॥

अत्रान्तरे प्रतीहारः प्रापास्तमपपीडया[1] । न संपत्स्वल्पपुण्यानामनपायित्वमायुषः ॥१९९९॥

उत्सारणप्रियतया परिरुद्धसर्वद्वारं गृहे निरनुरोधतया वसन्तः ।

2000 संपल्लघूकृतधियोप्रतिघप्रवृत्तेर्धिग्जानते न रभसाग्नियतेर्निपातम् ॥२०००॥

कुर्वाणोत्सारणं तस्य गृहजा सततं नृणाम् । नाज्ञासीत्सुखसुप्तस्य पृष्ठे पतितमन्तकम् ॥२००१॥

ज्वरितः स हि निष्ठ्यूतज्वरः स्वपिति विज्वरः । विदित्वेति न विज्ञातः स्वपन्नेव मृतस्तदा ॥२००२॥

सलोठने कोष्ठकेथ प्रयाते नृपतिः पुनः । न स मल्लार्जुनो नापि कोष्ठको न स लोठनः ॥२००३॥

छद्मनोदयनं पार्श्वस्थितं मल्लार्जुनोवधीत् । तस्मै चुक्रोध माध्यस्थ्ये स्थापितस्तेन कोष्ठकः ॥२००४॥

2005 अनुनिन्ये न तं खिन्नं स संभृतबलस्ततः । अभिषेणयितुं क्रोधादधावत्सहलोठनम् ॥२००५॥

कोष्ठको मल्लकोष्ठाद्यैर्मितैर्युक्तोपि सादिभिः । तीर्त्वा परोष्णीं तत्सेनां निर्ममाथाप्रमाथिनीम् ॥२००६॥

हतेषु तेषु संग्रामे खशसैन्धवकादिषु । वधं प्राप्तः सिंहभूभृद्द्वेषान्न स नृपो हतः ॥२००७॥

आरूढः कोट्टमूर्धानं[1] मानमूर्धः परिच्युतः । भग्नप्रतापो भूयोपि समधत्त स कोष्ठकम् ॥२००८॥

विसृज्य लोठनं तिष्ठन्निर्वैरमगमत्पुनः । अनिर्वाहितदेयेन तेन द्वैधं स डामरः ॥२००९॥

2010 वद्धाधिकारिणः शुल्कं गृह्णताकारि राजवत् । तेन स्वनाम्ना भाण्डेषु द्रङ्गे सिन्दूरमुद्रणम्[1] ॥२०१०॥

जतुसंहतयोः काचकलशीदलयोरिव । क्षणे क्षणे संधिभङ्गस्तयोः समुदपद्यत ॥२०११॥

---

१९८४. [1]) A₁ ४. १९९१. [1]) A₁ indicates here a *lacuna* of two *aksharas*; C तदा. १९९४. [1]) Emended; A °वसन्. १९९६. [1]) Emended; A °स्थैर्यो.— [2]) Emended with C; A °विजिगृक्षुः. १९९९. [1]) Emended with C; A °हारप्रापास्तमपपीडया. २००८. [1]) Emended with C; A कोंडमू°. २०१०. [1]) Emended; A °मुद्रणाम्.

निर्व्यूढभिन्नैर्वाग्मिक्ष्यैर्विरागं लोहरेश्वरः । निन्ये लवन्यं सोप्येनं स्पर्धाबन्धैरनङ्कुशैः ||२०१२||

डामरेण ततो दत्त्वास्कन्दं तत्कटकान्तरम् । पराध्र्यायुधधुर्याश्वहरणात्सु—[1]रं कृतम् ||२०१३||

दत्त्वा ह्र——[1]रायत्यां विषमैर्हठपौरुषैः । एवं तं कोष्ठको मूढः सुखोच्छेदं व्यधाद्विषाम् ||२०१४||

तनयादानसंबन्धाच्छ्वशुरं मुख्यमन्त्रिणाम् । अत्रान्तरे नृपो हन्तुं माञ्जिकं स व्यचिन्तयत् ||२०१५|| 2015

आसीत्कठोरतारुण्यतरङ्गितमनोभवः । सुव्यक्तं स हि तन्मातुरौपपत्येन संमतः ||२०१६||

आहारावसरे तीक्ष्णाः कृतसंज्ञाः क्षमाभुजा । दत्तप्रहरणाः प्राणैर्भुञ्जानं तं व्ययोजयन् ||२०१७||

धुन्वन्नसिपटं बद्धवीरपट्टो रटन्बहु । निर्लुण्ठयन्स तत्सेनां तां तामारभटीं व्यधात् ||२०१८||

अत्राशिष्यत न द्रोहमध्यादिन्दाकरोप्यहो[1] । राज्ञा विषमितस्तेन रसदानेन स स्वयम् ||२०१९||

दैवतोत्सारितारातिस्ततः सिंहमहीपतिः । संदधे कोष्ठकं सुज्जि प्राहिणोद्विजयाय च ||२०२०|| 2020

मार्गस्य याममात्रेण गम्यस्यान्तिकमाप सः । यावत्तुरंगहरणात्कोष्ठकेनाकुलीकृतः ||२०२१||

अन्तर्भेदाकुलस्तावत्प्रत्यवस्थातुमक्षमः । गृहीतकोशः संत्यज्य कोट्टं[1] मल्लार्जुनो ययौ ||२०२२||

राज्यभ्रष्टः स निर्लुण्ठ्यमानो मार्गेषु तस्करैः । अन्ननाहोन्मुखो रक्षन्कोशशेषं कथंचन ||२०२३||

भ्रष्टमष्टादशशरद्व्यर्धाष्टमवत्सरे । राज्यात्तेन द्वितीयस्यां वैशाखस्यासिते[2]हनि ||२०२४||

दाता शिखामृतरुचेरमृतं विलब्ध——[1]ण्यकृत्समिति लूनशिराः कृतश्च ।
ईशेन यत्र तदकार्युपकर्तुरस्तु तत्रापरः क इव संनिहितद्विजिह्वः ||२०२५|| 2025

मुक्ता इमा इति जलं नलिनेषु लीनं ज्ञातृत्वमेतदिति जाड्यमिनेषु लग्नम् ।
यज्ज्ञायते किमपि हन्त विमोहनी सा शक्तिः श्रियः स्फुरति कापि तदम्बयायाः ||२०२६||

घ्नन्त्यद्भुतप्रहरणा विपिनेषु केपि घ्राणेन केचन दृशाथ रसज्ञयान्ये ।
ते केपि सन्ति तु नरेन्द्रगृहेषु हिंस्रा वाचैव ये विरचयन्ति किलोपघातम् ||२०२७||

ज्योतीरसाश्मन इवाश्रितमीश्वरस्य निर्दग्धुमिन्धनमिवाप्रगतं न शक्ताः ।
पश्चाद्भवेद्यदि स तत्प्रसृतावकाशाः कुर्युः खला रविकरा इव भस्मशेषम् ||२०२८||

काम्पिलं हर्षटं कोट्टं नीतवान्मण्डलेशिताम् । उदयैः कोटभृत्यानां संग्रहं कम्पनाधिपः ||२०२९||

कुर्वन्शय्यां पुनर्नेतुं मण्डलं तद्व्यलम्बत । दिनानि कतिचित्तत्र यावत्प्रकृतिदुर्जनैः ||२०३०|| 2030

विटैरसूयाविषमैः प्रसादावसरो नृपः । तावत्कलुषतां तस्मिन्नुपजापैरनीयत ||२०३१|| तिलकम्[1] ||

राजा भवन्परः कोस्तु स्वविचारदृढक्रियः । एषोपि शिशुवद्भूभृद्यत्र धूर्तैः प्रनर्त्यते ||२०३२||

शैशवे बालिश[1]प्रायैः संस्तुतैर्जाड्यमर्पितम् । प्रौढावपि न वा यायाद्राज्ञः कार्ष्ण्यं[2] मणेरिव ||२०३३||

भृत्यान्तरापरिज्ञानमात्रेण जगतीभुजाम् । निरागसो वधपातः कष्टं राष्ट्रस्य जायते ||२०३४||

---

२०१३. [1]) $A_1$ indicates here a *lacuna* of one *akshara*; C सुस्थिरं. २०१४. [1]) Thus or स्व—— $A_1$; C दत्त्वाभयं तेरायत्यां. २०१९. [1]) Cf. viii. 1818. 1930. २०२२. [1]) Emended; A कोट्टे. २०२४. [1]) Thus A; text evidently corrupt, perhaps read °ह्व्यस्याष्टम°.—[2]) Thus corr. by later hand from $A_1$ °स्याहितेहनि. २०२५. [1]) Thus $A_1$; C विलुब्धकार्पण्यकृ°; perhaps read विलुब्धकारुण्यकृ°. २०३१. [1]) $A_2$ writes here ४ instead of तिलकम् (?). २०३३. [1]) A वालि°.—[2]) Thus corr. by $A_3$ from $A_1$ काश्यं.

2035 कृत्ये व्यवसितेसाध्ये हास्यः स्याल्लक्ष्मकादिवत् । सुज्जिः प्रायोजि राजापौरैर्निर्जेतुमिति लोहरम् ॥२०३५॥
निर्व्यूढाद्भुतकार्येथ तस्मिन्ब्रह्मास्त्रतुल्यया । अमोघया प्रजहुस्ते पापाः पैशुनविद्यया ॥२०३६॥
गाम्भीर्यालक्ष्यविकृतैः प्रीत्यालापैर्महीपतेः । प्रत्यायातः कलुषतां नाज्ञासीत्कम्पनापतिः ॥२०३७॥
प्रकृत्या तस्य निर्व्रीडतया शङ्कास्य तादृशम् । प्रियं कृतवतश्च स्यादविश्वासोथ वा कथम् ॥२०३८॥
प्रीतिरासीन्न नृपतेस्तत्कृत्यैरुचितैरपि । अप्रियप्रमदालापैर्विरक्तस्येव कामिनः ॥२०३९॥
2040 जित्वा राष्ट्रद्वयं प्राप्तं हारितं नृपतेरिति । बहुमानेन दर्पाच्च स्वच्छन्दं स व्यवाहरत् ॥२०४०॥
पौरानगारहरणाद्यपकारैर्निरङ्कुशाः । तद्बन्धवो बाधमाना विरागमनयञ्जनम् ॥ २०४१॥
निजागःस्मरणात्कोष्ठेश्वरी न व्यश्वसीन्नृपे । न पितृव्येपि भूपालकोपाविष्कृतविक्रिये ॥२०४२॥
कोशं प्रजोपतापेन संचिन्वन्सुज्जिना समम् । संबन्धकृच्चित्ररथो नाभूदभिमतः प्रभोः ॥२०४३॥
धन्योदयौ[1] नृपः सुज्जिदाक्षिण्यालक्ष्यसौहृदः । अपुष्णाद्विणैर्गूढं राजपुर्यां[1] कृतस्थिती ॥२०४४॥
2045 तौ चावालगतां[1] शीतज्वरनष्टपरिच्छदौ । मल्लार्जुनस्य साम्राज्यभ्रंशेपि विपुलश्रियः ॥२०४५॥
सुज्जिद्वेषात्पुरा दूतैराहूतो लक्ष्मकेण यः । आगच्छेत्सज्ञपालः स प्राप राजपुरीं तदा ॥२०४६॥
सुज्जिचित्ररथाभ्यां तं रुद्धचेष्टेन भूभुजा । अविसृष्टप्रवेशाज्ञं दूतैर्मल्लार्जुनोभजत् ॥२०४७॥
तन्निमित्तं स केनापि सामन्तेन सहाध्वनि । संजातकलहे शस्त्रक्षतो लक्ष्म्या व्ययुज्यत ॥२०४८॥
तथाभूतमपि स्वर्णं भूर्युरीकृत्य नाशकत् । यत्तन्मल्लार्जुनो नेतुं कार्यज्ञैस्तदपूज्यत ॥२०४९॥
2050 सोस्वतन्त्रेण राज्ञा च सौजन्याद्रिल्हणेन च । दूतैः प्रच्छन्नमाहूतो रभसादाययौ ततः ॥२०५०॥
न न्यग्रहीष्यच्चेद्धन्युर्मामप्युच्चैस्तु[1] चिन्तयन् । अमित्रविषमे मार्गे पुरं साहसिकोविशत् ॥२०५१॥
स कन्यकुब्जगौडादिमण्डलेषु महीभुजाम् । स्पर्धया लब्धसत्कारो भूपतेर्मन्त्रियन्त्रिताम् ॥२०५२॥
अनवाप्य निजे देशे सत्क्रियां दुःखितोभवत् । राजधान्यन्तिकैः पौरैः प्रसृतास्तु व्यलोक्यत ॥२०५३॥
भूपालोगणयित्वाथ मन्त्रिणो दत्तदर्शनः । भेजे स्वहस्तताम्बूलदानप्रक्रिययैव तम् ॥२०५४॥
2055 निर्ष्किचनोपि सन्ख्यातिमात्रेणानुगतो जनैः । यातायातं नृपगृहे कुर्वञ्शत्रूनकम्पयत् ॥२०५५॥
व्याहारव्यवहारादि व्यालोक्यालौकिकाकृतेः । पुरुषान्तरवित्सुज्जिस्तस्य स्वैरमवेपत ॥२०५६॥
दध्यौ सोथ ध्रुवं राष्ट्रेस्वर्वसर्वंकषक्रियम् । नैवमेषाद्भुतं भूतमेनावृक्शान्तिमेष्यति ॥२०५७॥
तांस्तान्देशान्तरे वीरानुत्सिक्तान्दृष्टवान्स च । तं पर्यालोच्य विभ्रान्ति सोत्सेकानाममन्यत. ॥२०५८॥
भवितव्यतया दर्पेणाथ नीतः स्वतन्त्रताम् । परिवादावहं सुज्जिस्ततो यत्तद्व्यवाहरत् ॥२०५९॥
2060 स्वानुगैर्लुण्ठितं रूक्षमाचक्षाणं रुषा द्विजम् । प्रासैर्मडवराज्यस्थः स सृगालमिवावधीत् ॥२०६०॥
बाढं कुकर्मणा तेन विप्लाव्य जनमागतम् । तं प्रत्युपक्रियं लोको विरागं नगरेप्यगात् ॥२०६१॥
अत्रान्तरे बन्धुमेकं व्यधुः कमलियादयः । अगण्यप्रायमुत्सेकादुत्तमप्रक्रियास्पदम् ॥२०६२॥
मयि सत्यपरोपि स्यात्किमनुग्राहकः स्मयात् । अकारि चारणप्रायस्तादृक्कोपीति सुज्जिना ॥२०६३॥

---

२०४४. [1]) Emended ; A धन्योदयौ. २०४४. [1]) Emended ; A राज्यपुर्यां. २०४५. [1]) Doubtful emendation ; A चावालगतौः G चारालगतौ. २०५१. [1]) न supplied with C ; A न्यग्र ⁻ च.

संजातयौनसंबन्धबन्धः कमलियादिभिः । अथास्याक्षिगतोत्यर्थं सामर्थ्याद्रिल्हणोप्यभूत् ॥२०६४॥
अल्पेन हेतुनोद्भूतं द्वैतं तेषां च तस्य च । खलपैशुनसेकैस्तत्प्रापाशु शतशाखताम् ॥२०६५॥ 2065
प्रकृत्योत्सिक्तमुत्सेकावहैः समुददीदिपत्[1] । दुर्मन्त्रैर्विग्रहैकाग्र्ये साहदेविस्तमुल्हणः ॥२०६६॥
अस्मानां सहास्माभिः क्षमते समशीर्षिकाम् । कृतघ्नोयमिति स्वैरं मन्युं राज्यपि सोग्रहीत् ॥२०६७॥
बिभ्यत्तु भूपतिस्तस्माद्रिल्हणं बाह्यभृत्यवत् । मन्त्रस्वैरकथाद्येषु विस्रम्भेषु व्यवर्जयत् ॥२०६८॥
स तु धूर्तत्वदुर्लक्ष्यतादृक्षस्वामिवैकृतः । स्वेषां धैर्यं परेषां तु संत्रासं माययातनोत् ॥२०६९॥
समप्रशक्तिराकाङ्क्ष्यसंस्तवः पक्षयोर्द्वयोः । तस्य तु प्रययौ सज्जपालो दानेन मित्रताम् ॥२०७०॥ 2070
संनद्धयोः प्रविशतोरन्योन्यस्पर्धया तयोः । क्षणे क्षणे राजधानी ययौ संभ्रमलोलताम् ॥२०७१॥
सुज्जिः सभूपानाक्षेप्तुं प्रतिपक्षान्युयुत्सया । महीमानोत्सवास्थाने संक्षोभमुदपादयत् ॥२०७२॥
कृकाटिकान्यस्तहस्तो द्वाःस्थेनावेदितो हि सः । तं निर्भर्त्स्य शिलाक्षेपं क्रोधरूक्षाक्षरोकरोत् ॥२०७३॥
लिखितैरिव तान्सर्वैः सोढुं रक्षणमीशितुः । मिथ्या तथ्यमिवोदीर्य संमन्त्रद्भिः समर्थताम् ॥२०७४॥
उपावेशयदभ्यर्णे भूपतिः परिसान्त्व्य तम् । सत्यस्मिन्नास्ति नः किंचिदित्यन्तस्तु व्यचिन्तयत् ॥२०७५॥ 2075
चक्रे मडवराज्यस्थैरथ प्रायो द्विजातिभिः । न सुज्जेः कम्पनेशत्वमिच्छाम इति वादिभिः ॥२०७६॥
अन्विष्य विद्विषः शङ्कां मन्त्रविभ्रंशि रिल्हणः । संनद्धसैन्यमानिन्ये पञ्चचन्द्रं तदप्रियम् ॥२०७७॥
शशङ्के सज्जपालाच्च तस्माच्च बहुसैनिकात् । सुज्जिरन्यानगणयन्नबुद्धास्य च तान्रिपुः ॥२०७८॥
आस्कन्दभीत्या निर्गत्य हयारोहैः समं गृहात् । व्यूढानीको निरुद्धातो जजागाराथ सोध्वनि ॥२०७९॥
भूपतिप्रातिलोम्येन वर्तमानस्तदाभवत् । कोष्ठेश्वरोपि संनद्धः सुज्जिना बद्धसौहृदः ॥२०८०॥ 2080
स्थितमप्रातिलोम्येन सोवधीन्मनुजेश्वरम् । इति द्वेष्योपि नितरां द्वेष्यतां नृपतेरगात् ॥२०८१॥
तथा स्थिते निशीथिन्यामाचख्युस्तस्य विद्विषः[1] । बुभुक्षाहेतुतां राज्ञः स्वगुप्त्यै तेन या कृता ॥२०८२॥
अतथ्यं तथ्यवद्यस्तु तथ्यं वातथ्यवन्नृपः । यः पश्येन्मूढवत्सोर्थैस्त्यक्तोनर्थैः कदर्थ्यते ॥२०८३॥
रत्नज्योतिर्हुतवहधिया त्यज्यते दृष्टिपातः श्यावाक्षाणामितरविषयः स्वस्य संभाव्यते च ।
वस्त्वेकैकं यदिह न मृषा तन्मृषा यन्मृषा तत्तथ्येनेत्थं किमिव न जनैर्दृश्यते तत्त्वभून्यैः ॥२०८४॥
राजाथ तद्वधादन्यदजानन्दीस्थ्यभेषजम् । न्ययुङ्क्त तस्य तीक्ष्णत्वे सज्जपालं महौजसः ॥२०८५॥ 2085
स कापुरुषवद्धीरः प्रहर्तुं छद्मनाक्षमः । काङ्क्षमाक्षिप्य तं हन्तुं तत्र नैक्षत क्षणम् ॥२०८६॥
मायाप्रयोगानन्योन्यमुद्दिश्य स्पृशतोर्द्वयोः । क्षणे क्षणेभजद्राष्ट्रं त्रासोल्लासविलोलताम् ॥२०८७॥
प्रत्याशङ्क्योदयं रात्रौ सुज्जौ जाग्रति पूर्ववत् । अव्यग्रयामिकग्रामं राजधामाप्यजायत ॥२०८८॥
राष्ट्रान्निर्वासने रिल्हणस्य सुज्जेरभीप्सिते । पार्थिवोप्यनुमन्ताभूदनीशः प्रत्यवस्थितौ ॥२०८९॥
स निर्यियासुरामन्त्र्य तत्खेदात्क्षुभिताः प्रजाः । संदर्श्य द्वारपतिना राज्ञो युक्त्या समर्थितः ॥२०९०॥ 2090
संमन्त्र्य नृपा[1] मैत्रीप्रार्थिना सुज्जिना समम् । पीत्वा कोशं सज्जपालः प्राप्तो रात्रौ व्यजिज्ञपत् ॥२०९१॥

---

२०६६. [1]) Thus corr. by $A_2$ from $A_1$ समुददीपित. २०६७. [1]) Emended; A आसम°. २०८२. [1]) Emended with C; A °चाख्युः. २०९०. [1]) Emended with C; A निर्यायासु°.

प्रेरणादुल्हणादीनां स्वोत्सेकाच्चैव वर्तते । राजन्सुज्जेरभिप्रायः[1] स्पर्धिनोन्यानानिच्छतः ॥२०९२॥

निर्द्रोहस्योपकर्तुश्च मते स्याद्यदि मे नृपः । निर्वास्य रिल्हणं चित्ररथं बद्ध्वा महाधनम् ॥२०९३॥

लोहरारक्षिनिर्नष्टानश्वान्कोशं च भूपतेः । नयेयं संभृतो हन्यां दुर्वृत्तमपि कोष्ठकम् ॥२०९४॥

2095 कार्योपरोधान्निर्बन्धः संबन्धेष्वेव नास्ति मे । दाक्षिण्यं स्वामिनः कृत्ये यस्य प्राणास्तृणोपमाः ॥२०९५॥

मध्येथ प्रतिराजादिनिर्जयस्वीकृतोद्यमे । युवाविश्रान्तचित्तोयं नृपश्रीभोगभाग्भवेत् ॥२०९६॥

साहायकाय द्वारेशमुल्हणं रिल्हणाश्रये । कार्यप्राप्ते च मामीशमाकारयितुमिच्छति ॥२०९७॥

ब्रूते च मामुल्हणश्च त्वं चाहं चाविभेदिनः । मिलिता यत्र तत्रास्ति गम्यः को नु नृपास्पदे ॥२०९८॥

इहस्था नवदायादमेकमानीय कंचन । निदध्मोस्य पदे राज्ञो नानुतिष्ठेदिदं यदि ॥२०९९॥

2100 गुणान्प्रसरणत्रासाद्बन्धायेव गिरा सृजन्[1] । द्विजांशुभङ्ग्या राजाथ विनिश्वस्याब्रवीद्वचः ॥२१००॥

यथाह स तथैवैतन्न द्रोहो नासमर्थता । नौदासीन्यमथैतस्मिन्संभाव्यमभिमानिनि ॥२१०१॥

निष्प्रतिद्वन्द्वभावोस्य दुरुच्छेदो भवेदिति । इयमप्यन्यतस्तावदस्त्वपायधियः कथा ॥२१०२॥

किं तु ब्रूते यदाकोप[1]प्राथम्यात्तथ्यतोपि वा । निर्द्रोहस्य वधो ध्यातो योस्यासौ कार्य एव तत् ॥२१०३॥

अर्थोयमल्पसत्त्वानाममेस्माभिर्हि मन्त्रितः । नूनं तेनोपलभ्येत तानावर्जयता धनैः ॥२१०४॥

2105 पुण्यैरपरिहार्यैः स्वैर्जाड्यैर्वा मादृशाममी । जानतामपि जायन्ते निर्गुणा भोगभागिनः ॥२१०५॥

बालिशान्गृह्णतां[1] प्रायश्चित्तमेतन्महीभुजाम् । तन्मौर्ख्यस्य फलं मूढैरेतैर्यदनुभूयते ॥२१०६॥

दुर्गमो भूमिभृन्मार्गो विटैर्द्वन्द्ववृषैरिव । ... ....................[1] ॥२१०७॥

तन्वाना व्रतवैमुख्यं रसनालौल्यशालिनः । परपिण्डोपहर्तारः खलाः कौलेयका अपि ॥२१०८॥

इत्थं खलोपतापेन प्रयुक्तं तद्भयात्पुनः । असंहार्यं कुकर्मेदं पश्चात्तापाय नो भवेत् ॥२१०९॥

2110 इत्युदीर्य नृपः सुज्जेः सज्जो व्यापादसिद्धये । तमजागारयच्छश्वज्जागरं चाग्रहीत्स्वयम् ॥२११०॥

बिभ्रन्मन्त्रस्रुतेः शङ्कां जिघांसुः सुज्जिरित्यपि । तथ्यं भृत्यवचो जानंस्तस्थौ दौःस्थ्येन पार्थिवः ॥२१११॥

गत्वा स्वयं गृहान्यौनसंबन्धं कुरुतं[1] युवाम् । इत्युक्त्वा रिल्हणेनाथ स सुज्जिं समयोजयत् ॥२११२॥

विश्वास्यापि तथा हन्तुं तं प्रसङ्गमनाप्नुवन् । उदताम्यद्दिवारात्रं तल्पोपर्यवशो लुठन् ॥२११३॥

सञ्जपाले गृहाद्बन्धुनाशदुःखिन्यनागते । आशङ्क्य साहसासिद्धिमधिकं पर्यतप्यत ॥२११४॥

2115 निपत्य वीरशयने सुस्सलक्ष्मापसत्क्रियाम् । भ्रातरो यस्य कल्याणराजाद्या व्यस्मरन्युधि ॥२११५॥

सेनानीः कुलराजः स ख्यातो व्यायामविद्यया । प्राणैरानृण्यमिच्छंस्तमपृच्छच्छोककारणम् ॥२११६॥ युग्मम्[1]॥

स संस्थापयितुं हन्तुं चाप्यशक्यं न्यवेदयत् । तस्याप्रतिसमाधेयं कम्पनाधीश्वराद्भयम् ॥२११७॥

क्रियदेतन्निजप्राणमात्रलभ्यं महीभुजाम् । इत्याभाष्य स जग्राह साहसाध्यवसायताम् ॥२११८॥

दिनद्वयमनायातो गृहेभ्यः कम्पनापतिः । न प्रातिभाव्यमभजत्तस्य मृत्योः श्रियोथ वा ॥२११९॥

2120 विस्रम्भभृत्यः शृङ्गारनामा चाप्यब्रवीत्प्रभोः । तं दृष्टवांस्तृतीयेह्नि शयनेवगणं स्थितम् ॥२१२०॥

---

२०९२. [1]) Emended; A °प्रायस्पर्धिनां°. २१००. [1]) Emended with C; A सजन्. २१०३. [1]) Emended; A य आकोप°; G *sec. manu* यत को°. २१०६. [1]) A बालि°. २१०७. [1]) Here two *pâdas* are missing; C supplements कः स नीतिज्ञविज्ञेयः कश्च ते खलबुद्धयः. २११२. [1]) Emended; A कुरुतां. २११६. [1]) A₁ २.

शोभोपयोगिनो भर्तुर्नित्यं सततसेवकाः । कर्तुं साहससाचिव्यं विदूरेण तु पार्थिते ||२१२१||

करे पिनाको मकराङ्कशत्रोः शोभाविशेषाय सदानुषक्तः ।
पुराहवे कार्मुककर्म तस्य तत्कालमात्रेण तु मन्दरेण ||२१२२||

ताम्बूलहारकव्याजात्ततो राजा व्यसर्जयत् । कुलराजं तमव्याजधैर्यासंलक्ष्यविक्रियम् ||२१२३||

ध्रुवं मृत्युः पुनर्नाहमागन्ता तत्ततोस्य कः । आर[1]ब्धेति स निन्ये न ताम्बूलं स्वर्णभाजने ||२१२४||

व्यसनप्रशमं राज्ञः स्वदेहत्यागतो[1]नुगाः । एवं कर्तुं यतन्तेन्ये निर्व्यूढौ स्खलिताः पुनः ||२१२५|| 2125

सगणोवगणो वास्तु निहतो नियतं मया । जागर्त्वेतः परं देव इत्युदीर्य विनिर्ययौ ||२१२६||

गतस्य साहससिद्धौ शक्यं शङ्क्यं पलायनम् । ........................[1]||२१२७||

व्रजन्स्वामिहितं कृत्वा पुनः पश्चान्निनाय सः । शस्त्रिणौ द्वौ मिषाच्छस्त्र्यौ बन्धस्थाने परामृशन्[1] ||२१२८||

स्वयं गृहीत्वा ताम्बूलं राज्ञा प्रहित इत्यथ । द्वा[1]:स्थेनावेदितः सुज्जेः पार्श्वं रुद्धानुगोविशत् ||२१२९||

ददर्शोच्चावचैस्तं च मितैः परिजनैर्युतम् । यूथनाथमिवात्यल्पैर्द्विपैररहितान्तिकम् ||२१३०|| 2130

गृहीतवन्दितस्वामिताम्बूलः सस्मितं स तम् । पृष्ट्वा[1] कृत्यादि नृपतेः सत्कृत्य व्यसृजत्क्षणात् ||२१३१||

जनप्रवेशाशङ्की स त्वरमाणस्तमब्रवीत् । कृतागाः कोपि कैवर्तशस्त्रभृन्मत्समाश्रितः ||२१३२||

तस्याक्षेपपरान्भृत्यान्स्वान्निवार्याधुना तव । संमान्या वयमित्यपेलक्षयन्प्रकृतिक्षणम् ||२१३३||

सोत्सेकामिव तां वाचं स दर्पादवधीरयन् । तस्य रूक्षाक्षरं नाहं कुर्यामित्यब्रवीद्वचः ||२१३४||

स रोषादिव निर्गच्छन्मान्योसावित्विति वादिभिः । तं सान्त्वयित्वा तद्भृत्यै रुद्धा व्यावर्तितः पुनः ||२१३५|| 2135

तेनात्रादि ततः कर्तुं विज्ञप्तिं वस्तुनोमुनः । सज्जयोरादिश द्वारप्रवेशं भृत्ययोर्मम ||२१३६||

अवशेनेव तेनाथ वीक्ष्य तौ संप्रवेशितौ । सहायलाभाद्बुभुक्षुः प्रजिहीर्षुरवर्तत ||२१३७||

यानाद्य कुर्यां प्रातर्वो विधेयमिति तान्वदन् । दत्तपृष्ठो निदिद्रासुस्तल्पे सुज्जिर्जहौ वपुः ||२१३८||

गत्वाथ किंचिद्व्यावृत्तो निष्कृष्टक्षुरिको जवात् । प्राहरत्कुल[1]राजोस्य वामे पार्श्वे कृतत्वरः ||२१३९||

तस्य धिक्कुर्वतो द्रोहमधावत्क्षुरिकां प्रति । यावत्पाणिः प्रहरणं तावत्सर्वेपि ते व्यधुः ||२१४०|| 2140

विमर्शैः[1] पश्यतां यावदाशङ्क्यं तत्र नोद्ययौ । स तावदेव सुचिरापेतश्वास इवाभवत् ||२१४१||

भयत्यक्ताभिमानेषु विद्रुतेष्वनुजीविषु । चकर्ष शस्त्रं तत्रैकः पिञ्छदेवः परं तदा ||२१४२||

प्रहर्तृस्तैस्त्रिभिस्तुल्यप्रतिप्रहृतिभिः क्षतः । भ्राम्यन्सुतासृक्तस्मात्स मण्डपान्निरवास्यत ||२१४३||

स्थितान्दत्तार्गले धाम्नि रुद्धद्वारतमोरयः । जिघांसवः सुज्जिभृत्यास्ततस्तान्पर्यवारयन् ||२१४४||

तमोरिप्रतिकुर्वाणा भज्यमानैररिभिर्व्यधुः । ते द्वारे तूलशय्यां तां प्रोत्सार्य शवमुद्धृतम् ||२१४५|| 2145

खड्गेषुशूलपरशुक्षुरिकाश्माभिवर्षिणः । तान्सम[1]भ्रमयन्मार्गैरनेकैस्ते विविक्षवः ||२१४६||

नैराश्यहेतोर्विशतां तेषां संकटवर्तिभिः । पृष्ठाच्छित्त्वा शिरः सुज्जेरङ्गनेक्षिप्यताथ तैः ||२१४७||

अस्रनिःसरणाभीक्ष्णशुक्लेक्षणपुटश्रुति । उत्तरौष्ठकचच्छन्नसस्रघ्राणपुटद्वयम् ||२१४८||

---

२१२४. [1]) Thus emended in C; A आरेभेति. २१२५. [1]) Emended; A °तोन्वगाः. २१२७. [1]) Here two *pádas* are missing; C supplements इति चिन्तयतस्तस्य मम आसीद्विशृङ्खलं. २१२८. [1]) Emended; A °मृषन्. २१२९. [1]) Emended; A द्वास्थेन. २१३१. [1]) Emended; A हृष्ट्वा. २१३९. [1]) Emended with C; A कुजरा°. २१४१. [1]) A विमर्दैः. २१४६. [1]) Emended; A तान्स सम्भ्रम°.

अक्ष्णोर्बम्भ्रम्यमाणस्य लोकस्य प्रतिबिम्बकैः । संभाव्यमानसंस्पन्दस्तोकप्रव्यक्ततारकम् ॥२१४९॥

2150 स्थपुटस्याक्रमच्छेदाग्नलमांसस्य संधिषु । हरिद्रार्द्रैरिवाश्यानमेदोग्रन्थिभिरुल्बणम् ॥२१५०॥

धूलिध्वस्तकचश्मश्रु तदेतदिति निश्चयम् । परं भालतलस्थेन द्रवत्कुङ्कुमबिन्दुना ॥२१५१॥

तद्वीक्ष्य तिर्यक्पतनव्यक्तसंध्यन्तराद्विजम् । उच्चलत्तुमुलाक्रन्दा भृत्याः क्वापि विदुद्रुवुः ॥२१५२॥कुलकम्॥

तीक्ष्णान्प्रयुज्य क्ष्मापस्तु तिष्ठन्व्याकुलधीस्तदा । बहिर्वीक्ष्य जनक्षोभं साहसं निश्चिकाय तम् ॥२१५३॥

सुज्जौ हते क्षते वापि कार्यमेतदिति द्रुतम् । संनह्य सैन्यस्यादिक्षत्स तन्मन्दिरवेष्टनम् ॥२१५४॥

2155 मिथ्यैव सुज्जिर्निस्तीर्ण इति श्रुतवता जनात् । स्वयमग्राहि भूपेन ततः समरसंभ्रमः ॥२१५५॥

निःसंशयं हतं ज्ञात्वा सुज्जिं राजोपजीविनः । तत्र स्थितं शिवरथं सर्वेद्वेष्यमबन्धयन् ॥२१५६॥

हिल्लात्मजन्मनः सुज्जिभ्रातृस्यालस्य कौशलम् । कलत्रास्याश्च निर्वर्ण्य वाणीयं पुण्यभागिनी ॥२१५७॥

आक्षिप्यमाणैर्भिक्ष्वाद्यैरन्ते वीरोचितं कृतम् । तेन त्वसंशयस्थेन सदाचाराच्च विच्युतम् ॥२१५८॥

राजौकस्थैव तां वार्तां श्रुत्वा स ह्यपलायितः । हतस्य स्वामिनोभ्यर्णे जिहासुर्जीवितं ययौ ॥२१५९॥

2160 द्वारे पदप्रहतिभिर्भञ्जन्तं राजसैनिकाः । अपसार्य कथंचित्तं तीक्ष्णाः कृच्छ्रादरक्षिषुः ॥२१६०॥

प्रविष्टेस्मिन्ननिर्व्यूढपीडिते मण्डपान्तरम् । लब्धप्राणा नृपाभ्यर्णे कुल्लराजादयो ययुः ॥२१६१॥

हठप्रविष्टो हतवान्स तत्रैकं महाभटम् । शरैरेव हतो दूरात्कथंचित्परिपन्थिभिः ॥२१६२॥

आयातं क्षुभिते देशे सज्जपालं महीपतिः । रिल्हणं चोल्हणं हन्तुं प्राहिणोद्विहितत्वरः ॥२१६३॥

यातो मार्गात्पलाय्यायं परिशङ्क्येति रिल्हणः । क्षिप्रिकातटपर्यन्तमटित्वा प्रात्यदाययौ ॥२१६४॥

2165 पूर्वायातः सज्जपालो गृहद्वाराद्विनिर्यतः । उल्हणस्य पथो रुन्धन्सुबहून्प्रहरन्रणे ॥२१६५॥

तावदेकस्य खड्गेन निकृत्ते दोष्णि दक्षिणे । त्वङ्मात्रशेषे छिन्नास्थिस्नायुग्रन्थिरजायत ॥२१६६॥तिलकम्॥

अगण्यप्रायतां प्राप्ते वंशे यत्कौशलादसौ । दिगन्तरेषु स्वस्मिंश्च देशे प्राप प्रथां पुनः ॥२१६७॥

फलकाले समासन्ने शौर्यप्रतिभुवाभजत् । स तेन दोष्णा वैकल्यं धिगिच्छां विधुरां विधेः ॥२१६८॥

स प्राग्व्रणदयावाप्तौ भवेदविकलो यदि । फलेन तस्य जानीयादिच्छां लोकोयमद्भुताम् ॥२१६९॥

पीतामृतस्य क्षतविग्रहत्वं न प्राभविष्यद्यदि नाम राहोः ।

2170 अज्ञास्यदिच्छां तदमुष्य लोकः सामर्थ्यभाजः सुचिरप्ररूढाम् ॥२१७०॥

दृष्टः शीलाभिधो वृद्धः पितृव्यः साह्देविना । सस्पृहं निहतः साधु – –[1] जातव्रणार्तिना ॥२१७१॥

तस्यार्त्या विशतो वेश्म जञ्जलाख्योग्रगो हतः । मान्योनुगो भटौ द्वौ च यामिकश्च जनंगमः ॥२१७२॥

बालं तनयमालोक्य निषण्णस्याङ्गनस्थितेः । तस्यानिर्गच्छतो गेहे रिल्हणोग्निमदापयत् ॥२१७३॥

आनीयमानो धूमान्धो बद्ध्वा मुख्यैः स सैनिकैः । गृहद्वारे हतः कैश्चित्प्राकृतैर्व्रणविक्लवः ॥२१७४॥

2175 तस्य प्रधानप्रकृतिक्षयहेतोर्महीपतिः । मुण्डमप्यवलोक्यासीदशान्तक्रोधविक्रियः ॥२१७५॥

व्यापाद्यमानाः साकोपं भूपतिप्रेरितैर्भटैः । उच्चावचाः सुज्जिभृत्याः कृत्यं सत्त्वोचितं व्यधुः ॥२१७६॥

---

२१५७. [1]) Emended with C; A कल – स्याश. २१६६. [1]) $A_1$ ३. २१७१. [1]) Before or after साधु two *aksharas* are missing; the *lacuna* not indicated in A ; C supplements सम्यग्जा°.

अनुजो लक्ष्मकः सुज्जेर्बद्धा नीतः स विक्रियाम् । नृपं वीक्ष्याद्वयैः कैश्चिद्राजधान्यङ्गने हतः ॥२१७७॥
भ्राता पितृव्यजस्तस्य संगटाख्यो नृपाङ्गने । अटबट इव प्राणानौचित्येनामुचत्कृती ॥२१७८॥
प्रविष्टः शरणं बाणवंश्यैः पापैः प्रमापितः । उन्मत्तो मुम्मुनिस्तस्य भ्राता कैश्चित्स्वमन्दिरे ॥२१७९॥
सुज्जिस्यालस्तु भृङ्गारवृत्त्या भङ्गुरया हतः । महाकुलीनो विचरनौचित्येन च चित्रियः ॥२१८०॥ 2180
साङ्गिकाख्यः प्रतीहारो व्रणितः शनकैर्हतः । अन्येपि संश्रिताः सुज्जेस्तत्र तत्र प्रमिम्यिरे ॥२१८१॥
जात्यवाजिजवप्राप्तप्राणाः कोष्ठेश्वरान्तिकम् । आसाद्य वीरपालाद्या छित्रा मृत्युभयं जहुः ॥२१८२॥
व्रजञ्शारदियों[1] दुष्टोत्थानहृद्धतुरंगमः । प्रपेदे संगटभ्राता बन्धनं सुभटामठे ॥२१८३॥
सूनुश्च सज्जलः सुज्जेः श्वेतिकश्चाप्रजात्मजः । उल्हणस्य तनुजश्च कारागारं प्रपेदिरे ॥२१८४॥
इत्थं राजन्यमात्ये[1] च प्राप्ते पिशुनवश्यताम् । नवमेब्दे शुचेः शुक्लपञ्चम्यां विप्लवोभवत् ॥२१८५॥ 2185
कार्ये क्वापि विपर्यस्तसत्त्वं संस्मृत्य मन्त्रिणम् । तमद्यापि नृपस्तादृग्भृत्योपेतोनुतप्यते ॥२१८६॥
वेतालोत्थापनाच्छ्वभ्रलङ्घनाद्विषचर्वणात् । व्यालाश्लेषाच्च विषमं सत्यं राजोपसेवनम् ॥२१८७॥
अनात्मायत्तनिस्तीर्णगुणानां चक्रवर्तिनाम् । शकटानामिवापस्थो विश्वस्तः को न भज्यते ॥२१८८॥
अयुक्तं नृपतिः सुज्जिवधं मेने प्रजाः पुनः । युक्तं ज्ञात्वा तमुद्रिक्तशक्तितां विविदुः प्रभोः[1] ॥२१८९॥
भेजे राजा सज्जपालं कम्पनाधिपतिं दधत् । कुलराजे च नगराधीकारित्वं समार्पयत्[1] ॥२१९०॥ 2190
त्यक्त्वा मल्लार्जुनं[1] धन्योदयौ नगरमागतौ । प्राग्वत्पुनर्जजृम्भाते प्रियौ विश्वंभराभुजः ॥२१९१॥
इतराश्रयविच्छेदा वीतपारिप्लवस्थितिः । श्रीः सर्वाकारमकरोत्स्थिरं चित्ररथे पदम् ॥२१९२॥
अद्भुतैश्वर्यधुर्योपि राष्ट्रं दण्डेन पीडयन् । शमं नेतुमशक्योभूत्स भूपस्याप्यनङ्कुशः ॥२१९३॥
गन्धर्वानाभिधे ग्रामे टिक्कं हत्वा व्यसर्जयत् । पांरविशोकं कोट्टेशस्तच्छिरः पार्थिवान्तिकम् ॥२१९४॥
निसर्गद्वेषिणा प्राप्तप्रतापे नितरां नृपे । तदानीं तप्यमानेन दूतनाप्यायितोसकृत् ॥२१९५॥ 2195
कोष्ठेश्वरेण रभसादल्पैः परिजनैर्युतः । निशि लोठनदेवः स हाडिग्रामं ततोविशत् ॥२१९६॥
महाकथिनकन्थान्यैः संरब्धे राज्ञि सर्वतः । बद्धसंधिर्लवन्यस्तं विससर्ज यथागतम् ॥२१९७॥
उच्चलाविवदादातुं राज्यं स रभसं भजन् । निर्वृद्धिभून्यदाद्योगान्मूढो लोकस्य हास्यताम् ॥२१९८॥
तीक्ष्णप्रयुक्तिभिः सैन्यभेदैरन्यैश्च कोष्ठकम् । उपायैर्नृपतिस्तैस्तैस्तत्ना हन्तुं व्यचिन्तयन ॥२१९९॥
प्रतिद्वन्द्वीव तीक्ष्णानां पाटिताक्षः क्षमाभुजम्[1] । न संप्रासादयत्क्रुद्धः[2] प्रतियोद्धुं त्वचिन्तयत् ॥२२००॥ 2200
स्वैः स्वैः प्रदेशैरादिश्य प्रवेष्टुं पृतनापतीन् । स्वयमुद्यावनैः सैन्यैरवचस्कन्द तं पुनः ॥२२०१॥
स भूपं रभसायातं ज्ञात्वाल्पपृतनं बली । प्राप्तश्छलयितुं तस्थौ प्रतापैः परिहारितः ॥२२०२॥
लग्ने रणे चित्ररथः पृथुसैन्योपि दैवतः । तस्य सैन्यैकदेशेन निन्ये जयविपर्ययम् ॥२२०३॥
भङ्गेनामङ्गलोंकारकल्पेन किल तेन सः । ततः प्रभृत्यभूद्धृदयदवष्टम्भो दिने दिने ॥२२०४॥
रिल्हणादीन्योधयित्वा व्यूढव्यस्ताखिलानुगः । लवन्यो न्यपतत्सायं कम्पनाधिपतेर्बले[1] ॥२२०५॥ 2205

२१८३. [1]) C शारदि यो. २१८५. [1]) Emended with C; A °मात्ये. २१८९. [1]) Conjectural emendation of G. (*sec. manu*); A प्रजाः. २१९०. [1]) Emended with C; समर्पयत. २१९१. [1]) Emended; A मल्लार्जुनो २२००. [1]) Emended; A °भुजाम्.—[2]) Emended; A संप्रसाद°. २२०४. [1]) Doubtful emendation; A भङ्गनामङ्गलों°; C भङ्गनामङ्गलोङ्कार°. २२०५. [1]) Emended; A °बली.

ऊनैः शतादपि भटैर्युतो विद्रुतसैनिकः । सेहे[1] तत्सैन्यसंक्षोभं स गजक्षोभमिवाचलः ॥२२०६॥
किं वाच्यः स नरव्याघ्रः प्रवृद्धिं याति संगरे । निजवर्मतनुत्रादि यस्य मानि न वर्ष्मणि ॥२२०७॥
मन्दीकृतारिसंरम्भमवष्टम्भेन तादृशा । तं त्रिल्लकादयः प्रापुर्लवन्याः सैन्यशालिनः ॥२२०८॥
तैः सजातीयदाक्षिण्यात्तटस्थैरपि संकटे । तस्येषदुपयोगोभूत्स्ववीर्यापास्तविद्विषः ॥२२०९॥
2210 काले संनहनं रात्रिजागरः सामतो बलैः । समये ग्रहणत्यागतत्तद्युक्तिविकल्पनम् ॥२२१०॥
लब्धभूम्यपरित्यागो जिगीषोरीदृशैर्गुणैः । ज्वलेयुररयोप्यस्य का वैर्याक्रमणे स्तुतिः ॥२२११॥
अविश्वसन्भिन्नभृत्यस्तादृक्संरम्भपीडितः । पलायनोन्मुखः शैलात्कोष्ठकोथ व्यगाहत ॥२२१२॥
मार्गेष्वकालप्रालेयपातरुद्धेषु वाजिनाम् । गन्तुं तस्योद्यमं जघ्नुः पृष्ठलग्ना विरोधिनः ॥२२१३॥
अवमानोपतप्तोथ परिमेयपरिच्छदः । स ययौ जाह्नवीं स्नातुं राज्ञा राष्ट्रादपाकृतः ॥२२१४॥
2215 सोमपालोथ भूपालनाम्ना पुत्रेण खेदितः । दीर्घद्वैराज्यदुःखार्तः शरणं नृपतिं ययौ ॥२२१५॥
पुत्रौ दत्तवतो नीत्यै नागपालस्य तस्य च । अभयं प्रतिशुश्राव भूभृदाश्रितवत्सलः ॥२२१६॥
बृहद्राजस्य जिह्मोयं दौःस्थ्यहेतुरभूदिति । स तदापदि नास्मार्षीदव्याजौदार्यधुर्यधीः ॥२२१७॥
साहायकाय स्वं सैन्यं दत्तवांस्तं महीपतिः । भूयः प्रतिष्ठामनयद्दर्पप्रशमनाद्द्विषाम् ॥२२१८॥
स्नात्वा धुनद्यां व्यावृत्तः कोष्ठकोत्रान्तरे पुनः । मल्लार्जुनं गृहीत्वाभूद्वैराज्योत्थापनोद्यतः ॥२२१९॥
2220 अर्कोपरागे प्राप्तः स कुरुक्षेत्रमवाप तम् । लवन्यं कार्यतस्त्यक्तपूर्ववैरो नृपात्मजः ॥२२२०॥
आहूतो लोठनः पूर्वमायातस्तेन डामरम् । निशम्य तं संघटितं[1] खिन्नः प्रायाद्यथागतम् ॥२२२१॥
विजयेशागतः पीतकोशोपि नृपतिद्विषः । प्रविविक्षूनुपैक्षिष्ट सोमपालो दुराशयः ॥२२२२॥
आराधनाय भूभर्तुस्तत्पुत्रः कोष्ठकं पुनः । प्राप्तं स्वविषयैस्तैस्तैष्ठक्कुरैर्निरलुण्ठयत् ॥२२२३॥
अत्रान्तरे चित्ररथं संवृद्धायासदुर्महम्[1] । अनिच्छन्तोवन्तिपुरे प्रायं चक्रुर्द्विजातयः ॥२२२४॥
2225 उपेक्ष्यमाणास्ते दर्पात्तेनागणितभूभुजा । ज्वलिते ज्वलने देहान्बहवो जुहुवुः शुचा ॥२२२५॥
चरके धर्मधेनूनामुत्तब्धेपि तदाश्रितैः । वह्निं गोपालकोप्येकः कारुण्यप्रवणोविशत् ॥२२२६॥
भट्टस्योद्भटवंशस्य पृथ्वीराजस्य नन्दनः । युवा विजयराजाख्यः सानुजो गाढदुर्गतः ॥२२२७॥
देशान्तरं जिगमिषुर्वैषमं वीक्ष्य तत्र तत् । व्याजहारानुजन्मानं कारुण्यास्रुकणान्किरन् ॥२२२८॥
उपेक्ष्यमाणा दाक्षिण्यस्तम्भितेन महीभुजा । विशः सचिवपाशेन विवशाः पश्य नाशिताः ॥२२२९॥
2230 छन्दानुवृत्त्यामात्यानां[1] यत्र क्ष्माभृदुपेक्षते । कस्तत्रान्यस्तु दीनानामापच्छमयिता विशाम् ॥२२३०॥
यद्वा न्यायोयमन्योन्यस्पर्धया यदुपप्लुतम् । शमिता दण्डयेच्छाम्यं शमितारं परोथ वा ॥२२३१॥
विशृङ्खलं नयेच्छय्यां दार्ढ्यसारं विघट्टनैः । कदाचिल्लोहमश्मानमश्मा लोहं कदाचन ॥२२३२॥
दोषेणैकेन न द्वेष्यो राजा सर्वगुणोज्ज्वलः । वधाच्चित्ररथस्यान्यद्विधेयं नावभाति मे ॥२२३३॥
धर्मः सर्वोपकार्येकक्षुद्रक्षपणमुच्यते । जघानाजगरं सोपि जन्तूनामन्तकं जिनः ॥२२३४॥

---

२२०६ [1]) Emended; A सह. २२२१. [1]) Emended; A सङ्घटितुं. २२२४. [1]) Emended with C; A सवृद्धायास°. २२३०. [1]) Emended with C; A apparently °मान्त्यानां.

दुर्वृत्तदमने[1]स्माभिः कृते तेजस्विनो जनात् । भूयोप्याधिकृतो बिभ्यच्च कश्चित्पीडयेत्प्रजाः ॥२२३५॥ 2235

कायस्थास्य परित्यागादनन्ता जन्तवो यदि । सुखिनः स्युरसौ भ्रातर्वणिज्या ज्यायसी न किम् ॥२२३६॥

संशुश्रुवांसं स तथेत्यथ तं कोशपीथिनम् । विधायानुससारैत्य हन्तुं चित्ररथं तदा ॥२२३७॥

कालेस्मिन्धर्मदौर्बल्यकलुषेपि कलेः किल । प्रभावो भूमिदेवानां द्योततेद्याप्यभङ्गुरः ॥२२३८॥

ब्राह्मणैरपरिक्षीणपूर्णपुण्यो न कश्चन । धैर्यमारभते भ्रष्टदुष्टोत्पाटनपाटवैः ॥२२३९॥

द्विजानुद्वेजयन्सुज्जिर्द्विजादेवासदद्वधम् । विप्रेणैव हतश्चित्ररथो विप्रावमानकृत् ॥२२४०॥ 2240

द्विजोत्थापितयाक्रान्तचित्तोसौ कृत्यया ध्रुवम् । दध्यौ तस्य वधं प्राणान्विना कारणमुत्सृजन् ॥२२४१॥

कृशानुसादकृषत विप्रा देहान्यदैव ते । तद्वैरस्तुल्यसंघर्षे तदैवासीद्धतानुगः ॥२२४२॥

अनासादयतश्चित्ररथं पृथुबलान्वितम् । गणरात्रमभूद्धन्तुर्दिवारात्रं प्रजागरः ॥२२४३॥

स ह्यपर्यन्तसामन्तसीमन्तितपथो व्रजन् । अभूददृश्यो दृश्यश्च जनसंबाधमध्यगः ॥२२४४॥

तेन साश्चर्यनैश्चल्यनिष्ठुरेणैकदा जवात् । सोनुसस्रे व्यतिक्रान्तनिःश्रेणिर्नृपवेश्मनि ॥२२४५॥ 2245

विलम्बितस्य स्तम्भाग्रे[1] कृपाण्या मूर्ध्न्यथास्य सः । सामन्तमध्यगस्यैव प्राहरत्तीव्रसाहसः ॥२२४६॥

मुमूर्षोरिव तत्रास्य वैह्वल्यगलितस्मृतेः । उद्भ्रान्तचक्षुषो वर्चश्च्यवनं समपद्यत ॥२२४७॥

प्रमापितोयं राज्ञेति ज्ञात्वा सत्त्वबहिष्कृताः । वित्रस्तास्तं तथाभूतमत्यजन्ननुजीविनः ॥२२४८॥

तं वीतजीवितं ज्ञात्वा न तीक्ष्णः प्राहरत्पुनः । प्राप्तं द्वितीयनिःश्रेण्या भ्रातरं निषिषेध च ॥२२४९॥

न पलायिष्ट निर्विघ्नसर्वमार्गोपि घातितः । राज्ञा चित्ररथः शश्वदित्युच्चैः प्रोच्चकार सः ॥२२५०॥ 2250

प्रनष्टं[1] भृष्टमांसादिराज्यभोगपुरःसरैः । सर्वैः कापुरुषैस्त्रासादथ चित्ररथानुगैः ॥२२५१॥

ज्यायांश्छोठरथस्तस्य भ्राता भीत्या पलायितः । शरणं नर्तकीमेकां ययौ वक्त्रार्पितस्तनः ॥२२५२॥

तादृक्प्रवेशितश्चित्ररथोभ्यर्णे महीभुजा । मा भैषीः[1] प्राहरत्कस्त्वामित्युक्त्वाश्वासितः स्वयम् ॥२२५३॥

नृपाज्ञया को निहन्ता द्वारेशस्येति वादिभिः । तीक्ष्णोन्विष्टो भटैः सोहमित्युक्त्वा स्वं न्यदर्शयत् ॥२२५४॥

धीरो योधान्स्वधैर्यात्तलङ्घनश्लाघ्यविक्रमः । त्रिंशद्विंशान्स हत्वाथ प्रहत्य चरणे हतः ॥२२५५॥ 2255

परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे[1] ॥२२५६॥

लब्धा लिखिततत्कृत्यकारणा पत्त्रिका करात् । तस्यान्तसमयाशंसा श्लोकेनानेन पावनी ॥२२५७॥

अहन्युन्मददीनत्वयुतश्चित्ररथस्ततः । क्षुद्रव्रणोपि लालाटसंधिवेधादजायत ॥२२५८॥

स मासान्पञ्चषान्याप्य निराप्यायकृशाकृतिः । विवेष्टमानोवर्तिष्ट शयनीयतलेन्वहम् ॥२२५९॥

मल्लार्जुनं पुरस्कृत्य कोष्ठको विप्लवोन्मुखः । तन्मध्ये तरुसंबाधं गिरिदुर्गमगाहत ॥२२६०॥ 2260

मां मामभ्रमयं[1] भ्राम्यन्स्वयूथ्यप्रसनोद्यमात् । अविस्मृतापदं लोकं पुनर्द्वैराज्यशङ्किनम् ॥२२६१॥

अकाण्डाम्बुदजाड्येन पङ्किताङ्क इवाभजत् । परचक्रोदयेनाशु लोकः शिथिलशङ्किताम् ॥२२६२॥

तरुदुर्गं तदकृशक्रोशं[1]व्याप्य सर्वतः । ग्रामोपान्तवनग्रामैः सन्निवैः स न्यरोधयत् ॥२२६३॥

---

२२३५. [1]) Misread in C दुर्वृत्तहसने २२४६. [1]) Emended; A स्तम्बाग्रे. २२५१. [1]) Emended with C; A प्र–ष्टं. २२५३. [1]) Emended with C; A भैषीम्प्रा°. २२५६. [1]) Compare for this verse *Bhagavadgītā* iv. 8. २२६१. [1]) The text of the first *pāda* is corrupt; perhaps read °समभ्रमयज्ञा°. २२६३. [1]) A °क्रोष°.

सञ्जपाले यवनकैः स्कन्धावारं निबध्नति । अनुचक्रुर्द्विषोस्पन्दा निवातस्तिमितांस्तरून् ॥२२६४॥

2265 धन्योपि शिलिकाकोट्टपर्यस्तकटकोभवत् । गन्धद्वेषी गजारिपुः सिन्धुरस्येव[1] वैरिणः ॥२२६५॥

आवासितबलो राज्ञा गोवासे रिल्हणोकरोत् । अटवीं पर्यटन्घूकानिवार्को ब्रुडितानरीन् ॥२२६६॥

तीव्रशक्तेर्नृपस्यैवमारम्भैः स्तम्भितोभजत् । कोष्ठेश्वरस्त्रिचतुरान्मासान्संचारशून्यताम् ॥२२६७॥

क्लिष्टो देशान्तरे राष्ट्रानन्तरैर्न्यक्कृतो नृपैः । भिन्नस्ववर्गो भूभर्तृभृत्यव्यर्थीकृतोद्यमः ॥२२६८॥

बालिशत्वादकुशलो ज्ञातुं वृत्तिं महीभुजाम् । स विस्मृतागाः संधातुमैच्छच्छिन्नपदो नृपम् ॥२२६९॥

2270 उज्जिहीर्षोः प्रभोर्मन्युं वाच्यं तद्वञ्चनाद्विदन् । भक्त्येकामः सञ्जपालस्तस्येच्छां तामपूरयत् ॥२२७०॥

तथार्तोपि रिपुं राज्ञः संधित्सुर्न्यषधीन्न सः । पृथ्वीहरप्रसूतानां निर्द्रोहत्वं न कौतुकम् ॥२२७१॥

तेन प्रहिण्वता राजवैरिणं स्वकराङ्गुलिम् । छिन्दतापि महीभर्तुर्मन्युश्छेत्तुं न पारितः ॥२२७२॥

कण्ठबद्धशिरःशाटः शीर्षेणोपानहं वहन् । भुक्तवेलोपि भूपालं कर्तुं नाशकदक्रुधम् ॥२२७३॥

अस्वीकृतद्विड्भूभुग्लाञ्छनः स हि राजवत् । तत्तत्प्रत्युक्तभूपाज्ञः सर्वं गर्वाद्व्यवाहरत् ॥२२७४॥

2275 शुभाव बद्धं तन्मध्ये यातं मल्लार्जुनं नृपः । अनुबध्नाति भव्यानामुदयेभ्युदयान्तरम् ॥२२७५॥

नीयमानः स हि स्कन्धम[1]धिरोप्यानुजीविभिः । अजाङ्घिकतया मार्गोल्लङ्घनाया[2]सनिःसहः ॥२२७६॥

ततस्ततो भयस्थानान्निस्तीर्णो लोहराश्रितम् । सावर्णिकाभिधं ग्रामं प्राप्तो विन्यस्तरक्षिणा ॥२२७७॥

निरुद्धो जग्गिकाख्येन ठक्कुरेण महीपतिः । प्रियंकरं तं च भृत्यं शुभावान्तिकमागतम् ॥२२७८॥

बद्धशायोरिणा दुर्गान्निर्गतः स कथंचन । बद्धस्तेन पुनः शक्तिः[1] कस्य भाव्यर्थ[2]लङ्घने ॥२२७९॥

गङ्गा द्युमार्गलुठिता जठरात्कथंचिदेकस्य संहतवतो निसृता महर्षेः ।

2280 मस्तापरेण कृतसागरगर्तपूर्तिः शक्तो न कोपि भवितव्यविलङ्घनायाम् ॥२२८०॥

जग्गिके[1] बद्धसंप्राप्तिपर्यन्तोपान्तरक्षिणि । राज्ञोदयद्वारपतिः प्रायोजि प्राज्यबुद्धिना ॥२२८१॥

तं विना धैर्यगाम्भीर्यशौर्यधुर्यं महाधियम् । संकटे न ह्यवष्टम्भो राज्ञाज्ञाप्यन्यमन्त्रिणाम् ॥२२८२॥

स व्यतिक्रम्य साबाधान्मार्गानुभयवेतनैः । तमोरिस्थितमद्राक्षीत्तं क्षमापतिविद्विषम् ॥२२८३॥

निष्ठाशून्येन धैर्येण शौर्यसंभावनावहः । स्तुवन्स तं बहिः प्राप्तं तत्तदुक्त्वाब्रवीत्पुनः ॥२२८४॥

2285 सर्वतो ज्यायसीं भर्तृभक्तिं यो बहु मन्यते । भवान्धुर्यो मतिमतामादृतो लोभनातुरैः ॥२२८५॥

कृता रक्षामणिसमं सहायं त्वादृशं विना । हानिर्मे दुर्नरेन्द्रस्य बाल्ये राज्ये बहुच्छलैः ॥२२८६॥

दुष्प्रेक्ष्याणां भवस्येव नियमाद्राजभास्वताम् । भाग्यान्तहेमन्तदिने जननेत्रविलङ्घ्यता ॥२२८७॥

शोभते रुधिराताम्रमण्डलाभो यथोदये । तथा योस्तमये भास्वानिव वन्द्यः स भूपतिः ॥२२८८॥

धन्योवतारो यस्यासीत्क्षुभ्यत्पौराङ्गनाजनः । उदयेस्तमयेप्युभे रागव्यग्राप्सरोगणः ॥२२८९॥

2290 पदे प्रयोगं लब्धार्थं किंचित्कृत्वा कुलीनवत् । अहं कविरिव प्रौढः प्राप्तो निर्व्यूढिभूभृताम् ॥२२९०॥

सत्यंकारोधुना भूत्वा विधत्तां स्वान्तसुस्थितिम् । साध्यत्वानतिवृत्तेन वरेणैकेन मे भवान् ॥२२९१॥

---

२२६४. ¹) A. स्कन्धा°. २२६५. ¹) A सिन्धुरस्येव. २२६९. ¹) A बालि°. २२७६. ¹) Emended; A स्कन्धम°.—²) Emended; °लङ्घनाय स नि°. २२७९. ¹) Emended; A शक्ति.—²) Emended; A भाव्यार्थ°. २२८१. ¹) Doubtful; A जग्गके; cf. viii. 2278.

इत्युक्त्वा प्रत्ययोत्पत्त्यै संस्प्रष्टुं स्फाटिकं ततः । सपीठं पुरतो द्वारपतेर्लिङ्गमुपानयत् ॥२२९२॥
अच्छलाहवसंमर्दप्रासभूलेषुवर्षिणः । योधान्योद्धुं वरं मार्यं[1] मानवाच्छूनमिच्छति ॥२२९३॥
इति संभाव्य संस्पृष्टशिवलिङ्गः स वाञ्छितम् । वरं तस्योररीचक्रे स च भूयो जगाद तम् ॥२२९४॥
आकृष्टदृष्टिरहतः क्ष्माभुजोन्तिकमक्षतः । यथेदृगेव प्राप्नोषि तथा त्वामर्थयेधुना ॥२२९५॥
कार्पण्योपहतं तस्य वचः श्रुत्वा त्रपाजडाः । सर्वेप्युर्वीमुखास्तस्थुर्वृष्ट्यार्द्राः पल्लवा इव ॥२२९६॥
अन्तक्षणस्ततो भिक्षोः स्मर्यमाणः सचेतसाम् । विकासहेतुतां प्राप स्वस्थस्य मनसः पुनः ॥२२९७॥
मनुष्यवाह्यमारूढः पत्तं निन्ये स निस्त्रपः । तेन स्वपालितांल्लोकानपि पश्यन्नविक्रियम् ॥२२९८॥
अहीनाहारनिद्रादिवैवश्यः पशुवत्पथि । कृष्यमाणः स केनापि न विकल्पेन पस्पृशे ॥२२९९॥
पश्यन्नानीयमानं तं गोप्तृभिस्तादृशं जनः[1] । दयार्द्रहृदयश्चासीन्नाभ्यनन्दच्च भूभुजम् ॥२३००॥
उवाच चानुकम्प्येस्मिञ्जन्मज्येष्ठस्य भूपतेः । नैतावज्जाति नैर्घृण्यमनुजे पितृवर्जिते ॥२३०१॥
असेचनकमेतस्य मेचकाब्जदृशो वपुः । क्लेशगर्भमनिस्त्रिंशचेताः कः कर्तुमर्हति ॥२३०२॥
पूर्वापरानुसंधानवन्ध्यस्तं दृष्टवांस्तदा । विस्मृतागा नृपं तत्तदित्युपालभताध्वनि ॥२३०३॥
गणना कास्य वा बालबालिशादौ[1] विधीयते । न चित्तवृत्तेरैकाग्र्यं महतामपि सर्वदा ॥२३०४॥
श्रोतॄणां द्यूतपाञ्चालीकेशकृष्ट्यादि शृण्वताम् । पाण्डवेभ्योधिकः क्रोधो धार्तराष्ट्रेषु जायते ॥२३०५॥
कुरूणां क्षतजापाने भग्नोरोर्मूर्धताडने । श्रुते पाण्डवविद्वेषस्तेषामेव च दृश्यते ॥२३०६॥
परावरज्ञः कार्याणां न कश्चिन्मध्यमं विना । तटस्थेनुभवाभेदस्तत्र तत्र कथं भवेत् ॥२३०७॥
स पौरान्रोदयन्नङ्के छिन्नाङ्गुल्यङ्कमुद्वहन् । युग्याधिरूढो मृत्पात्रं सायं नगरमासदत् ॥२३०८॥
न्यधत्ताश्वयुजाशुक्लपञ्चदश्यां महीपतिः । एकादशेब्दे तं रक्षियुतं नवमठान्तरे ॥२३०९॥
त्यक्ताहारस्य च निशाः पञ्चषास्तस्य ताम्यतः । पार्श्वं जगाम कारुण्याच्चरणस्पर्शनार्थिनः ॥२३१०॥
अवादीदर्थितं तस्मै प्रतिभूर्भुवुषेभयम् । द्रोहावेकान्ततो वध्यौ स चित्ररथकोष्ठकौ ॥२३११॥
राजा निर्जग्मुषः स्वोर्वीं कोष्ठकस्याथ बन्धनम् । विधित्सुः पञ्चषानाप्तान्रिल्हणादीनचूचुरत् ॥२३१२॥
सर्वेषु गलितौजःसु स्वयं राज्युद्यमस्पृशि । अथ तं रिल्हणो दोर्भ्यां झषं ग्राह इवाग्रहीत् ॥२३१३॥
हतशस्त्रः स बलिनस्तस्य दोष्पञ्जरान्तरे । तस्थावचेष्टो निद्रान्धो भूतेनेवासनीकृतः ॥२३१४॥
भ्रातृव्यो भिःखराजाख्यः[1] कुलराजस्य कोपनः । भूभृत्तस्या कृपाण्यास्य निर्बिभेद कृकाटिकाम् ॥२३१५॥
परश्वधेन मूर्ध्न्येनं पृथ्वीपालश्च ताडयन् । राजवीजी स च क्रोधाद्व्यधिष्यत महीभुजा ॥२३१६॥
कृकाटिकास्थिसंजातमर्मवेधोपचेष्टितः । विवेष्टमानोवर्तिष्ट क्षितौ स रुधिरोक्षितः ॥२३१७॥
महाबलैः कमलियप्रमुखैस्तस्य सोदरः । चतुष्कः पातितोगुर्व्यां गण्डशैल इव द्विपैः ॥२३१८॥
विलोक्य वैकल्यहतौ बद्धौ तौ स्वामिनौ[1] तथा । कृष्टासिधेनुरुत्तस्थौ द्विजन्मा मल्लकाभिधः ॥२३१९॥
उच्चावचेषु प्रहरन्स भूपालोपजीविषु । अतर्क्यमाणस्तुमुलं राशीवालक्ष्यतापतन् ॥२३२०॥

---

२२९३. [1]) A माऽबं. २३००. [1]) Emended; A जना: २३०४. [1]) A °वालि°. २३१५. [1]) A भि×ख°. २३१९. [1]) Emended with C; A स्वामिनो.

नृपान्तिकादापततस्तांस्तान्घ्नन्तं महाभटान् । अधावत्सासिधेनुस्तं कुलराजो महौजसम् ॥२३२१॥
प्रतिप्रहर्तिु क्षिप्रापतत्पाणिमपारयन् । निहन्तुं संहरोधेत्र भित्तौ व्यायामवित्स तम् ॥२३२२॥
अपयातुमवस्थातुं प्रहर्तुं वाप्यशक्नुवन् । तस्थौ स्म बहुसंधानः संस्तभ्यैनमवेक्षतम् ॥२३२३॥
चरणास्फालनोत्फालदोःशब्दमुखरोन्तिकम् । धाविते पद्मराजेथ मल्लकोक्षिपदीक्षणम् ॥२३२४॥
2325 प्राहरत्कुलराजोस्य लब्धरन्ध्रोथ वक्षसि । प्रहृत्य गच्छतः पाणेः स तस्याङ्गुष्ठमक्षिणोत् ॥२३२५॥
तौ विज्जराजे[1] दर्पोष्णनिविडे प्रहरत्युभौ । तस्मिन्प्रतिप्रहरति क्षिप्रं प्राहरतां ततः ॥२३२६॥
स त्रीनप्यभियोक्तृंस्तांस्त्यक्त्वा दृक्पथमागतम् । चतुष्किकाद्वारगतं राजानं समुपाद्रवत् ॥२३२७॥
लक्षीभूते नृपे शीघ्रमनुधावन्ससंभ्रमम् । चकार कुलराजस्तं स्फिगस्थिक्षतिनिर्जवम् ॥२३२८॥
ततः सर्वैर्वृतो योधैः क्षीबाक्षीबान्स सत्वरम् । हत्वाभजद्वीरशय्यां रक्तस्यन्दोत्तरच्छदाम् ॥२३२९॥
2330 जीवद्व्यापन्नतस्वामिवीक्षितः श्लाघ्यविक्रमः । स एवास्पृहणीयान्तक्षणो वीरेष्वगण्यत ॥२३३०॥
बहिः कोष्ठकभृत्येषु विद्रुतेष्वदरिद्रताम् । परं जनकचन्द्राख्यो धैर्येणोवाह डामरः ॥२३३१॥
निरायुधो राजभृत्याद्धृत्वैकस्मात्परश्वधम् । स ह्ययुद्धामदूतत्वं नयन्भूरीन्यमान्तिके ॥२३३२॥
यियासोस्तस्य चण्डांशुमण्डलं परशुः करे । सुषुम्णासंविभागार्थी शशिखण्ड इवाविशत् ॥२३३३॥
नाद्राक्ष्म नाश्रौष्म वापि बद्धे भर्तरि यत्तदा । कोष्ठकस्य वधूरन्वतिष्ठन्मानवती सती ॥२३३४॥
2335 जीवन्भूयोपि लभ्येत त्वया स पतिरित्यसौ । बन्धूनामवधीर्योक्तिं प्राविशद्धुताशनम् ॥२३३५॥
सर्वाधियोगिदाश्लेषतर्षकिल्बिषदूषितः । तस्याः सतीलोकगायाः पादाभ्यां पावितोनलः ॥२३३६॥
वसन्तस्य सुता धन्योदयभ्रातुः पुपोष सा । शुचिवंशाभिमानेन न डामरवधूव्रतम् ॥२३३७॥
लवन्यललनाः कुर्युर्वैधव्येपि धनेच्छया । ग्रामकार्यिकुटुम्ब्यादीक्षितम्बाभोगभागिनः ॥२३३८॥
मतिव्यामोहनिर्व्यूढवैक्लव्यस्याभिमानिनः । तयानुगाभ्यां च कृतं कोष्ठकस्योच्चकैः शिरः ॥२३३९॥
2340 रूढव्रणोपि क्रिमिसाद्भूतः कैरपि किल्बिषैः । निष्प्राणो गणरात्रेण कारायां कोष्ठकोभवत् ॥२३४०॥
अथ चित्ररथः शोषकृशः कलुषितं नृपम् । श्रुत्वा मल्लार्जुनेनाभूद्भयादत्यन्तदुःस्थितः ॥२३४१॥
पत्नी तस्यैकभार्यस्य प्रिया सूर्यमती सती । परलोकातिथिः पूर्वं विभवप्रतिभूरभूत् ॥२३४२॥
देहे याप्यहताप्याये गेहे गतपरिग्रहे । पत्यौ वैमत्यकलुषे नेषदप्येष पिप्रिये ॥२३४३॥
तीर्थस्थितस्य न स्यान्मे सागसोप्यप्रियं नृपात् । इति संचिन्त्य स प्रायान्मिषान्मर्तुं सुरेश्वरीम् ॥२३४४॥
2345 अथ नानार्थभूयिष्ठां धनाधीशाधिकश्रियः । स्थानात्ततस्ततस्तस्य पार्थिवोपाहरच्छ्रियम् ॥२३४५॥
कनकांशुकसंनाहवाजिरत्नायुधादिभिः । स्वा स्वा प्रकाशिता लक्ष्मीः स्पर्धयेवाधिकाधिका ॥२३४६॥
लोहरद्रोहघर्मोष्मशोषितो राजपादपः । तल्लक्ष्मीशैलतटिनीसेकेनाप्यायितोभवत् ॥२३४७॥
विप्लवे चिरनष्टेपि श्रीकल्याणपुरं न यः । वनवासोचितत्रासः शाल्वः[1] सौभमिवात्यजत् ॥२३४८॥
श्वेतच्छत्रांशुपृक्तेव चिन्तापाण्डुरवर्तत । बन्दीकृता नरेन्द्रश्रीर्निर्निद्रा यस्य मन्दिरे ॥२३४९॥

---

२३२३. [1]) Emended with C, संस्तम्भ्यैनं. २३२६. [1]) Emended; A विज्जराजौ. २३४८. [1]) Emended; A साल्वः सौभमिवा°; C साल्वरोऽन्धुमिवा°.

राज्ञा प्रयुक्तं विज्ञाय त्रिजयः स भवोद्भवः। तीक्ष्णमानन्दनामानमवधीत्तेन चावधि ॥२३५०॥तिलकम्[1]॥ 2350

इत्थं स पप्रथे तादृक्प्रजापालनशालिनः। सर्वोत्साहमयोनेहा जयसिंहमहीभुजः ॥२३५१॥

तीर्थस्थिते चित्ररथे पादाग्रग्रहणैषिणौ। भृङ्गारजनकावास्तां तद्भृत्यौ व्यक्तचक्रिकौ ॥२३५२॥

प्रचुरोत्कोचदानेन स्वीकृत्य नृपतिं ययौ। भृङ्गारो भग्नजनकः स्वामिश्रीभोगभागिताम् ॥२३५३॥

चिरप्रचलितं द्वारमुदये निदधे पुनः। मेघकालः सरित्पूरं प्रतीर इव पार्थिवः ॥२३५४॥

अवश्यभोग्यदुष्कर्मदत्तमर्मव्यथश्चिरम्। कथाशेषोभवच्चित्ररथो मासैरथाष्टभिः ॥२३५५॥ 2355

हास्यावहोप्यविकृतो विकृतोनपास्यो दुर्गन्धिरप्यतिजडोपि गृहीतवाक्यः।

पूर्वानुभावजयिनो भवति प्रभावाद्यस्य स्तुमस्तमतिसंस्तवमप्रतर्क्यम् ॥२३५६॥

निर्न्यैरायूतनावीर्यैश्चेष्टितैः प्रागभीष्टताम्। बाल्ये दुर्ललितस्यागाद्भर्तुश्चित्रचेतसः ॥२३५७॥

विसृज्यमानः संप्राप्तसाम्राज्येन दिवानिशम्। क्रमात्स्वीकृत्य ताम्बूलं तेन चित्ररथान्तिकम् ॥२३५८॥

दूत्यैः कृत्यान्तरज्ञत्वं प्राप्तवानाप्ततां गतः। तदन्ते घटयन्राज्ञस्तत्कृत्यान्कोशदर्शकान् ॥२३५९॥

तदा सर्वोन्नताशेषमन्त्रिशून्ये नृपास्पदे। सज्जकस्यात्मजः प्राप भृङ्गारो मुख्यमन्त्रिताम् ॥२३६०॥चक्कलकम्[1]॥ 2360

तस्य वैधेयताभ्यस्तकुदृष्टेरपि दुष्कृतम्[1]। नागुः पात्रार्पणात्तुच्छत्यागित्वेनापि संपदः ॥२३६१॥

योषित्कशिपुभोग्येन धन्यंमन्योपि सोभवत्। धान्यदानवदान्यत्वं गुरूणामाजगाम यत् ॥२३६२॥

पीठं कृतवतो रूप्यं[1] संयोज्य रजतैर्निजैः। विद्यमानं सुरेश्वर्या सायुज्यं तस्य युज्यते ॥२३६३॥

उर्वीशैरपि नार्वाग्भिर्योनुगन्तुमशक्यत। आषाढ्यामाद्यसंभारो निबिडद्रविणव्ययः ॥२३६४॥

नन्दिक्षेत्रे स तत्रार्थैः प्रणीतश्चणकादिभिः। तेन कालानुसारेण पोषितः पञ्चषाः समाः ॥२३६५॥ 2365

नर्माङ्कतायां निःसारो ज्ञातो यः सोधिकारभाक्। अचिन्त्यकृत्यकार्यासीत्स्वामिस्नेहप्रभावतः ॥२३६६॥

केलीसज्जैर्युवतिकरजैः कण्ठभूषादशायां यस्याज्ञायि त्रुटनमसकृत्क्ष्माधरेश्वासकृष्टौ।

सोप्यादिष्टस्त्रिपुररिपुणा प्राप भङ्गं न भोगी शक्त्याधायी क्वचन न परो भर्तुराज्ञाप्रभावात् ॥२३६७॥

तं च रिल्हणधन्यौ च समाश्रित्येतरेतरम्। कार्यं जनकभृङ्गारावुत्कोचेनापजह्रतुः ॥२३६८॥

कदाचिज्जनकं बद्ध्वा सार्धं भूषणमौक्तिकैः। सपुत्रदारं भृङ्गारो[1] बाष्पबिन्दूनमोचयत् ॥२३६९॥

स तं च जातु निर्विद्य मानहीनमकारयत्। रूक्षरक्ष्यार्पितोत्कोचधनाभ्यर्थितमैथुनः ॥२३७०॥ 2370

अङ्गुष्ठनखनिर्घर्षनर्तितानामिकोर्मिकः। वदन्वामोत्तरौष्ठामोदञ्चनैः कुञ्चितेक्षणः[1] ॥२३७१॥

भ्रूभङ्गोद्वेलितं[1]वलीनिम्नोन्नतललाटभूः। पुनरेकस्तयोर्लब्धकार्यो लोकमहासयत् ॥२३७२॥तिलकम्[2]॥

अव्यक्ताक्षरवामौष्ठ्यमीलिताक्षो रटन्बहु। हसन्सकरतालं च संपद्यन्यो व्यभाव्यत ॥२३७३॥

सोल्लेखप्रतिभोन्नीततत्त्वानां[1] हास्यवस्तुनि। कथाशरीरं पर्याप्तं नेदृशां[2] किमचेतसाम् ॥२३७४॥

सर्वस्मिन्वस्तुतोवाच्ये काले विगतयोग्यते। जाने तृणनृणां तुल्ये भृङ्गारोर्हत्यगर्ह्यताम् ॥२३७५॥ 2375

यः सर्वंकषनिष्कम्पशेमुषीकः क्षमापतिः। धुर्यतां धर्मचर्याभिर्गतः सुकृतशालिनाम् ॥२३७६॥

२३५०. [1]) A₁ ३. २३६०. [1]) A₁ ४. २३६१ [1]) Emended; A दुष्कृताम्.—[2]) Thus A; R G C मात. २३६२. [1]) A °वदन्य. २३६३. [1]) Emended with C; A रुप्यं. २३६९. [1]) Emended, A भृङ्गारं २३७०. [1]) Thus A; C emends रूक्षरक्षा°. २३७१. [1]) Emended; A कु-तेक्षण; C कुरुते क्षणः. २३७२. [1]) Thus A, perhaps read with C °द्वेल्लित°.—[2]) A₁ ३. २३७४. [1]) Emended; A °त्त्वारां.—[2]) Emended; A न दृशां.

लब्धबोधिरिवारेर्येश्चक्रे व्यापद्युपक्रियाम् । दावप्रदस्य दग्धाङ्गोऽप्याह्लादकत्वमिव चन्दनः ॥२३७७॥

गुरुसूरिद्विजान्मथप्रभृत्युचितयापि यः । प्रतिपत्त्या संविभेजे संविभाग्यकुटुम्बकम् ॥२३७८॥

प्रासादान्विजयेशादिदेवव्रातस्य शुद्धधीः । सुधादानेन निन्ये च धन्यः कैलासतुल्यताम् ॥२३७९॥

2380 मठदेवगृहारामह्रदकुल्यादियोजने । जीर्णोद्धृतिव्यसनिनस्तस्य चिन्ता निरन्तरा ॥२३८०॥

सकृद्दर्शितविद्वेषकार्यैः सब्रह्मचारिणाम्¹ । स क्रौर्यधाम पर्याप्तमीदृगप्युच्यते जडैः ॥२३८१॥

विश्वाप्यायनसप्तसिन्धुभरणब्रह्मादिसंप्रीणनप्रायं कृत्यमुदात्तमेकसमयोपात्तेन दुष्कर्मणा ।

स्वःसिन्धोर्लघुतां गतं सगर¹जश्रेणीचितादर्शना²ता येन जनाः श्मशानमिव सा योग्या किलास्थ्नां स्थितौ॥२३८२॥

तदन्तरे¹ शिवरथो द्विजः प्रचुरचक्रिकः । कायस्थपाशः पाशेन गलं बद्ध्वा व्यपद्यत ॥२३८३॥

इत्थं पृथ्वीपतिः कृत्वा तत्तत्कण्टकपाटनम् । अपेतविघ्नं सौजन्यनिघ्नो व्यधित मण्डलम् ॥२३८४॥

2385 विपक्षावरणापायप्रायेण पृथिवीभुजः । तैक्ष्ण्यमायान्ति जीमूतमुक्ता रविकरा इव ॥२३८५॥

परिणाममनोज्ञत्वं राजरत्नं स्वयं नृपः । माधुर्याधिक्यमुत्पाको द्राक्षाद्रुम इवाययौ ॥२३८६॥

प्रावर्तयत सातत्यात्क्रतून्विततदक्षिणान् । विवाहतीर्थयात्रादीन्महितांश्च महोत्सवान् ॥२३८७॥

संविभेजे स्वसंभारैः स क्रिया धर्मचारिणाम् । तेजोभिः कुलशैलानामोषधीरिव चन्द्रमाः ॥२३८८॥

प्रतिशातं सुतोद्वाहप्रतिष्ठादौ पुरीकसाम् । तेनौपयिकसामग्रीदानमव्यग्रचेतसा ॥२३८९॥

2390 दारूणामाकराः कोश¹वृद्धये ये धराभुजाम् । नवीचक्रे पुरं सर्वं स्वाधीनान्स विधाय तान् ॥२३९०॥

मज्जतो राजकार्येषु तत्त्वविद्भिर्हरार्चने । विस्मितैर्वीक्ष्यते तस्य निष्ठा काष्ठा मुनेरिव ॥२३९१॥

प्राह्णादारभ्य सायाह्न¹पर्यन्तं चास्य दृश्यते । न तत्कृत्यं गता यत्र नाध्यक्षत्वं विचक्षणाः ॥२३९२॥

अविचारान्धतमसे विद्या व्यद्योततान्तरा । जयापीडादिमेघश्रीसौदामन्या विलोलया ॥२३९३॥

तेन श्रियं तु विश्राण्य स्थास्नुं रत्नप्रभामिव । गुणवैचित्र्यचित्रस्य प्रकाशोनश्वरः कृतः ॥२३९४॥

2395 सूरयो येन – – –¹ विक्षतक्षेत्रसंपदाम् । ग्रामाणामामहार्केन्दु² सान्वयाः स्वामिनः कृताः ॥२३९५॥

विदुषां विततोत्सेधसौधास्तद्विहिता गृहाः । व्याप्ताः सप्तर्षिभिर्द्रष्टुमुत्कर्षमिव मूर्धसु ॥२३९६॥

प्रतिभाप्रभवे प्रश्नोपप्रश्ने च पथि पान्थता । सार्थवाहं तमालम्ब्य निर्दोषा विदुषां स्थिता ॥२३९७॥

आसीद्यथार्यराजस्य शयानस्याप्यतिप्रियः¹ । कामं लिङ्गाभिषेकाम्भःसंक्षोभप्रभवो ध्वनिः ॥२३९८॥

निद्राणस्य तथा वेणुवीणादिपरिहारिणः । दयितं तस्य निर्दोषविद्वज्जल्पविकल्पनम् ॥२३९९॥

2400 काले श्रीललितादित्यावन्तिवर्मादिभूभुजाम् । सिद्धं न यत्प्रतिष्ठादि निश्चं तदधुना गतम् ॥२४००॥

मठदेवगृहेष्वेवं स्वकालप्रभवेषु यत् । सर्वेष्वेव कृता तेन निर्व्यपाया व्ययस्थितिः ॥२४०१॥

रत्नादेव्या दृढारूढभर्तृवल्लभताभुवः । सर्वप्रतिष्ठाप्रष्ठत्वं विहारः प्रथमं गतः ॥२४०२॥

रिल्हणोथ गुणग्रामबान्धवो धर्मपद्धतौ । बभूव पूर्वपथिकः समस्तामात्यसंततेः ॥२४०३॥

---

२३८१. ¹) A °कार्यसब्रह्मचारिणा, evidently corrupt; emendation doubtful. २३८२. ¹) Conjectural reading; A सरगज°; C सुरगज°.—²) Thus A; perhaps read °स्पर्शनात्पूता; C °नात् आता. २३८३. ¹) Emended; A °न्तरं. २३९०. ¹) A कोष°. २३९२. ¹) A सायाह्न°. २३९५. ¹) $A_1$ indicates a *lacuna* of three *aksharas*; C supplements संप्राप्ते.—²) Emended with G (*see manu*); A °महा×कन्दु. २३९८. ¹) Emended; A °प्यतिभियः; cf. the passage ii. 126, to which evidently reference is made here. २४०१. ¹) Perhaps read °ष्वेवं.

तपोधनांल्लब्धवर्णान्धर्मवृद्धांश्च शुद्धधीः । विस्रम्भभवनस्थोऽपि शक्तस्त्यक्तुं न यः क्वचित् ॥२४०४॥

कृष्णाजिनोभयमुखीदानमुख्यैः सुकर्मभिः । धर्मकन्याविवाहैश्च यस्याशून्यत्वमायुषः ॥२४०५॥ 2405

सर्वेषामाहिताग्नीनां निष्प्रत्यूहा महात्मना । सर्वयागोपकरणैर्येन विश्राणितैः क्रियाः ॥२४०६॥

भोगान्बुभुजिरे भव्यान्सत्त्रे सूत्रितविस्मये । यस्य वर्णाश्चतुःषष्टिः कुदृष्टयस्पृष्टचेतसः ॥२४०७॥

अग्रहारगणोदग्रैर्निर्ततैर्मठसेतुभिः । पुरे परिष्कृते येन द्वयोः प्रवरसेनयोः ॥२४०८॥

आद्ये प्रवरभूभर्तुः पत्तने प्रत्तविस्मयः । प्राप्तः प्रतिष्ठाप्रष्ठत्वं यत्कृतो रिल्हणेश्वरः ॥२४०९॥

लोकान्तरगतां कान्तां कृतिनोद्दिश्य सुस्सलाम् । भ्लेरकप्रपास्थाने विहारस्तेन कारितः ॥२४१०॥ 2410

मार्जार्यास्तिर्यगुचितस्नेहविस्मृत्यपोहतः । मृतामनुमृतायास्तन्नाम्ना यः ख्यातिमागतः ॥२४११॥

तद्भर्तुरीर्ष्याकालुष्ये तस्या दूरामगा पुरः । प्रदेशे मानुषीवासीत्प्रिया क्रीडाबिडालिका ॥२४१२॥

तीर्थप्रस्थानदिवसादारभ्यास्या विराविणी । उत्सृजन्त्याहृतं भोज्यं सा शुचा जीवितं जहौ ॥२४१३॥

आरोहति परां काष्ठां प्रतिष्ठाविविधाध्वना । दिद्दा नृपतिपत्नीषु मन्त्रिस्त्रीषु तु सुस्सला ॥२४१४॥

श्रीचङ्कुणविहारं या यातं नामावशेषताम् । अश्मप्रासादवेश्मादिकर्मणा निर्ममेऽधुना ॥२४१५॥ 2415

अरघट्टप्रबन्धान्धुच्छायशालादिकर्मभिः । तस्याः संपूर्णतां पुण्यप्राकारा निखिला गताः ॥२४१६॥

पूर्वराजकुलाखण्डस्थण्डिलव्यापिनाखिलम् । तद्विहारेण नगरं नीतं नेत्राभिरामताम् ॥२४१७॥

प्रापि प्रतिष्ठयेशाशु यक्ष्मक्षपितया तया । विपत्तिः श्रीसुरेश्वर्यां प्राज्यसायुज्यदूतिका ॥२४१८॥

मठाग्रहारा धन्येन वल्लभाभिधया कृताः । नाभीष्टं लेभिरे नाम ख्यातिः पुण्यैर्विना कुतः ॥२४१९॥

अग्रहारमठांस्तद्वदुदयः कम्पनापतिः । कृत्वापि स्वाभिधामेव तत्संबद्धां सदाशृणोत् ॥२४२०॥ 2420

उदयद्वारपतिना सह ब्रह्मपुरीगणैः । कृते प्रष्ठे मठे शोभां लेभे पद्मसरस्तटः ॥२४२१॥

भृङ्गारतन्त्रपतिना श्रीद्वारेऽप्यग्र्यजन्मना । प्रत्यष्ठापि मठोद्यानदीर्घिकाद्यनघात्मना ॥२४२२॥

स्नानकोष्टमठब्रह्मपुरीसेत्वादिकर्मणा । सोलंथकारालंकारो बृहद्गञ्जाधिपो धराम् ॥२४२३॥

बुधः सदौषधीशान्तिहेमोर्जातः कलावतः । यः कविर्दानवत्त्वं च ख्यातस्त्यागेन योजयत् ॥२४२४॥

नृसिंहसेवी निर्हिंसद्धिरण्यकशिपुप्रदः । वराहसमये दत्तगौश्च योऽपूर्ववैष्णवः ॥२४२५॥ 2425

भट्टारकमठाभ्यर्णे पूर्णवार्धाविव प्रहिः । मठः भृङ्गारभट्टस्य ख्यात्यानौचित्ययोज्झितः ॥२४२६॥

सांधिविग्रहिको दार्वाभिसारोर्वीभुजोऽकरोत् । अष्टमूर्तेर्जड्डनामा प्रतिष्ठां पुण्यकर्मठः ॥२४२७॥

पुष्पाकरप्रणयभूः सुभगा विभूतिरेकस्य हन्त करवीरतरोर्द्रुमेषु ।

पुष्पाणि यस्य सफलीकुरुते स्वयं तत्प्रादुर्भवत्किमपि लिङ्गमनङ्गशत्रोः ॥२४२८॥

विभूत्या संविभक्तेषु भूभुजाखिलमन्त्रिषु । उत्कर्षकोटिं भुट्टाख्यः परं जल्हानुजोऽर्हति ॥२४२९॥

स्वयंभूः प्रकटीभूय पूजां स्वीकुरुते स्वयम् । ज्येष्ठरुद्रो वसिष्ठस्य यस्य वा त्रालकेश्वरः ॥२४३०॥ 2430

सविहारमठोदग्रवेश्मभिः कलुषोज्झितम् । तेन तत्र कृतं भुट्टपुराख्यं पुटभेदनम् ॥२४३१॥

---

२४०४. ¹) Emended with C; A तपोधनाह्ल°. २४१०. ¹) Thus A; cf. vii. 1239, where बलेरकप्रपा°. २४११. ¹) Emended with C; A उत्सज°. २४१४. ¹) Emended; A °शुना. २४२५. ¹) Doubtful emendation; A °कशिपुव :, without indicating the *lacuna*; C °कशिपुच्छिद :. २४२९. ¹) Emended; A उत्कट्टकोटिं. २४३१. ¹) Emended; A °षोज्झित .

नगरेपि हरः प्रत्यष्ठापि भुट्टेश्वराभिधः । सरश्च मडवाग्रामे धर्मविभ्रमदर्पणः ॥२४३२॥
नीत्वा प्रतिष्ठां वैकुण्ठमठादि स्वविहारभूः । रत्नादेव्या दृढं चक्रे स्वार्थप्रथनसुस्थिरा ॥२४३३॥
रत्नापुरे बहुद्वारमहार्घे निरधो मठः । धत्ते सुकृतहंसस्य स्फीतवीतंसविभ्रमम् ॥२४३४॥
2435 मृत्युंजयो राजतेस्याः सुधाधौतान्भजन्गृहान् । जनस्यानित्यतोच्छित्त्यै श्वेतद्वीपं सृजन्निव ॥२४३५॥
गोकुलानां विधातारो गोकुले विहिते तया । गणिताः शूरवर्माद्याः सतृणाभ्यवहारिणः ॥२४३६॥
गव्यामव्याहतस्वैरसंचारचरकाञ्चिते । तत्र वैतस्ततोयाढ्ये यदपोढामयं वपुः ॥२४३७॥
मुकुन्दस्तत्र साश्चर्यसौन्दर्यौदार्यमन्दिरम् । अथा गोवर्धनधरः सिद्धो ना विश्वकर्मणः[1] ॥२४३८॥
मठ – – – कृत्वा सा नन्दिक्षेत्रेकरोत्क्षितिम् । – – जयवनाद्येषु स्थानेषु च मनोरमान्[1] ॥२४३९॥
2440 दार्वाभिसारे[1][2]प्युर्वीशसुन्दरौदार्यमन्दिरम् । स्वनामाङ्कं पुरं चक्रे तया शक्रपुरोपमम् ॥२४४०॥
उद्दिश्योपगतान्मान्यमहत्तरमुखानपि । प्रतिष्ठा विविधाश्चक्रे सा राज्याश्रितवत्सला ॥२४४१॥
एवं सर्वाङ्गमामुक्तालंकृतेरथ स क्षितेः । विशेषकाभं भूभर्तृभूषा स्वमकरोन्मठम् ॥२४४२॥
अनुत्सिक्तेन यो दत्तभूरिग्रामो महीभुजा । तज्ज्ञैरारोपितः ख्यातिं मुख्यः सिंहपुराख्यया ॥२४४३॥
व्यधात्कारपथेशस्य दौहित्रः सिन्धुजान्द्विजान् । निविडान्द्रविडांश्चात्र प्राक्सिद्धच्छत्रमध्यगान् ॥२४४४॥
2445 किं वा मठादिनिर्माणस्तुल्या तस्य व्यधत्त यः । भूयः समग्र[1]नगरं कृत्वा कश्मीरमण्डलम् ॥ २४४५॥
जीर्णारण्यसधर्मायं कालदौरात्म्यतो भवन् । देशो धनजनावासैस्तेन भूयोपि योजितः ॥२४४६॥
आरम्भात्प्रभृति क्ष्मापे दीक्षितेभीष्टदत्तिषु । शिल्पिप्रायैरपि प्रायो मठदेवगृहाः कृताः ॥२४४७॥
सत्कोशांशुकरत्नादौ निरसूयेन भूभुजा । साधारणीकृते पौरास्तांस्तांश्चक्रुर्महोत्सवान् ॥२४४८॥
अकाण्डतुहिनापातोदीपाद्यैरप्युपद्रवैः । नष्टेषु शालिषु क्षीणं[1] सुभिक्षं तत्र न क्षणे ॥२४४९॥
2450 अद्भुतं चाभवद्वाचः श्रुता यन्निशि रक्षसाम् । केत्वाद्युत्पातजातं च दृष्टं नष्टाश्च न प्रजाः ॥२४५०॥
कोष्ठेश्वरानुजश्छुड्डनामा विहितविप्लवः । आहवैर्गूढदण्डैश्च राज्ञा निन्येन्तकान्[1]तिकम् ॥२४५१॥
चक्रे विक्रमराजादीन्भूपानुन्मथ्य पार्थिवः । परोहं गुल्हणादीनां राज्ञां वल्लापुरादिषु ॥२४५२॥
प्रजेशान्[1]कान्यकुब्जादावजय्येण नृपार्यमा । स व्यधाद्भव्यभूभोगवैभवानभिमानिनः ॥२४५३॥
विद्योतमाने निश्शेषैर्मन्त्रिस्तत्रैवमेकदा । भेजे जीवितदारिद्र्यं दरद्राजो यशोधरः ॥२४५४॥
2455 स भूम्यनन्तरोप्यन्तरज्ञो राज्ञोतिसेवया । विपत्तौ प्रकृतिक्रान्तसंतानश्चिन्त्यतामगात् ॥२४५५॥
निकृत्यास्य निजामात्यो विड्डसीहाभिधो यतः । संभुज्य दयितां राज्यमग्रौढतनयेग्रहीत् ॥२४५६॥
वशीकृत्य शनैर्देशं नाममात्रनृपं शिशुम्[1] । उच्छेत्तुमैच्छद्यावत्तं स जिघृक्षुः स्वयं क्षितिम् ॥२४५७॥
अन्योमात्यः पुरस्कृत्य यशोधरसुतं परम् । तावत्तेन समं भेजे पर्युकाख्यो विपर्ययम् ॥२४५८॥युग्मम्[1] ॥

---

२४३८.—२४३९. [1]) The last two *pádas* of verse 2438 and the following verse are found in the above, mutilated form in A at the foot of fol. 290, having been added subsequently by $A_1$; C reads: मठप्रतिष्ठां कृत्वा सा नन्दिक्षेत्रेऽकरोत स्थितिं । विहारान् यवनाद्येषु स्थानेषु च मनोरमान्. २४४०. [1]) The first two *pádas* of this verse have been subsequently added by $A_1$ at the top of fol. 291.—[2]) Emended; A दार्वासारे°; C दार्वागारेप्युर्वी°. २४४५. [1]) Emended; A सङ्ग्राम°. २४४९. [1]) Thus $A_1$ originally; corr. by $A_1$ to शालिष्वक्षीणं. २४५१. [1]) Emended with C. A निन्येन्तिका°. २४५३. [1]) Emended; A प्रजेशा×का°. २४५८. [1]) $A_1$ २. २४५७. [1]) Emended; A °मात्रशिशुं नृपम्.,

कश्मीरान्पृथुतः कृत्वा द्वैराज्यं तत्र कुर्वति । उत्सृज्य सज्जपालादीन्सर्वकार्यभरक्षमान् ॥२४५९॥
हेवाकप्रतिपत्त्यान्याभिधमौग्ध्यनिरुद्धधीः । सर्वाधिकाराधारोपान्मन्यमानोभिमानिताम् ॥२४६०॥ 2460
पर्युकाजर्यतः साज्जेरमीडमनुजं निजम् । प्रहिण्वतोनुमन्त्रित्वं मन्त्रज्ञोप्यभजन्नृपः ॥२४६१॥तिलकम्॥
अपूर्वमण्डलारब्धाघाटोपोद्दामशालिनः । क्व सर्वंकषनिष्कम्पप्रतिभाः कार्यवेदिनः ॥२४६२॥
क्व बालबालिशप्रायो नष्टव्यवहृतिर्जनः । धिक्परीपाकविषमं स्वाच्छन्द्यं मेदिनीभुजाम् ॥२४६३॥युग्मम्॥
कार्यापेक्षविपक्षैः स्वैरिच्छन्त्युद्रिक्तताच्छिदाम् । सैन्याश्मादुर्गकोशादेर्न – शान्त्यन्तरज्ञताम् ॥२४६४॥
प्रक्रियामात्रतो मन्त्रं गृह्णन्ति क्षित्यनन्तराः । कृतसाहायकैरेव चिन्त्या मित्रमुखा द्विषः ॥२४६५॥ 2465
युक्तयारब्धविधौ तत्र वैरिसाहायकप्रदे । क्व वैधेया बकप्रायाः कार्यसंदर्भवेदिनः ॥२४६६॥
दरद्राजद्रुमोन्योन्यभेदकूलक्षयाद्युतः । कर्तुं नाशक्यतामीडैः स्रोतोभिरिव मध्यगः ॥२४६७॥
पर्युकास्संकटे कार्ये तं तमुत्कोचमिच्छतः । स दुग्धघातमादातुमप्यासीदलसक्रमः ॥२४६८॥
पर्युकेण समं विड्डसीहः संधिं निबद्धवान् । यथागतं गते साज्जौ कश्मीरेन्द्रेमहीभुजम् ॥२४६९॥
सर्वाधिकारप्रवणाग्निरसंचारभूरुहः । प्रसक्ते तत्र शृङ्गारो मृत्युसौहित्यकार्यभूत् ॥२४७०॥ 2470
आ लक्ष्मकान्तात्सर्वाधिकारोस्थाद्द्वितीयया । वृत्त्या ततस्तु शतधा निर्भरारम्भ इवाभवत् ॥२४७१॥
अन्येप्यमात्याः सामन्याद्धर्तुर्माहात्म्यभागिनः । प्रमयं समये तस्मिन्दैवात्किमपि लेभिरे ॥२४७२॥
प्रशंसामानृशंसस्य किं विदध्मो धराभुजः । मृतामात्यार्भकापत्यं निधत्ते यः पितुः पदे ॥२४७३॥
प्रवर्तिता स्वमात्यानां भृत्यैः पद्धतिरद्भुता । निर्वैलक्ष्याः प्रभोर्लक्ष्मीं जहुः स्वगृहिणीमिव ॥२४७४॥
भूभर्तुः प्राभृतीकृत्य मृतस्य स्वामिनः श्रियम् । संतानस्य विभूत्यर्थं कृत्वा कार्यं हि तेहरन् ॥२४७५॥ 2475
गङ्गाधिपे त्रिभ्वनाम्नि विपन्ने रक्षिता परम् । एकेन सहजाख्येन सहायानां महार्घता ॥२४७६॥
नाध्यारुरोहाधिकारं पार्थिवेनार्थितोपि यः । स्वामिसूनोश्शिष्टनाम्नो बुद्ध्यै साहायकं व्यधात् ॥२४७७॥
निष्ठायामप्रतिष्ठत्वं दृष्ट्वापि प्रभविष्णुभिः । धिक्परंपरया भृत्याः प्रावर्ध्यन्तेधिकाधिकम् ॥२४७८॥
आसीदाश्रमनोपयोगि कलशे स्रष्टुर्जगल्लङ्घनक्रान्ताङ्घ्रिक्रमहार्यधाम्नुररिपोस्त्रैस्रोतसं यत्पयः ।
शंभुस्तद्विदधे स्वमूर्धनि जडेप्येकप्रयुक्तादृतौ स्युः सर्वेप्यवशा गतानुगतया गाढादराः स्वामिनः ॥२४७९॥
सुज्जिनिर्वासनप्राप्तप्ररोहो दुर्नयद्रुमः । साज्जिजाद्यकृताप्यायः क्रमेणासीत्फलोन्मुखः ॥२४८०॥ 2480
द्वित्राः समाः समन्युः स विड्डसीहस्ततोभवत् । अकुण्ठराज्याद्युत्कण्ठं दूतैरकृत लोठनम् ॥२४८१॥
दूरादखण्डितोत्थानः शूरमाश्रित्य भूपतिम् । जीवन्कृषिवणिज्यादिकर्मणा स सबान्धवः ॥२४८२॥
दरदां मन्त्रिणां जातज्ञातेयैरभियोगभाक् । चक्रेलंकारचक्राद्यैर्डामरैः सह चक्रिकाम् ॥२४८३॥युग्मम्॥
सोप्यद्रिदुर्गस्वाम्यस्य प्रथमप्रस्थितौ ह्रुवत् । क्षुद्रो जनकभद्राख्यः पार्श्वं लिप्सोर्व्यपद्यत ॥२४८४॥
कर्णाहकादावभवत्स्थाने स्थाने विलोक्य तम् । प्रस्थिते कस्यचिद्द्रोहे बुद्धिः कस्यापि साधुता ॥२४८५॥ 2485

२४६१. 1) Emended; A सज्जे°.—2) A, ३. २४६३. 1) A °बालि°.—2) A, २. २४६४. 1) Thus A; perhaps read विपक्षान्त°; C न शंसन्त्य°. २४६६. 1) Emended; A apparently वैधेयाम्बकप्रायान्कार्य°, as read in R C. २४६७. 1) Emended; A °न्योन्यं भेद°. २४६९. 1) Emended; A सज्जौ. २४७१. 1) Emended with G (*sec. manu*); A निर्भरा. २४७३. 1) Emended with C; A °मात्यर्भका°. २४८०. 1) Emended; A सुज्जिनि°. २४८२. 1) A दूरा–खण्डि°.—2) Emended; A जीवत्कृषि°. २४८३. 1) A, २. २४८४. 1) Doubtful emendation; A साप्यद्रि°.

तं तथा विपुलारम्भमपि शाठ्यादसंभ्रमम् । प्रविविक्षुमुपैक्षिष्ट कौसीद्यानुद्यमो नृपः ॥२४८६॥

पोषिते प्रेषितश्रीकैरुत्पिञ्जे विप्रवेषिभिः । अथोदयद्वारपतिः प्रैषि विश्वंभराभुजा ॥२४८७॥

संगृह्णता चमूस्तेन[1] पुरे शंकरवर्मणः । प्राप्तोऽलंकारचक्रस्य पार्श्वमभावि लोठनः ॥२४८८॥

अपि विग्रहराजाख्यः सूनुः सुस्सलभूपतेः । भोजः सल्हण[1]जन्मा च श्रुतौ तेन सहागतौ[2] ॥२४८९॥

2490 अथोपह – –[1]स्थान एव तेषां स सत्वरः । मार्गं बहुदिनोल्लङ्घ्यमेकेनाह्ना व्यलङ्घयत् ॥२४९०॥

सयूथ्यकन्यामथनासिद्धेर्यातो विधेयताम् । तदास्कन्दहतस्पन्दः स पलायिष्ट डामरः ॥२४९१॥

सिन्धोर्मधुमतीमुक्ताश्रिया अन्तः[1]स्थितं ततः । शिरःशिलाभिधं कोट्टमथ तैरधिशिश्रिये ॥२४९२॥

गहने त्रुडितः कोट्टे स्थितः किं वा स इत्यसौ । न निश्चिकाय द्वारेशो भ्राम्यन्दीर्घासु भूमिषु ॥२४९३॥

अथोपालब्धतद्दुर्गारोहणेऽस्मिन्नशङ्क्यत । दैवेनापि न भूभर्तुः प्रभावो निष्पराभवः ॥२४९४॥

2495 उत्थानोन्मुखतां सर्वेष्वुत्पिञ्जे तत्र दस्यवः । पाल्वलास्तिमयो वर्षपृथक्कृत इवाभजन्[1] ॥२४९५॥

तैस्त्रिल्लकादिभिर्गूढवैकृतैरथ लोठनः[1] । पार्श्वीहरिः[2] पुनश्चक्रे मायाचतुरचाक्रिकैः[3] ॥२४९६॥

पुरग्रामादिदग्धारमसाध्यमथ धावताम् । पदे पदे कृच्छ्रगतं स्वपक्ष्यास्तमरक्षिषुः ॥२४९७॥

दिक्चक्रे नियतेर्भ्राम्यन्दृश्यादृश्यः स सर्वतः । कल्पात्ययोदयी ब्रह्मपुत्रः केतुरिवाभवत् ॥२४९८॥

श्रान्तैरमात्यैर्निर्बन्धे संधौ कालानुरोधतः । मेने मडवराज्योर्वी हारितेवाखिला जनैः ॥२४९९॥

2500 असंवृत्तप्रतीकारतयारोहत्सु वैरिषु । तदन्तरेऽथ संमन्त्र्य धन्यं प्रास्थापयन्नृपः ॥२५००॥

तत्स्कन्धारोपिते[1] कार्ये व्रीडां गच्छेत्तटस्थताम् । विपर्यासमथ द्वाराधीश इत्यभ्यधाज्जनः ॥२५०१॥

भिक्षुर्मल्लार्जुनस्त्वासीदेक एव त्रयस्त्वमी । संहता हन्त दुःसाधा दध्युश्चेत्यखिलाः प्रजाः ॥२५०२॥

द्वाराधिपस्त्वहेवाकव्यवहारो महीपतेः । सिद्धिं स्वस्याप्रसिद्धस्यापि श्वाच्छन्दद्योद्यमोऽभवत् ॥२५०३॥

एकाकी यः किल न भजते मूढतां भर्तृकार्ये नौदासीन्यं श्रयति च तथा वशधीने च तस्मिन् ।
निर्हेवाकव्यवहृतितया साध्यसिद्धिं किलेच्छंस्तादृङ्मन्त्री प्रभवति परं नाल्पपुण्यस्य राज्ञः ॥२५०४॥

2505 पञ्चचन्द्रे मृते तस्यानुजं राजोपवेशने । न्यधाद्यं षष्ठचन्द्राख्यं सोऽप्यारब्धै विनिर्ययौ ॥२५०५॥

त्रिवाहुकादयो मुख्य – – –[1]: सह गायकैः । धन्यमेवान्वयुर्बाह्याधाम्ये राजोपजीविनः ॥२५०६॥

धन्यादिषु तिलग्रामं कोटसिन्धुतटाश्रयम् । अथ – – –[1]द्वारेशो द्रङ्गस्थः पृष्ठपद्धतीः ॥२५०७॥

हठप्रवेशायोग्याजिमुख्यहेवाकवर्जितः । शोषयन्द्विषतो धैर्यगम्भीरं स व्यवाहरत् ॥२५०८॥

कुठारिकादिभिः कारुवृन्दैर्मन्दिरपद्धतीः । धन्यो मधुमतीतीरे नगरस्पर्धिनीर्व्यधात् ॥२५०९॥

2510 निर्धर्मं द्रुमसंबाधं सनिकेता वनस्थलीः । कटकं सर्वभोगाढ्यं शक्तः परिवृढोऽकरोत् ॥२५१०॥

देशे भूरितुषारोमहिमर्ती भाग्यसंपदा । भूभर्तुरभियोग्यैव भूरभून्नानुभूषिता ॥२५११॥

भुवनाद्भुतसंभारप्रेषणं विजयैषिणः । द्वैराज्यमीलिताशेऽपि काले राज्ञो न खण्डितम् ॥२५१२॥

---

२४८८. [1]) Emended; A च मूर्तेन. २४८९. [1]) Emended; A सुल्हण°.—[2]) Emended with C; A °गता. २४९०. [1]) Thus A; perhaps read अथोपहत्या उत्थान; cf. viii. 2513; C अथोपाचित उत्थान. २४९२. [1]) Conjectural reading; A °श्रियाखन्तस्थितं; G (*sec. manu*) °श्रिय अन्तो स्थितं. २४९५. [1]) Doubtful emendation; A °भवन्. २४९६. [1]) Comp. for this name viii. 2799. 2912. 3313.—[2]) Emended; A पा हरिः; cf. viii. 2748. 2750. 2793. 2837.—[3]) Emended; A °क्रिके:. २५०१. [1]) A तस्कन्धा°. २५०६. [1]) A does not indicate the *lacuna*; C मुख्याचारणैः. २५०७. [1]) Thus A; perhaps read with C अथास्त्रगच्छद्दा°.

उत्थान एवोपहतिं[1] भये यास्यत्यगात्परम् । भारोद्विपीडितग्राम्याक्रन्दः क्षान्तिवर्त्मनाम्[2] ॥२५१३॥
दीर्घप्रवासनिर्वेदाच्चलितान्दर्शयन्नुषम्[1] । स्थास्नूंश्च तोषयन्दायैः स्थैर्यं निन्ये नृपश्चमूः ॥२५१४॥
इत्थं त्रिचतुरान्मासांस्तिष्ठद्भिरपि निष्ठुरैः । नैवारातुमशक्यन्त कटकैः कोट्टसंश्रयाः[1] ॥२५१५॥
तेषां हि वीवधासारनिरोधादीनि रुन्धताम् । अप्रियाणि न जातानि दैन्यदायीनि कानि चित् ॥२५१६॥
चिकीर्षवस्तुषारान्ते स्वविभूतिप्रकाशनम् । तस्थुरङ्कुरितोल्लासाः पर्वता इव डामराः ॥२५१७॥
कृषिं कृषीवलैर्वेदपाठमुत्सृज्य च द्विजैः । उत्पिञ्जसज्जैर्ग्रामेषु सर्वतः शस्त्रमाददे ॥२५१८॥
प्रतीक्षमाणाः प्रालेयप्रलयं मार्गभूभृताम् । दारदास्तुरगानीकैः सज्जैस्तस्थुर्जिगीषवः ॥२५१९॥
मिहिकासंहतेः[1] कालतूलतल्पाकृतेर्दधत् । पातभीतिं जनो राजसेना शश्वदवेपत ॥२५२०॥
इत्थं प्रत्यर्थिसामर्थ्यपरमार्थापरीक्षणात् । क्ष्माभृन्मिथ्यैवमारेभे संदेहं च जयेभजत् ॥२५२१॥
वैदग्ध्यदिग्धमनसामयमेक एव कोऽप्यस्ति वञ्चनविधेरुचितः प्रकारः ।
येनात्मना किल विशङ्कितशक्तयस्ते मुग्धेपि वैरिणि विचारहतोद्यमाः स्युः ॥२५२२॥
प्रवादमात्रसाराद्यस्त्रस्येत्परिकरादरेः । स्वयैव तस्य विद्ध्येत सिद्धिश्चिन्तान्धया धिया ॥२५२३॥
विध्येदाशु शिलीमुखैः प्रतितरेत्पत्त्रैरवस्कन्दनं बध्नीयात्तदिदं गुणैः परिकरैर्मिथ्या प्रसिद्धैरिति ।
स्याच्चेदम्बुरुहं द्विपस्य भयकृच्चिन्तासहैः साहसं प्रत्यूहेत ततो निजैरपघनैरप्येतदुन्मूलने ॥२५२४॥
लोठनार्थैर्हि कर्णाहा[1]न्निस्तीर्णैस्तैः कथंचन । प्राप्तेलंकारचक्रेपि राज्यमज्ञायि निर्जितम् ॥२५२५॥
मिथ्यैव मथिता कन्था स्वयूथ्यैः कथमन्यथा । तस्मिन्नमन्दमास्कन्द धावन्द्वाराधिपो ददौ ॥२५२६॥
प्रत्यवस्थित्यसामर्थ्यात्ततः कोट्टं व्यसर्जयत् । स राजबीजिनस्तांश्च परेद्युः स्वयमन्वगात् ॥२५२७॥
कोट्टाद्रिः सलिलस्यान्तः कृशोर्ध्वः[1] पृष्ठदैर्घ्यभाक् । स तैर्वैसारिणं[2]मासव्यमो वक्र इवैक्ष्यत ॥२५२८॥
निःसामर्थ्यं तद्विलोक्य गजागारमिवागजम् । तत्यजुर्विजयाशंसां भयं चोदवहन्हृदि ॥२५२९॥
ततः शरैर्दृषद्वर्षैर्बाध्याश्चेतो विरोधिनः[1] । अर्गलो रक्षणमितो रक्ष्या यन्त्रोपला इतः ॥२५३०॥
इत्थं स तैरभिदधद्धैर्यादादाय[1] डामरः । मेने स्वगुप्तिमात्रार्थी न युद्धे बद्धनिश्चयः ॥२५३१॥युग्मम्[2] ॥
ततः कन्दलितास्कन्दे तिलग्रामे द्विषद्बले । प्रतीकाराक्षमे दस्यौ ते चिन्ताक्षामतां दधुः ॥२५३२॥
विस्रम्भविलुप्तप्रज्ञासौष्ठवो लोठनः पुनः । डामरं कृत्यसंपूर्णमगूढं तमगर्हत ॥२५३३॥
भोजं[1]स्नूद्विजितं यस्मो द्रोहो रोदेदिति ब्रुवन् । रुद्ध्वा पितृव्यं तं व्याजस्तुत्या नित्यमुपाचरत् ॥२५३४॥
विमुखे लोठनेकुण्ठशाठ्यस्तस्य तु सान्त्वनैः[1] । मेने मन्त्रज्ञतां किंचित्सोवार्तिष्ट[2] च संविदि ॥२५३५॥
हन्यान्मां भूभृदित्येव यातेष्वेतेषु संत्यजेत् । नास्मानुक्त्वेत्यरीरसीत्स पितृव्यं गमनार्थनात् ॥२५३६॥'
त्वय्यस्मासु च सर्वेषु वेष्टितेषूत्कटा द्विषः । पृष्ठकोपमसंभाव्य कुतश्चिन्निश्चलोद्यमाः ॥२५३७॥

---

२५१३. [1]) Doubtful emendation; A एवौपह भंव; C एवोपहतभये.—[2]) Emended; A °क्रन्दं क्षान्ति° (the letter क्ष is of unusual shape and resembles ह्म); C क्षान्तिचमू°. २५१४. [1]) Emended; A चलितां; another possible emendation would be चलिता दर्शयन्नुषम् । स्थास्नूंश्च. २५१५. [1]) Emended; A संत्राया:. २५२०. [1]) Emended with G (*sec. manu*); A हिमिका°. २५२५. [1]) Thus A; cf. कर्णाहका° viii. 2485. २५२८. [1]) Emended; A कृशोध:.—[2]) Emended with C; A तैर्वैसारण°. २५३०. [1]) Emended; A शरैर्द्विषद्°. २५३१. [1]) Emended; A तैरभिरुद्धैर्या°; C तैरभिरुद्धैर्याबला°.—[2]) $A_1$ २. २५३४. [1]) Emended; A भौजं; R भोजो. २५३५. [1]) Emended; A सान्त्वने:; C सान्त्वने.—[2]) Doubtful emendation; A °त्सवर्तिष्ट च; C °त्समवार्तिष्ट सं°.

यद्यहिरभ्युः सिध्येत्तदेकं त्यज मामितः । अन्यांश्चान्यानानीय दरदो वा जवेन वः ॥२५३८॥

बन्धनं त्वपनेष्यामि युक्तमित्युक्तवांश्च तम् । डामरं विदधे किंचिदिव सामत्यमाश्रितम् ॥२५३९॥

2540 विमोक्ष्यामि क्षपायां त्वामद्य श्वो वेति तं ब्रुवन् । स त्वसंक्षीणदाक्षिण्यो विप्रलेभे प्रतिक्षणम् ॥२५४०॥

अध्वरोधे सुदूरस्थैर्यथावदकृतेरिभिः । बाह्यमामाहतैरन्यैस्ते त्वशान्यस्त्यवाहयन् ॥२५४१॥

दुरुदर्कमथाशङ्क्य समयं ते व्यजिज्ञपन् । धन्यादयोऽहितैः संधिर्विधेय इति भूपतिम् ॥२५४२॥

तैस्तैर्निमित्तैः संधानमविधेयं विदन्नृपः । तानादिदेश कर्तव्यं कोट्टाट्टालकवेष्टनम् ॥ २५४३ ॥

संदिदेश च दायादा यच्चेरन्त्यातिमागताः । निजास्पदे तांश्चहति दत्तोत्कोचेथ डामरे ॥ २५४४ ॥

2545 भूत्वा कठोरेर्ष्यारम्भानिष्ठा निःसौष्ठवा ध्रुवम् । क्रियातिपत्त्युपालम्भैर्यास्यामोनुशयं विशाम् ॥२५४५॥ ॥

नात्यक्षक्रूर्षैदेवश्चेत्सप्राहान्युद्यमं ततः । दुग्धप्रवाहं प्राप्स्यस्त्वं भुक्त्वेत्यन्योऽपि तप्यते ॥२५४६॥

प्राप्तव्यं प्राप्तवान्सर्वो निजैः कृत्यैः शुभाशुभैः । क्रियातिपत्तिर्लोकेत्र त्रैलोक्यं तु मुखेर्प्यते ॥२५४७॥

पादेषु पक्षेषु च सत्सु नोर्व्यां न व्योम्नि वा पक्षपिपीलकस्य ।

पङ्ग्वन्धवच्चङ्क्रमणं तु गर्ते किं संपदा स्यान्नियमे गतीनाम् ॥२५४८॥

सहस्रपादस्य गतेर्निमित्तमनूरुभावेप्यरुणः प्रजातः ।

तस्याभविष्यद्यदि पादयुग्मं ततोधिकं तत्किमिवाकरिष्यत् ॥२५४९॥

2550 उपेक्ष्य साक्षितां तस्मात्कृत्स्नं कोट्टं विवेष्ट्यताम् । प्रयातु तत्रैवास्माकं तेषां च पुरुषायुषम् ॥२५५०॥

अविश्रान्तो वातो दहन इव सोयं जनयति प्रसक्तिं सातत्याद्दलयति कुलाद्रीनपि जलम् ।

प्रसूते कृत्येषु व्यवसितिरनिर्व्यूढसुदृढा फलावाप्तिं लोके प्रतिकलमसंभाव्यविभवाम् ॥२५५१॥

क्रूरां नरपतेराज्ञां श्रुत्वा धन्यादयस्ततः । कोट्टप्रतोलीं कूलं तं त्यक्त्वाप्यारुरुहुर्जवात् ॥२५५२॥

कथं युद्धं विधास्यन्ति कथं स्थास्यन्ति वेति तान् । शरान्किरन्तः कोट्टस्था यावत्प्रैक्षन्त कौतुकात् ॥२५५३॥

अधः सोप्यूर्ध्वगान्युद्धैर्निष्पीड्य निविडैर्व्यधात् । धन्यः प्रदेशं तावत्तं निकेतैः पत्तनोपमम् ॥२५५४॥युग्मम् ॥

2555 अविश्रान्तैस्ततः संख्यैरसंख्येयश्चमूक्षयः । प्रतिक्षणं प्रववृते सैन्ययोरुभयोरपि ॥२५५५॥

परेद्युः शारदां दृष्ट्वा संप्राप्तो गर्गनन्दनः । संक्रन्दनपुरीपौरवृद्धिं योधैर्हतैर्व्यधात् ॥२५५६॥

अलंकाराभिधो बाह्यराजस्थानाधिकारभाक् । अधृष्यो मानुषैर्युद्धैर्विरुद्धान्बहुधावधीत् ॥२५५७॥

क्व भूधरचरैः स्पर्धा वसुधातलचारिणाम् । तथापि पृतनायन्त्रानन्त्यं चिन्त्यमचिन्त्यकृत् ॥२५५८॥

अल्पीयांसः कोट्टनिष्ठा भूयिष्ठाः कटकाश्रयाः । अतः पूर्वे बहून्घ्नन्तोप्यासन्कृत्यात्पया क्षताः ॥२५५९॥

2560 श्लिष्टद्वाराररिपटं छिद्रैः पीडितमाहवैः । मीलिताक्षमिव त्रासात्ततो दुर्गमजायत ॥२५६०॥

गोमृभेदान्तरद्वैधमुखच्छिद्रानुसारिणः । धन्यादीन्वीक्ष्य विश्वासं कोट्टस्था नोपलेभिरे ॥२५६१॥

निद्राच्छेदार्थमन्योन्यं क्रोशन्तो नास्वपन्निशि । स्वपन्तोह्नि तु निःशब्दशून्यं कोट्टमदीदृशन् ॥२५६२॥

---

२५३८. [1]) Emended with G (*sec. manu*); A वा॰वेन; C बवेन. २५४०. [1]) Emended with C; A श्वो.—[2]) Emended with C; सत्वसङ्क्षी°. २५४५. [1]) A कठो॰ष्या°; C कठोरीऽष्या°.—[2]) Could be read in A also °निष्ठानि°.—[3]) A °स्यामो॰शयं C °स्यामोऽसंशयं. २५४६. [1]) Emended; A प्राप्स्यन्स. २५४७. [1]) Emended; A °लोके त्रैलो°.; C °लोकेऽपि. २५४८. [1]) Emended with G (*sec. manu*); A गर्भे. २५५३. [1]) Emended; A °त्प्रेक्षन्त. २५५४. [1]) Thus A; perhaps read अधःस्थो.—[2]) A, २. २५५६. [1]) Emended with G (*sec. manu*); A °पौरयोधैर्वृद्धिं हते°

निशासु तत्तस्पृतना यामतूर्यरवैरपि । चटकाः कोटरगता मेघशब्दैरिवात्रसन् ॥२५६३॥
अहर्निशं भ्रमन्तीभिर्नौभिः संरुद्धपायसः । तान्समभ्रंमयन्सर्वप्रकारं राजसैनिकाः ॥२५६४॥
ते रुद्धपायसस्तर्षशोषं कंचिद्विषेहिरे । निःसंचारास्तु संक्षीणे भोक्तव्ये क्लैव्यमाययुः ॥२५६५॥ 2565
बुभुक्षवः क्ष्मापयोग्यान्भोगान्भाग्योर्जितांस्ततः । कदर्थैर्नृपदायादा अशनाशंसनं व्यधुः ॥२५६६॥
दूरे स्पर्धास्तु निस्तीर्णाः क्षुधितास्तेधिकं व्यधुः । भूभर्तुर्भोगभागिभ्यो भृत्येभ्योप्यन्वहं स्पृहाम् ॥२५६७॥
व्यूहेष्वस्माद्व पर्याप्तमकार्यमिति भाषिणम् । भोजं व्यधान्मध्यभृङ्गे दुर्गस्याथ स तं पृथक् ॥२५६८॥
एकस्य वार्द्धकाद्देहयापुत्रत्वादपरस्य च । जानन्नयोग्यतां मेने द्वैराज्यार्हं तमेव सः ॥२५६९॥
विनामुं चानयोः सम्यक्संरम्भेरन्न वैरिणः । इति मिथ्या प्रथां निन्ये तद्विनिःसरणं बहिः ॥२५७०॥ 2570
कान्तालंकारचक्रस्य काकुन्ती क्षयमित्वरी । चक्षूरागात्स्पष्टचन्द्रे सान्द्रस्नेहार्द्रतां गता ॥२५७१॥
बहिराभ्यन्तरं भेदं नयन्ती मन्त्रमाययौ । साल्हणेः कर्णसरणिं सत्रमन्विष्यतोन्वहम् ॥२५७२॥ युग्मम्॥
रागध्वान्ताम्वितधियः प्रतिभेदभयेन सः । तस्य प्रकाशयन्नेनां गन्तुं तु प्रार्थनां व्यधात् ॥२५७३॥
क्षमात्राङ्शिक्षितोपेक्षो मैत्रीस्थैर्ये मुदं भजन् । नागः सागस्यपि दधे बोधिसत्त्व इव क्रुधम् ॥२५७४॥
प्रियामन्युः सरागेण मृत्युहेतुर्महानपि । हृदि विस्मर्यते पृष्ठे शरभेणेव वारणः ॥२५७५॥ 2575
अथ प्रस्थापितो भोजः स्वमारिशिबिरान्तरात् । यातप्रायोप्यलंकारतनयेनानुयायिना ॥२५७६॥
द्रोहेच्छया मयाद्यापि ध्वस्तसत्त्वेन सत्वरम् । व्यावृत्यारोपितो भूयः कोट्टस्थस्यान्तिकं पितुः ॥२५७७॥युग्मम्॥
निर्भर्त्स्य पुत्रं गन्तासि श्वो निशीत्यभिधाय तम् । तमस्थापयत्सोह्नि यात इत्यखिलान्वदन् ॥२५७८॥
मोक्षल्यानिश्चयादेकः प्रायाद्री श्वः प्रयास्यतः । बोधितैरथ धन्याद्यैरजागार्यखिलैर्निशि ॥२५७९॥
प्रस्थास्नुः स निशीथेथ कोट्टाट्टालाद्व्यलोकयत् । जाग्रतः कटके सर्वान्परितो दीपितानले ॥२५८०॥ 2580
प्रकाश्य वह्निना दुर्गं प्रतोलीनिर्गतो यथा । पिपीलकोप्यलक्ष्यस्त्वं नोन्मुखानां द्विषां व्रजेत् ॥२५८१॥
ज्वालाप्रकाशचांञ्चल्याद्विलोला इव रक्षिताः । न्यषेधन्मूर्धकम्पेन साल्हणिं साहसाद्धृशः ॥२५८२॥
तद्गन्तुमक्षमं क्षिप्रं क्षपाप्रान्ते स डामरः । अधोवातीतरच्छभ्रमालिङ्गितवटाकरम् ॥२५८३॥
क्षेमराजाभिधानेन डामरेशेन सोन्वितः । शिलां वितर्दिकातुल्यामध्यास्त श्वभ्रमध्यगाम् ॥२५८४॥
आरुह्यासनमात्रे तां पर्याप्तां पातभीतितः । निर्निद्रौ पञ्चरात्रीस्तावत्यवाहयतामुभौ ॥२५८५॥ 2585
निर्वर्तितप्राणयात्रौ करस्थैः सक्तुपिण्डकैः । तत एव व्यजहतां विष्ठां नीडादिवाण्डजौ ॥२५८६॥
अव्यक्तव्याकृती चित्रन्यस्तावस्थिताविव तौ स्थितौ । वीक्ष्यारिकटके लक्ष्मीं पृष्ठाद्विस्मयमीयतुः ॥२५८७॥
तयोराश्रीयत स्फीतशीतविस्मृतिकारिणा । जयसिंहप्रतापाभिसंतापेनोपकारिता ॥२५८८॥
षष्ठेह्नि तत्र निःशेषीभूतभोक्तव्ययोरथ । क्षतक्षार इवारम्भि तुषारं वर्षितुं घनैः ॥२५८९॥
अगृह्यतोचिते दन्तवीणावाद्योद्यमे तथा । शीतासादितसादेन पाणिपादेन स्वमता ॥२५९०॥ 2590

---

२५६४. 1) Emended with C; A तान्ससम्भ्रम°. २५६५. 1) The letter ष is indistinctly written; C °शोषं; R °रोषं. २५६६. 1) Emended; A °समैर्व्यधुः. २५७२. 1) $A_1$ २. २५७३. 1) Emended with C; A प्राका°. २५७६. 1) A °शिविरा°. २५७७. 1) $A_1$ २. २५७८. 1) Emended with C; A निर्भर्त्स्य. २५८२. 1) Emended; A °प्रकाशं चाम्ब°. २५८३. 1) Emended; A °क्षम:. २५९०. 1) Emended with C; A पाणिपादेन.

तावच्चिन्तयतामद्य भुञ्जीताभिहतौ ध्रुवम् । पतिष्यावोरिकटके पाशबद्धाविवाण्डजौ ॥२५९१॥
क पूत्कुर्वः कस्य वावां विदितौ यो विनिर्हरेत् । ततः पङ्कान्तरामग्नौ यूथपः कलभाविव ॥२५९२॥
विषमस्थावथेत्थं तौ नक्तमभ्यर्थ्य डामरः । आरोप्य रज्ज्वावसथे शून्ये स्थापयति स्म सः ॥२५९३॥
कृतशीतप्रतीकारौ पलालानलसेवनैः । दुःखं व्यस्मरतां तत्र निद्रया चिरलब्धया ॥२५९४॥
2595 ततोऽप्यभ्यधिका व्यापद्भेजे लोठनविग्रहौ । अचक्षुष्यौ जनात्स्निग्धां गिरमप्यापतुर्न यौ ॥२५९५॥
यत्रकोद्रवपूपादि तयोः सतुषमश्नतोः । गात्रैर्वस्त्रैश्च वैवर्ण्यं शुद्धिवन्ध्यतया दधे ॥२५९६॥
धन्योऽलंकारचक्रस्य क्षीणभोज्यस्य सर्वतः । स्वीचकारान्नदानेन तुल्यौ होल्यशस्करौ ॥२५९७॥
ततः स दूतैर्विक्रेतुमङ्गीचक्रे नृपद्विषः । बुभुक्षाक्षुभितो भृत्यभेदभीतश्च डामरः ॥२५९८॥
दुस्तरव्यापदुद्रेकद्रुतसत्त्वतयात्यजत् । पापोपलिप्तचित्तमधर्माकीर्तिसाध्वसम् ॥२५९९॥
2600 भूपतेर्विद्विषच्छेषस्थापनात्स्वस्य रक्षणम् । ख्यातिशुद्धिं चिकीर्षुश्च कुशकाशावलम्बनम् ॥२६००॥
भृत्यस्योदयनाख्यस्य धिया प्रच्छादितं तथा । ररक्ष साल्हणिं भोज द्वौ तु दातुं स तत्वरे ॥२६०१॥
तं विना च तयोर्भूपाहण्डं जानन्नसांप्रतम् । अबाधं स्वस्य चाशेषकृत्यं युक्तममन्यत ॥२६०२॥
भोज्याभावकृतां तस्य व्यापदं तच्च मन्त्रितम् । तदा नाशासिषुर्धन्यादयः संधिं विधित्सवः ॥२६०३॥
मिथश्चिचलिषा तेषां कस्माच्चिदभवत्ततः । किं पुनस्तेन दायादद्वये दातुं प्रतिश्रुते ॥२६०४॥
2605 देयविश्राणनानीकोत्थानादिपणसिद्धये । भ्रातृव्यमनयद्धन्यः कल्याणमत्रकल्यताम् ॥२६०५॥
प्रबन्धं निर्बध्नन्नरिमुपचरच्छादितरुषं महाहिं संगृह्णन्नयकुटिलचेष्टं व्यवहरन् ।
स भूमिः सिद्धीनां दधदुचितकर्तव्यपरतां भवेद्योनिर्व्यूढावपि सुदृढसंरम्भरभसः ॥२६०६॥
दुःखैर्दीर्घप्रवासोत्थैरपसारितसौष्ठवाः । तदा संरम्भशैथिल्यं भूभृद्भृत्याः प्रपेदिरे ॥२६०७॥
स सत्यं सन्निवेशप्राप्यः संग्रहीतुं प्रगल्भते । कथाशरीरमिव यो निर्व्यूढं कार्यमाकुलम् ॥२६०८॥
संधिं निबद्धं विज्ञाय सैनिकाः स्वगृहोन्मुखाः । उपेक्ष्य स्वामिदाक्षिण्यं क्षणादेव प्रतस्थिरे ॥२६०९॥
2610 तद्विक्रीतमवाप्यार्थं लवन्यः कार्यमन्थरः । धन्याद्याः स्वल्पसैन्यत्वादासन्कृच्छ्रगतासवः ॥२६१०॥
प्रतोलीकीलितदृशः प्रार्थितागमनाशया । तदहः सोऽभियोक्तृंस्तानदद्वावतापयत् ॥२६११॥
रथाङ्गाक्रन्दिनी रात्रिस्तेषां कृच्छ्रेण सागमत् । विना जीवितसंन्यासमन्यत्कार्यमपश्यताम् ॥२६१२॥
प्रयत्नसंभृते कृत्ये नष्टे मन्दतया धियः । असमस्संभावनादूरीकृतवाक्यादरं प्रभुम् ॥२६१३॥
नष्टानुशोचनव्याजात्सत्त्वशून्युपहासिनः । सदयं नो ध्रुवं दुःखीकरिष्यन्त्यन्यमन्त्रिणः ॥२६१४॥
2615 सद्यो यात्रातारतम्यात्साम्यन्तो नस्त्रपार्पणम् । कार्यनिष्ठामपश्यन्तः कुर्युर्नेत्यपरेऽब्रुवन् ॥२६१५॥
मायामेतां विहितवांस्तैः संमन्त्र्य नृपाहितैः । सिद्धसाध्योऽधुना दस्युर्हसन्नस्मान्ध्रुवं स्थितः ॥२६१६॥
अल्पेतरांस्तु संकल्पानेवं तेषां वितन्वताम् । दत्तानन्ततनुज्यानिः प्रभाता सा विभावरी ॥२६१७॥ कुलकम् ॥
प्राक्चाथ राजस्थानीयोऽलंकारः साहसोत्सुकः । डामरं कोट्टमारुह्य निन्ये नयभयैर्वशम् ॥२६१८॥
एकाहं गमने सोऽद्यविलम्बस्तत्र वासरे । लोठनं[1] क्षीणदाक्षिण्यः स गच्छेत्यब्रवीत्स्फुटम् ॥२६१९॥

---

२५९५. [1]) Emended; A जनान्स्निग्धां. २५९७. [1]) Emended; A °भोजस्य. २६०३. [1]) Emended; A भोज्यभाव°. २६११. [1]) Emended with G (*sec. manu*); A °क्रोलित°. २६१५. [1]) Emended with C; A °पश्यन्त. २६१९. [1]) Emended; A लोठने.

उपन्यास्यंस्ततस्तस्य म्लानिप्रक्षालनक्षमम् । मानिनः कोपि कर्तव्यं कीर्तिव्ययनिबर्हणम् ॥२६२०॥ 2620

कालः सोयं सकलजनतालोचनध्वान्तदायी नित्यालोकप्रकटनपटुः किंतु सत्क्षत्रियाणाम् ।
अभ्रश्यामाकुतमसिलता स्वर्वधूसंगतापि व्यक्तं सर्कि विशति रभसान्मण्डलेनोष्णभानोः ॥२६२१॥

संप्राप्नुवन्ति ननु मण्डलमेकमेव क्ष्मापा जये समरसीम्नि वपुस्तु हित्वा ।
चण्डांशुमण्डलमथाभिमतानि कामं प्रेमार्द्रनिर्जरवधूकुचमण्डलानि ॥२६२२॥

नास्मिन्संततवेष्टनोल्बणतलैस्तल्पैरुदेति व्यथा ग्रन्थिभ्यश्चलितैर्न चालमसुभिर्मर्मव्यथा जन्यते ।
क्रन्दद्बन्धुजनार्तनादचकितस्वान्तं न वा स्थीयते नन्वेतन्मरणं सुखस्य सुभगा काप्येव संप्राप्तिभूः ॥२६२३॥

मार्गैः खङ्गलताविताननगहनैर्यातः पिता ते दिवं भ्रातृभ्यामसिधेनुकण्टकवने भ्रान्त्वार्जिता सद्गतिः ।
वंशाक्षुण्णमिमं निषेव्य रभसादध्वानमुत्कण्ठया वृत्त्या व्योम्नि विशार्कमण्डलमिह स्वान्तं च तेजस्विनाम् ॥२६२४॥

साम्राज्यं विधिनोपनीतमसकृत्क्लैब्येन यद्धारितं तत्रापि प्रशमोचिते वयसि यत्संचेष्टितं बालवत् ।
प्रायश्चित्तममुष्य लब्धमधुना तद्वेधसापादितं मा भूद्राज्यमिवैतदप्यसुलभं कर्तव्यमुकस्य ते ॥२६२५॥ 2625

राज्यं प्राप्तमपि प्रनष्टमसमोच्छिष्टाशनैर्यापितः कालः सर्वजनक्षयस्य विषये याता स्थितिर्हेतुताम् ।
इत्यासीत्किमिवोचितं प्रभवतो भिक्षाचरक्ष्मापतेर्निर्व्यूढं तु तदस्य देहविरतौ येनैष सर्वोन्नतः ॥२६२६॥

स तथोत्तेजितोप्योजो नाददे तेजसोज्झितः । न ज्वलत्यग्निसङ्गेपि निर्वीर्यं वानरेन्धनम् ॥२६२७॥

शान्ताहंतस्तु संवृत्तनिद्राभङ्ग इवार्भकः । ऐच्छदुद्यद्योद्वेगो रोदितुं प्रसृताधरम् ॥२६२८॥

डामरेणार्पितं नेतुं प्रवृत्तास्तं नृपाश्रिताः । तादृशं वीक्ष्य कारुण्याद्धैर्याधानार्थमभ्यधुः ॥२६२९॥

मा विषीद न देवस्य दयाचन्द्रोदयोज्ज्वले । हृदि प्ररोहति स्वैरं विकारतिमिरान्धता ॥२६३०॥ 2630

स सौजन्यसुधासिन्धुः स स्थिरत्वसुराचलः । स प्रपन्नार्तिसंतापच्छेदनन्दनपादपः ॥२६३१॥

पुण्यां शुद्धां च संलक्ष्य शरदीव द्युवाहिनीम् । मूर्तिं तस्योल्बणं चेतः समाधास्यत एव ते ॥२६३२॥

निष्कलङ्कैर्वंशपूर्वैर्निर्विशेषं सभाजयन् । चारित्रं लाघवभुवो ह्रियस्त्वां सोपनेष्यति ॥२६३३॥

अपकर्तॄन्विपन्नान्दयमानः परानपि । क्षमापरीक्षाहेतुत्वात्स वेत्ति ह्युपकारिणः ॥२६३४॥

उत्क्रोति दृष्टस्तैर्लोलस्थूलकूर्चो गृहान्ततः । व्यालम्बकम्बलो गोष्ठाद्वृद्धोक्ष इव निर्ययौ ॥२६३५॥ 2635

निर्भूषणं म्लानजीर्णवस्त्रशस्त्रं निरीक्ष्य तम् । युग्याधिरूढमायान्तं धन्यो दीनमतां दधे ॥२६३६॥

दीर्घास्पन्देक्षणं रूक्षघनकूर्चासंविग्रहम् । व्यलोकयदयोलूकमिव नष्टं गुहागृहात् ॥२६३७॥

रेजे शैलस्खलद्धिस्तैः शिबिरोद्दीपितानलः । भूपप्रतापस्वर्णस्य कषाश्मत्वमिवागतः ॥२६३८॥

स्कन्धावारे गते वर्षत्तुषारं प्रसभं नभः । अमर्त्यभावे भूभर्तुर्विशां चिच्छेद संशयम् ॥२६३९॥

प्राक्चेत्पतेद्धिमं तावन्म्रियेरन्नुडिताः क्षणात् । पिष्टातकान्तर्गर्ताटाः प्रविष्टा इव सैनिकाः ॥२६४०॥ 2640

एवमेकान्नविंशेब्दे दशम्यां शुक्लफाल्गुने[1] । न्यूनाब्दषष्टिदेशीयो निबद्धो लोठनः पुनः ॥२६४१॥

दीर्घप्रवासादायातं सत्कर्तुं कटकं पुनः । निर्ममो हर्म्यमुत्तुङ्गमारुरोह महीपतिः ॥२६४२॥

---

२६२०. [1]) Emended; A उपन्यस्यंस्त°. २६२८. [1]) $A_1$ gloss शान्ता अहन्ता अहंभावो यस्य. २६३०. [1]) Emended; A दैवस्य. २६३७. [1]) Emended; A °कूर्चं स°. २६३८. [1]) A °शिविरो°. २६३९. [1]) A स्कन्धावारे. २६४०. [1]) Emended with G (*sec. manu*); A प्राक्षेरप°. २६४१. [1]) A °फाल्गुणे.

यथोचितं दानमानसंभाषणविलोकनैः । संतोष्य व्यसृजत्सैन्यं धन्यादीन्प्रैक्षतागतान् ॥२६४३॥
तेषां पुनश्च दोर्द्वन्द्वमूले क्षिप्तकरं भटैः । न्यस्तेनानासिकं वासःप्रान्तेनाच्छादिताननम् ॥२६४४॥
2645 निर्भूषणश्रोत्रपालिप्रविष्टैः श्मश्रुलोमभिः । वलक्षरूक्षैः प्रव्यक्तकार्श्यक्लेशं कपोलयोः ॥२६४५॥
उच्चावचोक्तिमुखरे पौरलोकेन्तरान्तरा । व्यापारवन्तं नेत्रान्तौ दीनस्तिमिततारकौ ॥२६४६॥
कातर्यदैन्यभीक्लान्तिक्षुद्दलक्ष्मीकटाक्षितम् । वेपमानविनिम्राङ्गं गां शीतेनार्दितामिव ॥२६४७॥
भ्रान्तामिव क्ष्मां पर्यस्तानिवाद्रीन्पतितामिव । विदन्तं च दिवं शोष - - - -रदच्छदम् ॥२६४८॥
दैविको वान्तरायोस्तु ध्वान्तं वोमं प्रवर्तताम् । राजीकोभ्यर्णतां यातं वाता वा जरयन्त्विदम् ॥२६४९॥
2650 सर्वापकारकृद्राज्ञः स्थास्यामि पुरतः कथम् । पदानि संनिरुन्धानं निध्यायेति पदे पदे ॥२६५०॥ अन्तर्युगलम्॥
बहुलोकावृततया स्तोकसंलक्ष्यमैक्षत । प्रतीहारैरथान्वेष्यमानं लोठनमङ्गने ॥२६५१॥ कुलकम्॥
भ्रूसंज्ञया वितीर्णाज्ञो राज्ञा तामारुरोह सः । सभां पारिप्लवाम्भोजामिव प्रेक्षकलोचनैः ॥२६५२॥
दृष्टया निर्दिष्टपार्श्वोर्वीस्थितिः पृथ्वीभुजस्ततः । अस्प्राक्षीत्क्षितिनिक्षिप्तजानुर्मूर्ध्नाङ्घ्रिपङ्कजे ॥२६५३॥
हस्ताम्बुजाभ्यामालम्ब्य ललाटतटमानतम् । सम्राट्संभ्रमनम्रस्य तस्योदनमयच्छिरः ॥२६५४॥
2655 रक्षौषधीजुषोः स्पर्शः पाण्योस्तापं स चेतसः । दौर्भाग्यमहरद्देहाच्चास्य श्रीखण्डशीतलः ॥२६५५॥
पुण्यानुभावात्कारुण्यभाजो भूभर्तुरञ्जसा । विस्रम्भसंभावनया स क्षणात्पस्पृशे हृदि ॥२६५६॥
मा भैषीरिति दृप्तोक्तिः सुखं संप्राप्स्यसीति वाक् । अगाम्भीर्येण ममैष मन्युर्न त्वयि साधुना ॥२६५७॥
इत्युक्ते पूर्ववैराणां भवेदुद्घाटनं कृतम् । बान्धवो नस्त्वमित्यस्मिन्परीहास इव क्षणे ॥२६५८॥
क्लिष्टोसीति स्वप्रतापप्रभावाभाषणं भवेत् । ध्यात्वेति भूभृद्दृष्ट्वास्य नाप्यायं तु गिराकरोत् ॥२६५९॥ तिलकम्॥
2660 अभयार्थनया पादौ स्प्रष्टुं नमयतः शिरः । संस्पर्शी मौलिषु पुनर्विग्रहस्याङ्घ्रिणाकरोत् ॥२६६०॥
का योग्यता सत्क्रियायां ममेति वदता बलात् । अजिग्रहत्पितृव्येण ताम्बूलं स्वकरार्पितम् ॥२६६१॥
नम्रं द्वारेशमूचेभूच्छ्रमो व इति सस्मितम् । धन्यं पृष्ठं च पस्पर्श प्रष्ठं सव्येन बाहुना ॥२६६२॥
दाक्ष्यदाक्षिण्यगाम्भीर्यविनयाद्यैर्विभाव्य तम् । भूभृद्गुणैः परीतं स्वं लोठनोमन्यतावरम् ॥२६६३॥
आदिश्य सान्त्वनं धन्यमुखेनाथ प्रपानतम् । पितृव्यं प्राहिणोद्वेश्म भ्राजिष्णु विनयाञ्जलिः ॥२६६४॥
2665 अभियोगे य एवास्य नीतौ विन्यस्यतो दृशम् । मुखरागः स एवाभूत्फलावाप्तावविप्लुतः ॥२६६५॥
याति न वाडवशिखिक्वथनेन तापं शैत्यं हिमाद्रिपयसा विशता न चाब्धिः ।
कश्चिद्गभीरमनसां सततं विषादकाले प्रमोदसमये च समोनुभावः ॥२६६६॥
प्रीतिस्थैर्यैर्ज्ञातियोग्यैश्चोपचारैरकृत्रिमैः । क्रमाद्राजाहरल्लज्जां पौरुषभ्रंशजीवयोः ॥२६६७॥
दायादोद्धृतयादेव राष्ट्रे कृष्टेपि मन्त्रवित् । भोजेनोत्पिञ्जसर्पस्य दन्तं सोन्तरचिन्तयत् ॥२६६८॥
प्रवासायासभीत्या स्वैस्त्यक्तसंरम्भसंभ्रमैः । जिगीषुर्विद्विषच्छेषैश्चक्रे यत्निष्प्रजागरः ॥२६६९॥
2670 साल्हणिः स तु निस्तीर्णः श्वभ्राच्छून्यगृहे वसन् । पितृव्यविग्रहोदन्तमुपलेभे न कंचन ॥२६७०॥

---

२६४५. ¹) A वलक्ष°. २६४८. ¹) Emended with C; A °पतितामिव.—²) Thus A; C supplements शोषबहुशुष्करद°. २६४९. ¹) Emended with C; A दैविको न्तरा°. २६५५. ¹) Emended; A °हेहास्य; C °देहास्य. २६५७. ¹) Emended with G (*sec. manu*); A मन्युना त्वयि साधुना. २६६४. ¹) Emended; A धन्यं मु°. २६६७. ¹) Emended; A °कृत्रिमः. २६६८. ¹) Conjectural reading; A भोजनोत्पिञ्ज°. २६७०. ¹) Emended; A सल्हणः.—²) Emended; A विस्तीर्णः.

राजगृह्यं स्वलंकारं डामरान्तिकमागतम् । दृष्ट्वाद्रीक्ष्याभवद्द्रोहद्रोहसंभावनस्तदा ॥२६७१॥

ददर्श च क्रमादूरतया दुर्लक्ष्यविस्तृति । स्कन्धावारं वद्धभालं मार्गे नगरगामिनि ॥२६७२॥

अज्ञातेन त्रिदूरस्थात्पितृव्येणाश्रितं ततः । युग्यं चासौ धन्यषष्ठयुग्ययोरन्तरैक्षत ॥२६७३॥

अचिन्तयच्च को हेतुः कटकप्रस्थितेरितः । युग्यारूढश्च कोथ स्यात्तृतीयो धन्यषष्ठयोः ॥२६७४॥

पृष्टस्तेनावदत्कश्चित्पामरोथ प्रमोदभाक् । संधिर्निबद्धो नगरं गतौ लोठनविग्रहौ ॥२६७५॥ 2675

संदेहीजहतद्रोहो भयमुन्मुखतां भजेत् । ज्ञातिस्नेहेन तस्यासीन्मुहूर्तमपहस्तितम् ॥२६७६॥

सैन्ये गते शून्यतया मिलितैर्विहगैः सरित् । रुदद्भिस्तेन तौ नीतौ क्रन्दन्तीव व्यकल्प्यत ॥२६७७॥

त्वदन्य एव मे दध्याद्यास्वेहस्थमवेत्य ते । पुनर्नयेयुर्धन्याद्याः क्रमाद्ध्यात्वथेति सः ॥२६७८॥

स्वं नेतुं पार्थिवचमूं प्रत्यावृत्तां निनादिनीम् । श्रुतेन्तरान्तरा घोषे निर्झरागामशङ्कत ॥२६७९॥

अथाजायत जीमूतवितीर्णतिमिरं जगत् । वन्ध्यं मध्यंदिनेनेव निशीथव्यथितश्रिया ॥२६८०॥ 2680

राधमासावधि दधुस्ततः प्रभृति वारिदाः । दीक्षां क्षोण्यां तुषारौघसत्रासुत्रणकर्मणि ॥२६८१॥

विस्रब्धघात्यभव्योहं निर्ब्रह्मण्यो ह्रियोज्झितः । निन्दन्स्वमिति भोजाभे ततो दस्युरुपाविशत् ॥२६८२॥

समयापेक्षयाक्षोभो मन्युं संस्तभ्य साल्हणिः । सान्त्वयन्निव नास्त्यागस्तवात्रेति जगाद तम् ॥२६८३॥

ऊचे च संश्रितापत्यज्ञात्याद्यापन्नतं त्वया । भ्रातुमेतत्कृतं तत्र गर्हां नार्हसि कस्यचित् ॥२६८४॥

तत्र द्रोहस्पृशा स्याच्चेन्नानृशंस्यं भवेन्मयि । परत्त्वाभवत्तस्मादियं कालानुरोधतः ॥२६८५॥ 2685

राज्ञश्च हर्षभूभर्तुर्वंश्या इव न वा वयम् । उच्छेद्याः किं तु संयम्या राजधर्मानुरोधिनः ॥२६८६॥

स्वस्याख्यातिस्तयोर्बाधा राज्ञश्चामार्गगामिता । शेषं मां रक्षता हन्त निषिद्धा धीमता त्वया ॥२६८७॥

इत्युक्तवन्तं सं त्यक्तलज्जाभार इवावदत् । साक्षी स्वमंत्र सर्वत्र ममेति सततं स्तुवन् ॥२६८८॥

क्षणेन च प्रहिणु मामधुनेत्यभिधायिनम् । तमेत्र हिमवृष्ट्यन्ते कर्तास्मीत्युक्तवान्ययौ ॥२६८९॥

त्वयि दस्युर्विपर्यस्येन्मन्युं जानन्नभोजनम् । भोजस्तत्रेति केनापि कथितो व्यथिताशनम् ॥२६९०॥ 2690

स्पृशंश्चान्नं चिरात्प्राप्तमिदं विक्रीय ताविति । ध्यायञ्ज्ञात्योर्देहमांसं तयोर्भुक्तममन्यत ॥२६९१॥

दस्युस्तु हिमवृष्ट्यन्ते त्वां प्रहेष्यामि निश्चयात् । श्वो वाद्य वेति कथयन्द्वौ मासौ न मुमोच तम् ॥२६९२॥

मां ज्ञात्वेह स्थितं राज्ञः कृतारब्धोर्हिमात्यये । विक्रीणात्येष मत्वेति भोजोधान्मने त्वराम् ॥२६९३॥

मिषं यं यं निषेधाय गमनायोदपादयत् । दस्युस्तं तं समुच्छेद्य सापराधं व्यधत्त तम् ॥२६९४॥

तेजोनाम्नो बलहरात्संजातो भाद्रमातुरः । अभ्यधाच्चाल्यमाशास्य लम्बकम्बलकावृतः ॥२६९५॥ 2695

तेजोविस्फूर्जितां तत्तद्वीरोत्कर्षकषोपले । द्वैराज्ये सौस्सले सैन्ये पङ्क्तिपावनतां गतः ॥२६९६॥

पितुराप्ततया राज्ञा वर्धितस्तदनन्तरम् । एवेनकादिविषयाधीकारित्वं क्रमाद्व्रजन् ॥२६९७॥

२६७१. [1]) Emended; A राजा गृहे स्वलङ्कारडामर°; cf. viii. 2925. 2618. २६७२. [1]) Emended; A °विस्मृति.—[2]) A स्कन्धा°. २६७५. [1]) Emended; A पृष्टसेना°. २६७६. [1]) Thus A; the text of this *páda* appears to be corrupt; perhaps read संदेहं जहतो द्रोहभयमु°.—[2]) भजेत् corr. by A₁ from व्रजेत. २६७७. [1]) Emended; A व्यकल्पत. २६८३. [1]) Emended with C; A संस्तम्भ्य. २६८७. [1]) Emended; A शेषं मां; C स्वां सभां. २६८८. [1]) Emended with G; A समेव. २६९०. [1]) Emended; A दस्युर्निप°. २६९१. [1]) Conjectural reading; A विक्रीयतामिति; cf. for the context viii. 2598 ffg. २६९२. [1]) Emended with C; A वेति. २६९३. [1]) Emended; A राज्ञा. २६९५. [1]) Emended; A भोजो°; cf. viii. 2862 and the *vv. ll.* तेजो, ओजो viii. 1084.—[2]) Emended; A°जात.—[3]) The text of this *páda* is corrupt. २६९६. [1]) Emended with G; A °र्जितास्तत्त°.

त्रिमुखे राज्ञि नागेन खुयाश्रमभुवा कृते । तं राजवदनो नाम विजिघृक्षू ररक्ष तम् ॥२६९८॥चक्कलकम्॥
आनृशंस्यं भृत्यभावादलत्वन्यतयास्य च । प्रत्यवस्थित्यसामर्थ्ये राज्ञि सर्वे शशङ्किरे ॥२६९९॥
2700 अतोऽलंकारचक्रेण कुर्वतोऽस्य[1]र्थमर्थनाम् । द्वैराज्येच्छो राजबीजी तदा न स समर्थ्यत ॥२७००॥ युगलकम्॥
नीतः प्रत्यक्षतां दूरस्थितेऽप्युदयने स तम् । विसृष्टवति दुधुक्षुस्त्यक्तुमेनं न सोऽशकत् ॥२७०१॥
राज्ञा कर्तुं विनियमं भोजस्य प्रहितो धनैः । प्राप[1] त्रङ्गामलंकारो विषयाधिकृतस्ततः ॥२७०२॥
तत्पार्श्वमुद्यतं गन्तुं मां समु[1]त्सृज्य यासि चेत् । त्यक्ष्यामि तदसूनेवमूचे भोजस्तु डामरम् ॥२७०३॥
श्वस्त्वां प्रभाते द्रक्ष्यामीत्येतावत्तत्र जल्पति । कोट्टादनुक्त्वैव निशस्तुर्ययामे विनिर्ययौ ॥२७०४॥
2705 घनवर्षेऽप्यमर्षेण मार्गान्वेषी गवेषणम् । यावच्चक्रे क्षपान्ते तं तावच्छुश्राव निर्गतम् ॥२७०५॥
असाध्यप्रतिषेधोऽथ तमह्न्यनुजगाम सः । प्रस्थितं शारदादेवीस्थानं यावन्मितानुगः ॥२७०६॥
एकसार्थगतौ ज्ञाती विना तौ ज्ञातियोषिताम् । दाक्षिण्यादक्षमः स्थातुमपि सागा भवन्निव ॥२७०७॥
प्रवयाः पञ्चषान्वारान्व्यधादारब्धिमेष तु । युवाप्यकल्यः कौलीनमिति स्वस्य च चिन्तयन् ॥२७०८॥
दुराण्डगमने खण्डितेच्छः संश्रित्य दारदान् । संयुयुत्सुर्मधुमतीरोधसा मार्गमग्रहीत् ॥२७०९॥ तिलकम्॥
2710 क्वापि श्यानाश्मसूच्यभिमृत्युदंष्ट्राङ्कुरोत्कटान् । क्वचिद्रुद्धप्रकाशाभ्रकालपाशान्धकारितान् ॥२७१०॥
प्रभ्रश्यद्धिमसंघातगजव्यूहोल्बणान्क्वचित् । क्वापि निर्झरफूत्कारनाराचक्षतविग्रहान् ॥२७११॥
क्वचित्खुरस्पर्शपवनस्पष्टस्फुटदसृग्धरान् । क्वाप्यातपक्षतहिमज्योतिर्निहत[1]दृक्पथान् ॥२७१२॥
दूरावरोहं[1] प्रसृते स्फुटमप्रसृमे विदन् । ऊर्ध्वावरोहमसकृन्मन्यमानोऽप्यधोगतेः ॥२७१३॥
तुषारकालविषमान्षट्सप्तान्पथि वासरान् । उल्लङ्घ्य स दरद्राट्सीमान्तमाममासदत् ॥२७१४॥कुलकम्॥
2715 गृहार्पणात्मसामग्रीहृताकिंचन्यलाघवम् । तं दुग्धघाट्[1]कोट्टेशः प्रणम्यानयदर्च्यताम् ॥२७१५॥
दूरस्थितो विड्डसीहस्तहृतोक्तनदागमः[1] । प्रक्रियां प्राहिणोच्छत्रवादित्राद्यां[2] नृपोचिताम् ॥२७१६॥
आदिष्टदिष्टवृद्धिश्च राष्ट्रे कोट्टाधिपेन सः । अवारयत्स्वकोशस्य स्वामित्वं राजबीजिनः ॥२७१७॥
राजायमानो भोजोऽथ राजवासगतोऽर्चितुम्[1] । आनिन्ये राजवदनापत्येनाभ्येत्य पश्यताम् ॥२७१८॥
2720 स पित्रैकान्ततो राज्ञो भिन्नेन प्रहितोऽन्तिकम् । तेनाशाय्यरिनीत्युमपाशामस्थापनोपमः ॥२७१९॥
कार्यगौरवविश्वासाभावव्यतिकरोचितम् । संदिश्य प्राहिणोत्तं स न स्वीकुर्वन्न चोत्सृजन् ॥२७२०॥
किमाप्तोऽहं किमेकान्तभिन्नो राज्ञः शनैरिति । मां ज्ञास्यसीति तं दूतैः स राजवदनोऽवदत् ॥२७२१
तस्य दार्ढ्यं दर्शयितुं गोत्रिवैरिमिषान्नृपे । ब्रुवाणेऽथ विदोषत्वं नागाद्यैरग्रहीद्व्रणम्[1] ॥२७२२॥
सामग्र्यूनः[1] शनैः स्थैर्यं ततः साम्यमथ क्रमात् । आधिक्यं चावधे तेषां विग्रहैर्धैर्यनिष्ठुरः ॥२७२३॥
तथा प्रतिष्ठां स प्राप तस्यापूर्वस्य भूमिजाः । दास्यमेत्य यथा व्रीडां नागुर्नागस्य बान्धवाः ॥२७२४॥
2725 स हि त्यागक्षमास्तम्भालोभादिगुणभूषितः । अभिगम्योऽभवन्नित्याभ्यस्तभूतिरिवोन्मिषन् ॥२७२५॥

---

२७००. [1]) Emended; A कुर्वतास्य°. २७०२. [1]) Emended; A प्राप्य. २७०३. [1]) Conjectural reading; A गन्तुं मामुत्सृज्य; C मासमुत्सृज्य. २७१२ [1]) Emended; A °निहित°. २७१३. [1]) Emended; A °रोहे. २७१५. [1]) Thus A; cf. दुग्धघातम् viii 2468. २७१६. [1]) Emended with C; A °गमम्.—[2]) Emended; A °वादित्राद्यान्नृपो°. २७१८. [1]) Emended; A °गतोऽर्चितुम C °गतोऽर्चितं; G °गतोऽर्चिताम्. २७२२. [1]) Emended; A °व्रणे. २७२३. [1]) Conjectural reading; A सामग्री न°.

स्थैर्ये पृथ्वीहरादीनां साश्रयाणां न कौतुकम् । आडम्बरो निरालम्बस्यास्य स्तुल्यस्तु विस्तृतः ॥२७२६॥
मथयन्पृथुलाल्लँहरान्धीराटविकघोषिकैः । क्रान्तमामोथ तस्थौ स भोजादीन्प्रतिपालयन् ॥२७२७॥
जहुरन्योन्यसंघर्षसेर्ष्यामात्यमतेन वा । ततो लुण्ठिप्रियत्वाद्वा नीतिमन्येपि डामराः ॥२७२८॥
उद्घातध्वंसितां विप्रवेच्छा लौठनबन्धने । याधास्तेषां तदानीं सा जगाम शतशाखताम् ॥२७२९॥
त्रिल्लको जयराजश्च राज्ञा संवर्धितावपि । अकाण्डे नैव तपसा विवशौ चक्रमीलनात् ॥२७३०॥ 2730
यो घूकानामिव ध्वान्तमामयानामिव क्षयः । दैत्यानामिव पातालं यादसामिव सागरः ॥२७३१॥
आश्रयः सर्वदस्यूनां त्रिल्लको माययोल्बणः । स देवसरसाधीशं संबध्नन्विप्लवं व्यधात् ॥२७३२॥ युग्मम् ॥
क्राक्रान्तोथ तदाक्षेपं क्षोणीत्राणार्थिनो द्विजाः । प्रायं नृपतिमुद्दिश्य चक्रिरे विजयेश्वरे ॥२७३३॥
अकालंदस्युनिर्माथं जानतोभ्यर्थनां न ते । राज्ञोगृह्णंस्ततः सोभूद्दाक्षिण्यात्तत्सभानुगः ॥२७३४॥
प्रस्थातुं पार्थिवे सज्जे ज्यायान्यो विप्लुतेष्वभूत् । स जातोत्पातपिटको जयराजो व्यपद्यत ॥२७३५॥ 2735
भाग्यश्चानेकतोजातदस्युवैविक्त्यमीशिता । ततो मडवराज्यं स विप्रप्रीत्यै विनिर्ययौ ॥२७३६॥
अमात्यदत्तवैमत्यैः स्वशाठ्यमंतरैरथ । द्विजैर्निषिद्धोलंकारो मन्त्री राज्ञोजिह्मतोन्तिकात् ॥२७३७॥
स व्यवस्थापने दुःस्थदस्यूनां सोद्यमः सदा । सेर्ष्याणां प्रत्यभात्तेषां तद्दोषपरिपोषकः ॥२७३८॥
त्रिल्लकोन्मूलनं कुर्यां कृत्वा द्वैराज्यभञ्जनम् । प्रतिज्ञायेति नृपतिर्विप्रान्प्रायाद्व्यवीवरत् ॥२७३९॥
त्रस्तोथ त्रिल्लकस्तैस्तैरप्रियैरुदवेजयत् । अनुद्भिन्नमुखो गूढामयो रोगान्तरैरिव ॥२७४०॥ 2740
जयराजानुजं राज्ञा यशोराजं निवेशितम् । तन्मतेनावचस्कन्द भ्रातृव्यं राजकाभिधः ॥२७४१॥
त्रातुं तं देवसरसं दृप्ताराल्याश्रितं गतः । सज्जपालोल्पसैन्यत्वात्संदिग्धविजयोभवत् ॥२७४२॥
ज्ञातोदन्तस्ततोभ्येत्य रिल्हणो रणमुल्बणम् । जयलक्ष्मीकटाक्षाणां प्रथमातिथितामगात् ॥२७४३॥
मन्दरेणाथ तेनारिवारिराशौ विलोडिते । कल्योभूत्सज्जपालाब्धस्तुच्छारातिजलाहतौ ॥२७४४॥
जितेपि राजके स्वोर्व्यां विनानुग्राहकं क्षमः । न बभूव यशोराजः शून्ये बाल इवासितुम् ॥२७४५॥ 2745
प्रतीक्षमाणो द्वैराज्यपर्याप्तिं क्ष्माभुजेकरोत् । त्रिल्लकः कालहरणं तैस्तैर्मायानतिक्रमैः ॥२७४६॥
यथाकालं ततो गूढोपेतान्मण्डलकण्टकान् । स्वपक्षसूचीविशिखान्दिक्षु श्वाविदिवाक्षिपत् ॥२७४७॥
अथ पार्थ्वीहरियोभूच्चतुष्को लोष्टकानुजः । राज्ञा भ्रात्रा समं बद्धः कारागारात्पलायितः ॥२७४८॥
स तेन निजजामात्रा रक्षितः स्वोपवेशने । असंख्यडामरयुतः शमालां संप्रवेशितः ॥२७४९॥ युग्मम् ॥
आकर्ण्य कुररस्येव निनादं तस्य भेजिरे । व्यक्ततां दस्यवो गूढा ह्रदस्थाः शफरा इव ॥२७५०॥ 2750
दृप्यन्तं राजवदनं षष्ठचन्द्रोथ गग्गजः । रुरोध प्रलयोद्धृत्तं वेलाद्रिरिव वारिधिम् ॥२७५१॥
वर्धमानक्षीयमाणसंहतौ तौ व्यजायताम् । घर्मे सजम्बालहिमौ तुषाराद्रितटाविव ॥२७५२॥
षष्ठस्य जयचन्द्रश्च श्रीचन्द्रश्चानुजौ ततः । दूरविप्रकृतौ राजमन्दिरावाप्रवेतनौ ॥२७५३॥
ज्ञातनिवृत्त्यपर्याप्ती धुर्यकार्यवशप्रियात् । प्रतीक्ष्यादमजाद्राज्ञः शङ्कितावभ्युपागमम् ॥२७५४॥

---

२७२८ [1]) Emended; A वाः. २७३४. [1]) Emended; A जानते°. २७३७. [1]) Doubtful emendation; A स्वशात्रयं मड°. २७४४. [1]) Emended; A °पालाब्धिस्तुच्छा°. २७४६. [1]) Emended; A प्रतीक्ष्यमाणो. २७४८. [1]) Emended; A °ष्कः कोष्ठका°: comp. for the name of Prithvîhari's elder son, viii. 2912. 2799. 2496. 3313. २७५०. [1]) $A_2$ gloss कुररस्येति कुररः नव् हूर् इति भाषया कश्मीरेषु प्रसिद्धः. २७५१. [1]) Thus corr. by $A_2$ from गर्गजः.

2755 कटकाद्विद्रुतौ राजवदनान्तिकमागतौ । श्वशुर्यावपि भूभर्तुरागतौ प्रतियोगिताम्[1] ॥२७५५॥
शैलप्रस्थानपथिकैरसंख्यैरथ खाशकैः । स पूर्वराजकोशार्थी भूतेश्वरमलुण्टयत् ॥२७५६॥
तस्कराक्रान्त्यशरणं बलवद्विहताबलम् । अराजकमिवाशेषं राष्ट्रं कष्टां दशामगात् ॥२७५७॥
उदयं कम्पनाधीशं[1] रिल्हणं च ततो नृपः । चतुष्कयुग्ममादिश्य नगरं विवशोविशत् ॥२७५८॥
पार्थ्वीहरिस्तु दुःसाधो महाव्याधिरिवौषधैः । स्तम्भितोभूत्तयोः सैन्यैः संहन्तुं न त्वशक्यत ॥२७५९॥
2760 कालापेक्षां स्वपक्ष्याणां दुर्बुद्धिं वानुरुन्धतः । आसीन्मन्दप्रतापत्वं रिल्हणस्यापि तत्क्षणम् ॥२७६०॥
विड्डसीहस्तु विज्ञातभोजोदन्तो व्यसर्जयत् । दूतानानेतुमुर्वीशान्सुबहूनुत्तरापथे ॥२७६१॥
अपि वित्तेशवनितारहोवैयात्यवेदिभिः । अपि किंमानुषपुरीगीतोद्गारिदरीगृहैः ॥२७६२॥
अप्यौष्ण्याद्वालुकाम्भोधेः शीतावेदिभिरेकतः । अपि भृङ्गानिलैः प्रीतान्कुर्वाणैरुत्तरान्कुरून् ॥२७६३॥
हिमाद्रिकच्छैर्म्लेच्छेशाः प्रधावन्तोधिशिश्रियुः । दिशस्तुरंगै रुन्धन्तः स्कन्धावारं दरत्पतेः[1] ॥२७६४॥ तिलकम् ॥
2765 राज्ञां संघटनं यावद्व्यधादेवं दरन्नृपः । दिग्भ्यो भोजान्तिकं तावत्तत्सामन्ताः प्रपेदिरे ॥२७६५॥
स पिप्रिये तानज्ञातालापान्वीक्ष्य गिरिप्रजान् । प्रीतिप्ररूढप्रणयानवरूढान्कपीनिव ॥२७६६॥
जयचन्द्रादयो राजवदनप्रहिता अपि । कीराः काश्मीरकाः[1] पार्श्वमभजन्राजबीजिनः ॥२७६७॥
अभ्यर्णस्थान्वलहरप्रमुखांश्च विदूरगान् । अपुष्णात्साल्हणिः स्वर्णैः परां कोशेशतां भजन् ॥२७६८॥
ततः सुजनिनोत्पिञ्जतया निर्धौतचक्रिकः । भोजेन राजवदनः समगंस्तापसाध्वसम् ॥२७६९॥
2770 तयोरकृतकर्तव्यविशेषेणेतरेतरम् । जातसौष्ठवयोः क्षिप्रमविश्वासो व्यशीर्यत ॥२७७०॥
अभ्यमित्रीणतां तस्यानिच्छतो दरदं विना । महात्साहायकार्येच्छन्मितानेव स तान्हयान् ॥२७७१॥
स्युश्चेत्सोढाभिमाटोपाः कटकस्यास्य नो द्विषः । तत्साम्यमुन्मिषेद्यद्वा भङ्गो भूयोपि योगभित् ॥२७७२॥
तस्मात्सर्वाभिसारेण रणमेकं ममेच्छतः । विजयावजयावाभिरेकाहान्तरिता मता ॥२७७३॥
व्याजहारेति यद्भोजस्तद्देशोथ हसन्स्मयात् । निन्ये तद्दारदं सैन्यमुपेक्ष्यागामिनीश्चमूः[1] ॥२७७४॥ तिलकम् ॥
2775 संकटान्ते वितीर्णानुयात्रस्तेषां प्रसर्पताम् । स राजबीजी शुश्राव दरद्राजमथागतम् ॥२७७५॥
तत्संगमाय व्यावृत्ते तस्मिन्कोट्टान्तिकं पुनः । प्रावेशयद्बलहरो मातृग्रामं स तद्बलम् ॥२७७६॥
दिशस्ततो वीक्ष्य वाहैर्भ्रान्तवातमृगा इव । निसर्गधीरधीर्गार्गिर्न धैर्यात्पर्यहीयत ॥२७७७॥
तस्य सर्वेपि नीलाश्वडामराः स्वे च सैनिकाः । विपक्षैः सह बद्धैक्याः सैन्यान्बुभुक्षवो ययुः ॥२७७८॥
स तथा विषमस्थोपि प्रस्थित्यै प्रार्थितो निजैः । म्लानाननः प्रभुं द्रष्टुं न क्षमोस्मीत्यभाषत ॥२७७९॥
2780 स सूर्यवर्मचन्द्रस्य न जातः कश्चिदन्वये[1] । उपयोगाय यो नागान्महाभिजनजन्मनाम् ॥२७८०॥
भोजं सभाजयित्वाथ विड्डसीहः सपार्थिवः । सारैः समं स्वसामन्तैर्विजयाय व्यसर्जयत् ॥२७८१॥
ततो म्लेच्छगणाकीर्णा व्रजन्संवाहयंश्चमूः । प्रयाणमात्रान्तरितः पृष्ठे तस्य बभूव च ॥२७८२॥
प्रादुष्कृतजगत्क्षोभे बले तत्रानुयायिनि । उत्साहात्साल्हणिर्मेने कृत्स्नां हस्तगतां महीम् ॥२७८३॥

---

२७५५. 1) Emended; A प्रातयाग्यताम्. २७५८. 1) Emended; A कम्पनाधीशरि°. २७६४. 1) A स्कन्वा°. २७६७. 1) Emended; A काश्मीरिका·. २७७४. 1) Emended; A° गमिमी°. २७८०. 1) Emended; A कैश्चि°.

वाजिभिस्तर्जिते म्लेच्छराजैश्च बलमूर्जितम् । स्थाने समुद्रधाराख्ये निबबन्धाथ तत्पदम् ॥२७८४॥
स राजवदनस्तादृग्दुर्जयाभ्यबलोज्ज्वलः । मृत्युदन्तान्तरे दिष्टं षष्ठचन्द्रममन्यत ॥२७८५॥ 2785
ततः प्रावृट्पयोवाहकृतोदीपपरिप्लुता । संजायते स्म वसुधा समीभूतजलस्थला ॥२७८६॥
धरित्रीपानपात्रेम्भःसीधुपूर्णे दधुर्द्रुमाः । मग्ना लक्ष्यशिखामात्रा नलनीलोत्पलोपमाम् ॥२७८७॥
षष्ठस्य संकटं जानन्भूभृच्छेषैर्बलैः समम् । अथोदयद्वारपतिं तं च धन्यं व्यसर्जयत् ॥२७८८॥
वाहिनीरुद्धमार्गौ तौ पदवीमनुसस्रतुः । मार्गे धनंजयस्येव शैनेयपवनात्मजौ ॥२७८९॥
लम्बाम्बुदेम्बरे दूरं वारिपूर्णे च भूतले । स्यूतेव विद्युद्ददृशे भिन्नघोतननिःस्वना ॥२७९०॥ 2790
शोभामात्रोदितागर्हपरिबर्हाबहिष्कृतः । तत्राविभक्तकटकः पार्थिवः समजायत ॥२७९१॥
अनास्थो राजवदने सत्त्वावष्टम्भयोः पुरा । अत्रापरो न निक्षेप्यो राजबीजीति दारदान् ॥२७९२॥
त्रिल्लकः संदिशन्दूतैर्वृद्धिं पार्श्वीहरिं नयन् । तयोरेकस्य सामर्थ्यादैच्छत्तं हस्तपातिनम् ॥२७९३॥युग्मम्॥
अभित्तिलिखितालेख्यकल्पं बलहरस्य तत् । तादृग्विलोक्य सामर्थ्यमथ राज्ञश्च सर्वतः ॥२७९४॥
विभक्ताशेषसैन्यस्य तत्र तत्रारिसंकटे । शाल्वाप्रतिसमाधेयच्छिद्रमुन्मुद्रदुर्नयः ॥२७९५॥ 2795
अकृशश्चाविदाचारश्चिरं स्वाङ्गैः स गोपितम् । बहिर्दुर्धर्षमत्याक्षीद्द्वितीयमपि कण्टकम् ॥२७९६॥ तिलकम् ॥
ध्वान्तेम्बुधरजालान्ध्यमहावाते रजोभरः । स्वपक्षभेदयोर्ज्ञातकर्णेजपमहोद्यमः ॥२७९७॥
कुलच्छेदकृतो राज्ञस्तत्र तत्रातिसंकटे । अशान्तजागरोत्यर्थमनर्थपरिपोषकः ॥२७९८॥
सोथ शूरपुरेकस्माद्बहुभिः सह डामरैः । तेन संपूरितः पृथ्वीहरजो लोठकोपतत् ॥२७९९॥ तिलकम् ॥
तस्य संघटतः कन्थां प्रयातं वैकृतं चिरात् । पालीभङ्गे तटस्येव प्रावृट्पूर्णस्य लक्ष्यताम् ॥२८००॥ 2800
निद्राणोपेन्द्रजठरप्रसादनिसृतं जगत् । समेतमिव तत्सैन्यं प्रत्यभाज्जलदागमे ॥२८०१॥
यावद्भिः पार्यते नेदृक्संख्यातुमपि तद्बलम् । भर्तव्यकल्पैः सुस्वल्पयोधमध्यगतैरपि ॥२८०२॥
तावद्भिरनुगैः पिञ्छदेवत्रङ्गाधिपो युधि । तद्योधान्याम्यहरितः सरितश्चातिथीन्व्यधात् ॥२८०३॥ युग्मम् ॥
तटोज्ज्वलैश्चितावह्नेर्बिम्बितैस्तटिनीजले । मृतानामपि संस्कारः क्रियमाण इवाभवत् ॥२८०४॥
इति विस्मृतमृत्युः स कुर्वन्नेकाहमाहवम् । कथंचिदाप्तैरन्येद्युर्भग्नसारोपसारितः ॥२८०५॥ 2805
पुरे स शून्ये सैन्यानि संगृह्णंस्तत्र सर्वतः । द्वित्रैरहोभिर्नगरं सुखमाद्यममन्यत ॥२८०६॥
इच्छां पद्मपुरास्कन्दे मन्दत्वं त्रिल्लकोनयत् । पृष्ठस्थयोर्यशोराजकम्पनाधीशयोर्भयात् ॥२८०७॥
न भृत्यैस्तद्विधः सिद्धश्चास्यैकस्मिन्नसंमते । विधेयान्यलवन्यस्य डामरे होल्डौकसि ॥२८०८॥
द्वैराज्ये सुस्सलस्यापि नैवादृश्यत तादृशः । अनर्थो यादृगुत्तस्थौ तत्सुतस्य समन्ततः ॥२८०९॥
चतुष्कमवधीर्याथ राज्ञा पादगदोपमम् । रिल्हणः प्रैषि तं मीवागण्डतुल्यं व्यपोहितुम् ॥२८१०॥ 2810
प्रस्थितस्तत्क्षमाथाय शामालैः सोन्वबध्यत । व्रजन्प्राग्ज्योतिषं हन्तुं पार्थः संशप्तकैरिव ॥२८११॥
अथाश्वाभ्यमित्रीणस्तान्व्यावृत्य निपातयन् । पश्चाकरोन्मुखः पृष्ठलग्नान्भृङ्गानिव द्विपः ॥२८१२॥

२७८४. 1) Doubtful emendation; A °स्तर्जितो. २७८६. 1) Emended with C; A प्रावृट्पयो°. २७८७. 1) A °सीधु°. २७९९. 1) Thus A; comp. for this name viii. 2496. 2748. 2912. 3313. २८०३. 1) Emended with C; A °हरित. २८०८. 1) A होलळौकसि. २८१०. 1) Emended with G; A रिल्हणप्रेषितं.

अभ्यावृत्तं हर्म्यस्थसचिवैः परिवारितः[1] । - - - - -[2]मायान्तं समवैक्षत पार्थिवः[3] ॥३२१२॥ कुलकम् ॥

प्रीतिविस्फारितदृशा राज्ञा पृष्टस्ततः सभाम् । सोध्यारुरोह संबाधां कौतुकोत्कन्धरैर्जनैः ॥३२१३॥

स्पृष्ट्वा पादौ निषण्णोमे नृपस्यानीय पाणिना । खड्गधेनुं पाणिबद्धामासनाग्रे समार्पयत्[1] ॥३२१४॥

पाणिं सफणिवल्लीकं विवृताग्राङ्गुलिद्वयम् । ततोस्य चिबुकोपान्ते विन्यस्यन्पार्थिवोब्रवीत् ॥३२१५॥ 3215

न विगृह्य गृहीतोसि नाधुनापि निबध्यसे[1] । तदङ्ग कस्माद्भीमः शस्त्रमेतत्त्वयार्पितम् ॥३२१६॥

व्यजिज्ञपत्स भूपालं देव शस्त्रस्य धारणम् । स्वामिसंरक्षणं स्वस्य परित्राणस्य कारणम् ॥३२१७॥

देवे निजप्रतापाभिगुप्तसप्तसरित्पतौ । सेवावकाशो विरलः स्वशस्त्रस्यापि दृश्यते ॥३२१८॥

लोकान्तरेपि शरणं चरणाश्रयणं प्रभोः । तत्रात्र लोके किं कार्यं त्राणोपकरणैः परैः ॥३२१९॥

राजा जगाद तं सत्त्वस्पर्धाबन्धेधुना भवान् । निर्व्यूढकृत्यो वादीत्र कृत्यं नो वर्तते परम् ॥३२२०॥ 3220

भोजो बभाषे दाक्षिण्यजननायाधुना प्रभोः । दृष्टावृते मया किंचिन्नोपचारार्थमुच्यते ॥३२२१॥

किं ते न चिन्तितं दुष्टं किं किं न कृतमप्रियम् । यदसिद्धं न तद्व्यक्तिमगादित्यवधार्यताम् ॥३२२२॥

किं न मल्लान्वये कश्चित्कारणेषूदितो भवान् । विज्ञः[1] समानन्यकुल्यं प्राग्यं वयं चर्मचक्षुषः ॥३२२३॥

यदा यदा देव वाञ्छामकार्ष्म भवदप्रिये । भूमिस्तदा तदा भूम्ना भूप - - -[1] भूयसः ॥३२२४॥

यावत्कवीनां निर्भाति प्रतिभानेन भास्वरः । देवाभवन्नः प्रत्यक्षः प्रतापस्तादृशस्तव ॥३२२५॥ 3225

न शेखरे न प्रदरे न दरेप्युज्झितो[1] मया । प्रालेये भूभृतः कुञ्जे संज्वरस्त्वत्प्रतापजः ॥३२२६॥

ततः प्रभृत्यवनतिप्रणयः शरणैषिणः । सिद्धः संध्याद्रिवन्ध्यत्वादेव[1] दूरस्थितेर्न मे[2] ॥३२२७॥

अथाभेदाभिलाषेण पापार्थेत्किल[1] चेष्टितम् । स्फुरत्तामात्रकव्यक्त्यै न तु तद्विमहामहात् ॥३२२८॥

त्वत्संबन्धादिमे दिक्षु प्रतीक्ष्याः क्ष्माभुजां[1] वयम् । सङ्गाद्गङ्गाम्भसः कान्तकुम्भसंभावना भुवि ॥३२२९॥

अद्यापि द्योतते शाहिराद्वयेन[1] दिगन्तरे । तत्संतानभवोनन्तः समूहः क्षत्रजन्मनाम् ॥३२३०॥ 3230

त्वय्यर्पिते पार्वतीयभूभृत्सङ्गेन्यदादि[1] नः । कदन्नाशनदु - -मुखैः[2] खिन्नोन्मुखैरभूत् ॥३२३१॥

इतीदृशीभिः[1] - - -[2] प्रमाणमथ वा प्रभुः । इत्युक्त्वा भूपतेर्मूर्ध्ना सोगृह्णाच्चरणौ पुनः ॥३२३२॥

प्रणामसंभ्रमस्रस्तोष्णीषशीर्षे ततो नृपः । तस्योत्थितस्य स्वशिरोवाससा समवस्त्रयत् ॥३२३३॥

स्वां तां च शार्वीं तद्वयस्तामुत्सङ्गे सान्त्वयन्न्यधात् । तस्यासंक्षोभगाम्भीर्यस्तमूत्रे च निषेधिनम् ॥३२३४॥

दत्ते[1] मया बिभृहि वा स्वमेते पूजयाथ वा । न शस्त्रमहवैमुख्यं कार्यं मच्छासनं त्वया ॥३२३५॥ 3235

अवन्ध्यशासने - -[1]त्यनुबध्नति[2] ते व्यधात् । शङ्खौ[3] राजानुगत्यैव वन्दित्वाङ्के स कालवित् ॥३२३६॥

ततो निर्यन्त्रणत्वस्य नर्मणः सान्त्वनस्य च । चिरसेवीव तत्काले राज्ञोजायत भाजनम् ॥३२३७॥

---

३२१२. [1]) Emended; A °रितम्.—[2]) Thus A; C अनङ्गतुल्यमायान्तं.—[3]) Emended with C; A पार्थिवम्. ३२१४. [1]) Emended with C; A समर्पयत्. ३२१६. [1]) Emended; A न बध्यसे. ३२२३. [1]) Emended with C; A विप्र स्मा°. ३२२४. [1]) Thus A; C तदा भूता पार्श्वं कम्पस्य भूयसः; perhaps read भूम्ना भूः प्रकम्पस्य भूयसः. ३२२६. [1]) Emended; A °ज्झितो. ३२२७. [1]) Emended; A संध्याद्रिव°.—[2]) Emended; A दूरस्थिते न. ३२२८. [1]) Emended with C; A पा-र्थात्किल. ३२२९. [1]) Emended; A क्ष्माभुजा. ३२३०. [1]) Emended; A शाहेवाद्व°. ३२३१. [1]) Thus A; doubtful.—[2]) Thus A; C कदन्नाशनदुर्भोगाद्व्यस्थैः खे°. ३२३२. [1]) Emended with C; A इतीदृ°.—[2]) Thus A; C supplements स्तुतिभिः. ३२३५. [1]) Emended; A दत्तं. ३२३६. [1]) Emended; A °शासनो - -; perhaps read अवन्ध्यशासने राज्ञीत्यनु°, C °शासनोमार्गीत्य°.—[2]) Emended; A °त्यनुवति ते; the *lacuna* not indicated.—[3]) Emended; शङ्खौ.

अन्यत्प्रविष्टो धन्योथ स्वार्चाम --[1]यन्कृती । कृतप्रणामो भूपाल त्वद्गुणाकर्णनं विना ॥३२३८॥
न प्राणा द्रविणं नाथ गण्यं निर्विक्रिया पुनः । सत्क्रिया स्वामिनोप्यर्थे[1] तस्मात्तार्थैव चिन्त्यताम् ॥३२३९॥
3240 तथापि कथ्यमानं तत्र स्यात्संभावनाभुवि । यदस्मिं[1]श्चिन्त्यतेस्माभिरिति भूपो व्यभाषत ॥३२४०॥
क्षणमुच्चावचां चर्चां विरचय्य विशां पतिः । भोजेन सार्धं शुद्धान्तं रड्डादेव्यास्ततो ययौ ॥३२४१॥
कृतप्रणामस्तां वीक्ष्य सौजन्यादिगुणोज्ज्वलाम् । स राजपारिजातं तं मेने कल्पलतायुतम् ॥३२४२॥
मान्योयं देवि सौजन्यज्ञातेयाभ्यामिहागतः । विशिष्यतेसौ पुत्रेषु क्ष्माभृद्योपे[1]त्यभाषत ॥३२४३॥
सभाजनाय सौजन्यनिधिर्भोजान्वितस्ततः । उदूढकार्यभाराणां दाराणामप्यगाद्गृहान् ॥३२४४॥
3245 अभाणीन्निपुणा राज्ञी भोजं राज्ञा सहागतम् । अधुनैव नृपस्याग्रः संवृत्तोसीति[1] सस्मितम् ॥३२४५॥
लज्जास्मितमुखी पत्युः प्रणत्या स्वागतोक्तिषु । ददत्येवोत्तरं भोजं निर्दिशन्त्यप्यभाषत ॥३२४६॥
आर्यपुत्र न विस्मार्यं प्रत्याख्यातामन्त्रितम् । मानैकशरणस्यास्य ज्ञातिप्रीतिप्रवर्तनम् ॥३२४७॥
पूर्वोपकर्तृ सलिलं वृद्धात्रम्पृशतेन्वहम् । पश्चात्स्वकुलपद्मानां युक्तं जेतुं भवादृशाम् ॥३२४८॥
कार्यकृच्छ्रेवसन्नानाममुष्यागमनं विना । सिध्येदौचित्यसंरक्षा नेह प्रत्यागमश्च नः ॥३२४९॥
3250 उदीपे[1] रक्षतस्तीरं शरीराश्रयिणी भवेत् । ध्रुवं वनस्पतेर्वीरु[2]त्संनिपातानुपातिनी ॥३२५०॥
पतिगत्यनुगामित्वं प्राणानां परिचिन्तितम् । तथा कार्यं यथा न स्याच्चातव्यस्यान्यथात्मनः ॥३२५१॥
राजा जगाद तां देवि सर्वकर्तव्यसाक्षिणी । अन्यथाप्रतिपत्त्यं[1] मे त्वमप्यस्य[2] न मन्यसे ॥३२५२॥
निगृहीतवतो दुष्टौ मुज्जिमल्लार्जुनावपि । निस्तापं मम नाद्यापि प्राप्तानुशयमाशयम् ॥३२५३॥
अथ राज्ञार्थितः स्थातुं परार्ध्ये धाम्नि सानुगः । भोजो नामन्यतान्यत्र राजधान्याः[1] स्थिरां स्थितिम् ॥३२५४॥
3255 विदूराश्रयनिर्गोप्तृभावाप्रचुरदर्शनैः । आराधनं धराभर्तुरसाध्यं ध्यातवान्हि सः ॥३२५५॥
रक्षितृनमहीक्ष्मापास्थि[1]रं च समकल्पयत् । [2]अनया ‒ नृपं कार्या न सुराराधनागमे ॥३२५६॥
विज्ञाय भावं प्रीतेन राज्ञा दत्तं[1] ततो गृहम् । सर्वोपकरणापूर्णं राजधान्यन्तरेभजत् ॥३२५७॥
राजापि ममतास्फीतप्रीतिभिः स्वैः परैस्तथा । उपासितस्तत्र रतिं चिराश्रित इवाययौ ॥३२५८॥
भोगवेलोचिताश्चर्यदर्शनादौ नृपोपि तम् । प्रियं पुत्रमिवास्मार्षीद्भूतैः पार्श्वं निनाय च ॥३२५९॥
3260 जग्राह दक्षिणे पार्श्वे भुञ्जानं ज्ञातिगौरवात् । स्पर्शास्वा[1]दितभोज्यादिदाने नैव व्यवर्जयत् ॥३२६०॥
अकृत्रिमं तथा स्नेहमुवाह ---[2] यथा । लडितं ज्ञा[1]तिवत्तस्मिंस्तद्वा[3]लापत्यकैः समम् ॥३२६१॥
तामेवालम्बत व्यक्तां[1] सोपि वृत्तिं यथा यथा । राजा सपरिवर्होपि विस्रम्भमविगर्हितम् ॥३२६२॥
आसन्नाभ्यन्तरा भिन्ना ये द्वैधे तानदर्शयत् । राज्ञां[1] विरक्तिं स्वस्यारिबाहुल्यं च व्यसर्जयत् ॥३२६३॥

---

३२३८. [1]) Thus A; C स्वार्चाममलयन्कृती. ३२३९. [1]) Emended with C; A स्वामिनो-र्थे. ३२४०. [1]) Emended, A यदास्मिं°. ३२४३. [1]) Emended with C; A क्ष्माभृद्योपेत्य°. ३२४५. [1]) Emended; A संवृत्तोर्मीति; C संवृत्तोऽस्मीति. ३२५०. [1]) A₁ gloss उदीप· अतिवृष्ट्या अत्युद्रिक्तजलागमः.—[2]) Emended with C; A °वीरुत्तत्रि°. ३२५२. [1]) Emended; A प्रतिपत्त्यं.—[2]) Emended with C; A त्वमन्य-. ३२५४. [1]) Emended; A °धान्यां. ३२५६. [1]) Emended; A °क्ष्मापान्स्थिरं.—[2]) Thus A; the text is here evidently corrupt; C अनयात्तं नृपं; G (*sec. manu*) अनुयान्तं नृपं कार्यान्नृसुराराधनागमे. ३२५७. [1]) Emended with C; A दातुं. ३२६०. [1])—[1]) Written by A₅ on new paper. ३२६१. [1])—[1]) Written by A₅ on new paper.—[2]) Thus A; C supplements अनको.—[3]) Emended; A° स्तद्बलापत्यकैः. ३२६२. [1]) Conjectural reading; A तमेवालम्बत व्यक्तिं. ३२६३. [1]) Emended; A राज्ञां.

अकृत्रिमात्समाधानात्करणानां सभान्तरे । न प्रत्यभाज्जडो नापि धृष्टो नापि बकव्रतः ॥३२६४॥

प्रमादस्खलिते हीनातिरिक्तत्वे च भूपतेः । कार्ये नावदधे क्षुद्रः कवितेव महाकवेः ॥३२६५॥ 3265

न विक्रमकथासत्र - - - -[1] व्यकत्थत । प्राग्वृत्तमन्तरा पृष्टः सोपस्कारं च नाभ्यधात् ॥३२६६॥

वि- -कान्तप्रभोः[1] साम्यसकुल्यत्वादिचाटुभिः । धीराधृष्टैर्दृष्टिपातैरपुनर्भाविणो ऽभ्यधात् ॥३२६७॥

तथा स्पृष्टोप्यनुत्तानाशयोभूदवगाहितुम् । न शेकुस्तं यथा जाल्मनर्मविट्पिशुनादयः ॥३२६८॥

क्षणेष्ववसितालोकक्षोभादिविशरारुषु । प्रा- -[1]वसथं गच्छञ्शङ्कां[2] कामपि नातनोत् ॥३२६९॥

यथा यथास्य विस्रम्भाद्भूपोभूच्छिथिलाग्रहः । तथा तथैव सिद्धोश्म इव नाधावदुद्धतम् ॥३२७०॥ 3270

सदैवाग्रेसरोन्यत्र पश्चाद्रुद्धपदोभवत् । अनिषिद्धोपि शुद्धान्तमन्त्रागारावगाहने[1] ॥३२७१॥

विज्ञप्त्यौपयिकात्वाभिप्रार्थनमादरात्[1]स्वयम् । दूराच्चक्रे परापेक्षां शश्वत्संशयिताशयः ॥३२७२॥

अना- - - समये तस्या- - -[1] रक्षिणः । न स्वप्नवृत्तमप्यासीदनावेद्यं महीभुजे ॥३२७३॥

मन्त्र्यान्तःपुरिकादीनां परस्परविगर्हणम्[1] । नावर्णयत्स्मृतिं च दुष्टस्वप्नमिवानयत्[1] ॥३२७४॥

सच्चेतनोपि दुर्नर्मगोष्ठीष्वनुरणन्वचः । अवदत्स्फुरदप्यन्तर्विटानां नाम लाघवम् ॥३२७५॥ 3275

एवं शुद्धानुभावस्य तस्य कृत्येन कृत्यवित् । पुत्रेभ्योप्यधिकां प्रीतिं क्षितिभृन्भेजे[1] क्रमान्नृपः ॥३२७६॥

कलिकालमहीपालदुस्तरः सिंहभूभुजा । सोयं गोत्रपरित्राणे नवः सेतुः प्रवर्तितः ॥३२७७॥

इत्थं विद्राविताशेषोपद्रवस्त्रिल्लकस्ततः । अभि- -[1]मपि स्वास्थ्य- -[2] भूभृदचिन्तयत् ॥३२७८॥

असौ हि निर्हिमोर्वीभृन्मार्गे काले पलायनम् । शाठ्यं सत्त्वस्य दुःसाध्यं वद्धं ध्यायन्व्यलम्बत ॥३२७९॥

अतः सुमेधा यात्रायां यावल्लक्षणमपैक्षत । सज्जपालिनाविचारात्तावत्प्रारम्भि धावनम् ॥३२८०॥ 3280

अल्पाधिष्ठानसुभटः स देवसरसोद्भटैः । बहुभिः सहितः सैन्यैर्मार्ताण्डे विदधे पदम् ॥३२८१॥

निर्निरोधप्रवेशः स प्रदेशः परिपन्थिनाम् । नाद्याश्च योधा निःसारा दर्पान्नेति विवेद सः ॥३२८२॥

त्रिल्लकानुचरा युद्धमसंनिहितसायकाः । तेन सार्धं विदधिरे न चाहीयन्त पौरुषम् ॥३२८३॥

निःसीम[1]सैन्यसहितो लवन्योन्यत्र डामरे । तत्र सर्वाभिसारेण धावतो युयुधे क्रुधा ॥३२८४॥

लुण्ठितद्रविणापूर्णास्ते देवसरसौकसः । सर्वे ततः सज्जपालं विद्रुताः परिजह्रिरे[1] ॥३२८५॥ 3285

द्विषत्संवर्तवर्षार्त्या सर्वत्र त्रुटितेभवन् । अधिष्ठान[1]भटा एव कुलशैला इवोद्धताः[2] ॥३२८६॥

ते तीक्ष्णतीक्ष्णतरगौ सोढारातिरुपश्चिरम् । बहून्नि[1]हतवन्तोन्यांस्तत्र तत्राहवे हताः ॥३२८७॥

[1]क्षतेषु युधि सर्वेषु विन्दानैर्मण्डलं[1] निजैः । भूरेषु तत्र मार्ताण्डोप्यासीदविरलव्रणः[1] ॥३२८८॥

रराजाजौ साज्ज[1]पालिर्गया[2]पालो हतेषु यः । त्रिषु वाजिषु[3] चातुर्यात्पदातिर्नोपलक्षितः ॥३२८९॥

---

३२६६. [1]) Thus A; C supplements °सञ्चशनाद्ये स्वं व्य°. ३२६७. [1]) Thus A; possible emendations would be विडम्ब्य-कान्प्रभोः or विगर्हकान्प्रभोः; C विचारकात्प्रभोः. ३२६९. [1]) Thus A; C प्रासोऽस्याव°.—[2]) Emended; A गच्छच्छ- -ङ्कां. ३२७१. [1]) Emended with C; A °गहने. ३२७२. [1]) Conjectural reading; A प्रार्थन-दरात्स्वयम्, C °प्रार्थनः स दरात्स्वयम् ३२७३. [1]) Thus A; C अनाप्तसमये तस्य न ययुः पथि रक्षिणः. ३२७४. [1])—[1]) Written by $A_5$ on new paper. ३२७६. [1]) Emended with C; A भोजे. ३२७८. [1]) Thus A; C अभिप्रेतमपि स्वास्थ्यहेतुं भू°. ३२८४. [1]) Emended with C; A नि सीम सै°. ३२८५. [1]) Emended; A °जग्मिरे. ३२८६. [1]) Thus corr. by a later hand from $A_1$ अधिष्ठाने भटा.—[2]) Emended with C, A इवेद्धता. ३२८७. [1]) Emended with C; A बहूनिह°. ३२८८. [1])—[1]) Written by $A_5$ on new paper. ३२८९. [1]) Emended; A सज्जपालि°.—[2]) Emended; A गयपालः; cf. viii. 3322.—[3]) Emended; A वाजिष्वचा°; C वाजिष्वचा°.

3290 तत्प्रायस्योपलब्धाजिर्जर्जरस्तदनुजः शिशुः । निनाय विस्मयं वीरान्दृष्टासंख्य[1]महाहवान् ॥३२९०॥
दक्षिणं दोर्न तच्चक्रे यद्वामं कम्पनापतेः । महेभांस्तापयत्यर्कः कुर्याद्भ्रमरदान्विधुः ॥३२९१॥
स धावन्वाजिनाराजदेकदोःस्फुरितायुधः । सधूमदण्डो[1] दावाग्निः सपक्षेद्राविव[2] स्थितः ॥३२९२॥
तं वैरिमुमुक्षे बाणव्रणभङ्गेष्वसौ पुनः । पृष्ठादलोठयद्वाजी – –[1]र्नाबद्धपद्धतिः ॥३२९३॥
चर्मगौरवभूपृष्ठकाठिन्याघातपीडितः । स विसंज्ञो द्विषन्मध्यात्तनयाभ्यां विनिर्हृतः ॥३२९४॥
3295 कटके सर्वतो नष्टे मार्ताण्डप्राङ्गणान्तरे । विरोध्यसाक्षि क्षिप्त्वा तं तावपासरतां ततः ॥३२९५॥
तत्रस्थं – –[1]ना क्ष्माभृत्प्रस्थितः पृथुलैर्बलैः । तावद्भिः प्राप्यमप्याशु डामरं पिण्डितं व्यधात् ॥३२९६॥
क्ष्मापाले विजयक्षेत्रं प्राप्ते त्रोटितवेष्टनः । सज्जपालो लवन्यस्य वसतीर्निरदाहयत् ॥३२९७॥
स तादृगपि भूपाले क्रुद्धे[1] वक्रीकृतभ्रुवि । अदरिद्रो गिरिद्रोणीश्रेणिभूसु[2]लभाशनः ॥३२९८॥
संवृत्तो निःसहायश्च परिग्रहबहिष्कृतः । आपत्सुलभपाण्डित्यभृत्योपालम्भभाजनम् ॥३२९९॥
3300 निकृत्तकरशाखोथ क्ष्मापकोपकपेर्व्यधात् । निरालम्बतया – –[1] स स्वशीर्षफलार्थनाम् ॥३३००॥
रड्डादेवीतनूजानां ज्यायांसं गुल्हणाभिधम् । भीमाल्लो[1]हरराज्येथ क्ष्मावृषा सोभ्यषेचयत्[2] ॥३३०१॥
षट्समहायनो[1] राजतनयः स वयोधिकान् । चूताङ्कुरो जीर्णतरूनिवेशानजयद्गुणैः ॥३३०२॥
अभिषेक्तुं सुतं देव्या यातायाः क्ष्माभुजो व्यधुः । शिरःशोणाश्मकिरणैश्चरणौ यावकारुणौ ॥३३०३॥
तत्राभिषिक्ते वसुधामुमावग्रहशोषिताम् । देवीभावाभिषेकार्थमिवासिञ्चन्पयोमुचः ॥३३०४॥
3305 भूयोपि राजवदनो विप्लवोत्पादनोत्सुकः । अमन्दमवचस्कन्द जयचन्द्रं नृपाज्ञया ॥३३०५॥
नागभ्रातृव्यसहिता गार्गेरनुप्रवेशिनः । पश्चात्प्रसर्पिणीः सेनाः सोवधीत्संकटेध्वनि ॥३३०६॥
गार्गिः परिभवम्लाननं तिष्ठन्दिनैस्ततः । नागभ्रातृसुताम[1]ण्यमद्भाल्लोष्ठकं[2] मृधे ॥३३०७॥
दुर्गमत्वादनाक्रान्तमन्यैर्वेगात्प्रविश्य च । दग्ध्वा च[1] दिन्नाग्रामं स निरगाल्लघुविक्रमः ॥३३०८॥
तथापि राजवदनो न शौर्यात्पर्यहीयत । न संदधे न चुक्रोध शक्यमस्य विनिर्गमम् ॥३३०९॥
3310 अहन्यहनि हीनाभिः सेनाभिर्न्यपतन्नृपे । जयचन्द्रमुखाच्छ्रदसुखान्यत्रधीभवत्[1] ॥३३१०॥
क्ष्मानायकोथ निःसीमनखबाहुप्रसारणः । रणान्तरेव तं तीक्ष्णैर्गूढन्यस्तैरघातयत् ॥३३११॥
तन्मुण्डगण्डलेखेन लुठता खण्डशः कृतः । झटिति त्रुटितः स्वास्थ्यविटप्यं[1]कुरणोन्मुखः ॥३३१२॥
पृथ्वीहरकुलाच्छेदस्वच्छद्मा मेदिनीपतिः[1] । अवधील्लोठनमपि[2] छद्मदण्डप्रयुक्तिभिः ॥३३१३॥
एकवारं वेष्टितोपि रक्षितस्तिलकेन सः । भूमिभृन्नीतिपाशस्य निपातेनाभ्यवर्तत[1] ॥३३१४॥
3315 मल्लकोष्ठक्षुरजय्यसड्डु[1]चन्द्रादयोभवन् । जीवन्मृताश्च शान्ताश्च दारिद्र्योपप्लवार्दिताः ॥३३१५॥

---

३२९०. [1]) Emended with C; A °न्दृष्टसङ्ख्य°. ३२९२. [1]) Emended with C; A °दण्डं.—[2]) Emended with C; A °ग्राविव. ३२९३. [1]) Thus A; C तदन्वाबद्ध°. ३२९६. [1]) Thus A; C कम्पनाक्ष्मा°. ३२९८. [1]) Emended with C; A क्रुद्धो.—[2]) Emended with C; A °श्रेण–सुल°. ३३००. [1]) Thus A; C supplements तस्य. ३३०१. [1]) Emended; A भीमाल्लो°.—[2])—[2]) Written by $A_g$ on new paper. ३३०२. [1])—[1]) Written by $A_g$ on new paper. ३३०७. [1]) Emended with C; A °सुतामध्यामव°.—[2]) Comp. viii. 2996. ३३०८. [1]) Emended; A स. ३३१०. [1]) Doubtful; thus C; A °खान्यवधीभवत. ३३१२. [1]) Conjectural reading; A °विटोस्वकुरो°, C °विटास्यंकुरणो°. ३३१३. [1]) Emended with C; A °पते:.—[2]) Comp. regarding this name the note to viii. 2496.—[3]) Emended; A च्छस्व°. ३३१४. [1]) Emended with C; A °भ्यवर्तिता. ३३१५. [1]) Thus A; misread °मड्डचन्द्रा° in R C; cf. सड्डचन्द्रस्य viii. 643.

अविचिन्त्योच्चलक्षोणिभृतः प्राणान्विनश्वरान् । ऐश्वर्यस्यैकमूलत्वादनिर्व्यूढव्यवस्थिती ॥३३१६॥
मठेनुमितकोशस्वं तत्तद्राजाश्रयाद्गते । कुलोद्वहो विहितवांल्सिंहदेवो व्यवस्थितिम् ॥३३१७॥युग्मम्॥
सुद्धांविहारं पैतृव्यं पितुर्देवगृहत्रयम् । तत्रार्धसिद्धप्रासादं परिपूर्णं व्यधान्नृपः ॥३३१८॥
स एव मामान्सांस्मीमहापणसमर्पणैः । निर्दोषपारिषद्यादिदग्धाग्निशेषाभीर्व्यधात् ॥३३१९॥
अवरोधेन्दुवदनां मृतामुद्दिश्य चन्दलाम् । प्रत्यष्ठापि मठोनूनश्रीर्हारेवारितातिथिः ॥३३२०॥ 3320
स्पष्टो नगरनिर्दाहैः सोपि सूर्यमतीमठः । पूर्वाधिकोपगर्वेण तेनैव निरमीयत ॥३३२१॥
संजाते सज्जपालस्य ततो लोकान्तराश्रये । कम्पने निदधे राज्ञा गयापालस्तदात्मजः ॥३३२२॥
विपाकसुकुमारोपि दुःसहः सूनुनाभवत् । विस्मारितः स सौम्येन शरद्भानुरिवेन्दुना ॥३३२३॥
ग्रीष्मोष्मदोषविषमेष्वविशेषवृत्तेर्मेघोदये तटतरोस्तटिनीप्रवाहः ।
पश्यन्नकाण्डतडिदापतनेन नाशं नाशंसति स्वसलिलस्य विभूतिलाभम् ॥३३२४॥
आ भिक्षुक्षपणाद्द्रोजभञ्जनादपि भूभुजः । विधुरे कार्यभाराणां योभूदुद्धधुरः परम् ॥३३२५॥ 3325
तस्य तस्मिन्नृपरते क्षीणप्रक्षीणकण्टके । स धन्योनन्यसामान्यप्रेमा प्रमयमाययौ ॥३३२६॥
ताम्बूलमायात्रिकतां नीत्वाभूनामयानिव । आर्पिपन्मधुरावद्धं जीवं यस्य निजः सुतः ॥३३२७॥
स जगज्जीवितेनापि रक्षणीयः क्षमापतिः । पदे पदे विपन्ममः प्रजोद्धरणधीरधीः ॥३३२८॥
व्याधितस्य विनिद्रोपि संसक्रान्मङ्गलेच्छुभिः । नान्तक्षणे तस्य पार्श्वात्कृतशोवाचलन्नृपः ॥३३२९॥
प्रियप्रजस्यामात्यस्य स्वरूपविपरीतता । तस्य कंचित्क्षणं जाता जनंजीवितदा भवे ॥३३३०॥ 3330
भूभुजामपि मान्धातृमुखानां निधनेन याः । दुःखं ययुः प्रजास्तासां समभावि तदा सुखम् ॥३३३१॥
द्वैराज्योपप्लुते राष्ट्रे नवस्य नृपतेरभूत् । अभ्याहतं यत्साचिव्यं तस्य सर्वाभिषङ्गभित् ॥३३३२॥
कालो बली व्यवहृतेर्ननु तद्वशेन पूर्वापराचरणविस्मरणे न कस्य ।
शक्तिः क्षितेर्वहनकर्मणि योग्यतायां निर्दारणे मुरजितस्तु वराहतायाम् ॥३३३३॥
नगराधिकृतो भूत्वा सुज्जेर्निर्वापिते पुरा । चिरप्ररूढां यो देशस्याव्यवस्थां न्यवारयत् ॥३३३४॥
भ्रष्टः क्रयेषु दीनारव्यवहारोऽव्यवस्थया । निगृह्य तं भ्रंशकार्यनिर्वितण्डः प्रवर्तितः ॥३३३५॥ 3335
परिणीताङ्गनाशीलभ्रंशो गृहपतेरभूत् । दण्डप्रवृत्तिर्या तेन सा विचार्य निवारिता ॥३३३६॥
एकान्ततो हितो भूत्वा विशामेवं पुनर्व्यधात् । नगराधिक्रियां लब्ध्वा स एव परिपीडनम् ॥३३३७॥
बद्धाभिर्नर्तकीभिश्च परिणीतगृहस्थिती । संप्रयुक्तान्कथ्यमानान्हठेनादण्डयद्बहून् ॥३३३८॥

---

३३१६. 1)—1) Written by $A_5$ on new paper.—2) Emended with C; A ऐश्वर्यं क°. ३३१७. 1)—1) Written by $A_5$ on new paper.—2) Emended; A° स्थितम्. ३३१८. 1)—1) Written by $A_5$ on new paper.—2) Emended with C; A स्वक्का°; cf. viii. 248.—3) Emended with C; A पैतृव्य.—4) Emended with C; A ¯¯नृपः. ३३१९. 1) Emended with G (*sec. manu*); A मामसा°. ३३२०. 1) Emended with C; A °वदनं.—2) Thus $A_1$ R; $A_5$ चन्दलाम्; C चन्द्रलाम्. ३३२१. 1) Emended with G (*sec. manu*); A पृष्टो नगरनिर्मोह (पृष्टो written by $A_5$); cf. viii. 1193. 1528. ३३२३. 1) Emended; A सौम्येम. ३३२६. 1) Emended; A धन्यो नान्यसा°. ३३२७. 1) Thus A; perhaps read नीत्वासुना°.—2) Emended with C; A आर्पिपामधु°. ३३२९. 1)—1) Written by $A_5$ on new paper. ३३३०. 1)—1) Written by $A_5$ on new paper. ३३३२. 1) Emended with C; A अभ्याहतं. ३३३३. 1) Emended with G (*sec. manu*); A निर्मारणे. ३३३५. 1) Doubtful emendation; A प्रवर्तत; C प्रवर्त्तेत. ३३३७. 1) Emended; A पीडयम्. ३३३८. 1) Emended with C; A° बद्धाभि¯¯कीभिश्च.—2) Conjectural reading; A परि¯सगृ°; C परिणीतगृ°.

किंचो ---[1]लेशानां तुषाणामिव चिन्तनैः । अद्रोहालोभयोर्भूमिर्न तादृगपरोभवत् ॥३३३९॥

3340 भिक्षु[1]मल्लार्जुनौ कालानुवृ[2]त्त्याश्रित[3]वानपि । नासौ [2]जहौ स्वामिहितं[4] न तौ ---[5] नावधीत् ॥३३४०॥

अक्षीणत्यागहीनस्य विभूतिसमयेप्यभूत् । संस्कारौपयिकं नास्य पर्याप्तं निधने धनम् ॥३३४१॥

कृतज्ञतायां राज्ञोन्यत्पर्याप्तं किमुदीर्यताम् । यो जीवित इवानीतान्संविभेजेनुजीविनः ॥३३४२॥

लोकान्तरातिथिं बिज्जाभिधामुद्दिश्य वल्लभाम् । धन्यस्य बिज्जनामाढ्य[1]विहारारम्भकारिणः ॥३३४३॥

परलोकं प्रयातस्य निर्माण[1]प्रतिपूरणम् । स्थितं व्यवस्थितेः कं च विनियोगं चकार सः ॥३३४४॥ युग्मम् ॥

3345 भूभृद्धार्मिकतावाप्तबद्धकृतोत्सेकवासवैः । युद्धैकवृत्तिभिरपि प्रवृत्ते पुण्यकर्मणि ॥३३४५॥

त्रिपक्षाणां सुभिक्षेण तुरुष्कविष[1]याश्रयात् । जन्मभूमेर्वृत्तये यैः क्रौर्यादन्यन्न शिक्षितम् ॥३३४६॥

ये[1]पि वृत्तिं विरोध्याजिव्यमे सुस्सलभूभुजि । कलहावसरेष्वेवं[1] कश्मीरेषु प्रपेदिरे ॥३३४७॥

गोत्रे तेषां क्षत्रियाणां जातः कर्मल्लियानुजः । राजबीजी सद्धिंयाख्यः प्रतिष्ठां[1] स्वाख्ययाकरोत् ॥३३४८॥

वितस्तापुलिने बाणलिङ्गे तेन निवेशिते । जायते स्वर्धुनीरोधःसंप्ररूढविमुक्तधीः ॥३३४९॥

3350 तदीयं च मठं चैव तपोधनविभूषितम् । दृष्ट्वा निवर्तते रुद्रलोकालोकनकौतुकम् ॥३३५०॥

लोठनेन्यप्रतिष्ठानामधन्यद्रविणार्पणे । न तेनायतने काले संरब्धं[1] शुद्धबुद्धिना ॥३३५१॥

उदयस्य प्रिया चिन्ताभिधाना कम्पनापतेः । पुलिनोर्वीं वितस्ताया विहारेण व्यभूषयत् ॥३३५२॥

प्रासादपञ्चकव्याजात्तद्विहारस्थितः करः । उदस्त इव धर्मेण प्रोत्तुङ्गाङ्गुलिपञ्चकः ॥३३५३॥

सांधिविग्रहिको मङ्खकाख्योलंकारसोदरः । समठस्याभवत्स्रष्टः श्रीकण्ठस्य प्रतिष्ठया ॥३३५४॥

3355 मठामहारदेवीकोजीर्णोद्धारादिकर्मभिः । अनुजः[1] सुमना नाम रिल्हणस्यामदत्तुलाम् ॥३३५५॥

भूतेश्वरे मठं कृत्वा त्रिग्राम्यामप्यपाययत्[1] । तोयं कनकवाहिन्या वितस्तायाश्च यः पितॄन् ॥३३५६॥

प्रदेशे[1] कश्यपागाराभिधाने नीलभूः सरित् । जीगीषयेव जाह्नव्या यत्र पूर्वां दिशं गता[2] ॥३३५७॥

उत्ताराय गवादीनां यः सेतुं तत्र बन्धयन् । निर्ममे निर्मलं कर्म संसारोत्तरणक्षमम् ॥३३५८॥

नगरेपि स्वनामाङ्कवृषाङ्कागारकारिणा । मठो येन कृतोभ्रष्टजटाधरघटाश्रयः ॥३३५९॥

3360 मम्मेश्वरं स सौवर्णामलसारं[1] चकार यः । सोमतीर्थं तथा तोयोद्यानादुद्[2]द्योतितान्तिकम् ॥३३६०॥

अत्र क्ष्माभुजो[1] वंशे वंशोन्नत्यधनादिषु । सासूयस्वादमात्यानां धनप्राणादिहारिणः ॥३३६१॥

कुध्यस्तवासनाध्यासासूयया वासवोपि वा । माभ्रंशयद्दिवो देवो[1] मान्धातारं धराभुजम् ॥३३६२॥

अविप्लुतमतिर्भृत्यान्कृत्यौचित्यव्रतोन्वहम् । दृष्ट्वा ध्यातस्वमाहात्म्यवृद्धिस्तु प्रीयते नृपः ॥३३६३॥

कल्लशक्ष्मापते[1]: प्राशोपज्ञं भृत्योस्य रिल्हणः । कुर्वन्स्वर्णातपत्राणां प्रतिष्ठां प्रीतिकार्यभूत् ॥३३६४॥

---

३३३९. [1]) Thus A · C चो भवेद्बुलेशानां. ३३४०. [1]) Thus R C; $A_5$ भिक्षमल्ला°.—[2])—[2]) Written by $A_5$ on new paper.—[3]) Thus $A_5$; C °वृत्त्या श्रुत°.—[4]) Emended; A स्वामिहतं.—[5]) Thus A; C supplements तावपि. ३३४३. [1]) Doubtful emendation; A °नामाढ्य°. ३३४४. [1]) Emended with G (*sec. manu*); A निर्वाण.° ३३४६. [1]) Emended with C; A तुरुष्कामिषया°. ३३४७. [1])—[1]) Written by $A_5$ on new paper. ३३४८. [1])-[1]) Written by $A_5$ on new paper. ३३५१. [1]) Emended; A संरब्धे. ३३५५. [1]) Emended; A अनुजा. ३३५६. [1]) Emended; A त्रिमाम्यमप्यपातयत्; cf. वामेन सिन्धुस्त्रिग्राम्या वितस्ता दक्षिणेन तु v. 97. ३३५७. [1]) Emended; A प्रदेश्व.—[2]) These two *pádas* and the following three verses are written by $A_5$ on new paper. ३३६०. [1]) Emended with C; $A_5$ R °मलसारं.—[2]) Emended; $A_5$ R °द्यानामुद्योति°. ३३६१. [1]) Doubtful emendation; A क्ष्माभूभुजौ.—[2]) Emended; A °स्वनामास्थानां.—[3]) Emended; °धिहारिणः. ३३६२. [1]) Emended with C; A देवीं. ३३६४. [1]) Thus corr. by $A_1$ from °पतिः.—[2]) Thus A; cf. vii. 528 ffg.

स्वर्णपत्त्रं[1] सुरेश्वर्यां शिवयोः समवेतयोः । सदीपारात्रिकामत्रमैत्रीमेति सघण्टिकम् ॥३३६५॥ 3365

बन्धोर्हिमाद्रेर्दयितः सुताजामातरौ शिवौ । स्वर्णच्छत्त्रच्छलान्मेरुर्मूर्ध्न्याघ्रातुमुपागतः ॥३३६६॥

उद्दिश्य यद्विदधदुद्यममात्मयोनिर्दग्धो मयाङ्गघटनं दयितेन गौर्याः ।

सिद्धं तदत्र ---[1]मुमयेति हेमच्छत्त्रच्छलाङ्कुरदृशाश्वलितोग्निरूर्ध्वम् ॥३३६७॥

छत्त्रं तत्र च रिल्हणेन विहितं रौक्मं महद्रुक्मिणीप्रेयोमन्दिरमूर्ध्नि नद्धमधुनादभ्रं परिभ्राजते ।

क्षैण्येन क्षतजावपानजनुषा नष्टं ततः स्वामिना प्राप्तं चक्रमवेक्षितुं स्वरुचिरं भास्वानिवाभ्यागतः ॥३३६८॥

तीर्थे मन्मथजित्खगध्वजदृढाजर्योर्जिताचार्यके साधाराभरणं क्रियापरिणति स्वर्णातपत्रं प्रभोः ।

भात्येकस्य शिखाहिफूत्कृतिवलद्भृङ्गाञ्जरेणूपगं[1] केशान्तस्थितमेघपार्श्वगतडित्पिण्डाभमन्यस्य च ॥३३६९॥

सौवर्णद्रुहिणाण्डकर्परपुरे संसूत्रिता छत्त्रकव्याकोशस्य समुद्गकप्रतिकृतौ दीर्घार्घित—[1] घने ।

सङ्गेनेन्दुकिरीटकैटभरिपुश्यामासितालंक्रिया सद्रत्नाकरयोः पिधानकरणिं स्वर्णातपत्रं गतम् ॥३३७०॥ 3370

तं लोहरमहीपालमन्वजायन्त भूभुजः । रड्डादेव्या गुणोदाराश्चत्वारश्चतुराः[1] सुताः ॥३३७१॥

गुल्हणेनापरादित्यो राघवेणेव लक्ष्मणः । अभिन्नभावः संवृद्धिं वर्तते लोहरे श्रयन् ॥३३७२॥

ललितादित्य[1]देवेन जयापीडो हि दारकः । भरतेनेव शत्रुघ्नः पाल्य[2]मानः प्रवर्तते ॥३३७३॥

पार्थिवाहस्कराद्यारुनमस्कारात्प्रभास्करः । पञ्चमः[1] क्षितिभृद्धर्म्यो बालातप इवोदितः ॥३३७४॥

चपलैः शैशवाच्छन्नानुभावत्वात्ससौष्ठवैः । लडितैर्ललितादित्यो भिनत्तीरप्यार्द्रयत्यहो ॥३३७५॥ 3375

दत्तरक्षाञ्जनं ताम्राधरं गौरं तदाननम् । सबालातपभृङ्गाङ्क[1]स्वर्णपङ्केरुहायते ॥३३७६॥

आलापास्तस्य माहात्म्यगर्भा बाल्या[1]स्फुटा अपि । अमृतार्द्रा इवोद्गारा मथ्यमानस्य वारिधेः ॥३३७७॥

महाभिजनसंजातो राजसूनुः स शैशवे । अभिधत्तेनुभावेन भव्येनागामि जृम्भितम् ॥३३७८॥

अव्यक्तमण्डनशिखण्डिशिखोपि तोयस्पर्शासहाञ्चितकलापिकलापभङ्ग्या ।

वापीं निपीतसलिलो ग्लपितं प्रयाति चेष्टोक्तभावमहिमा वरवर्णिभावः ॥३३७९॥

चतस्रो मेनिला[1] राजलक्ष्मीः पद्मश्रिया समम् । संजाताः[2] कमला चास्य कन्याः सत्कृत्यवृत्तयः ॥३३८०॥ 3380

विनोदलीलोद्यानैस्तैर्नित्यकान्तैरपत्यकैः । विद्योतितेतेन[1] वद्यौ तौ प्रावृट्पुष्पाकराविव ॥३३८१॥

तीर्थायतनपूतेस्मिन्मण्डले खण्डितैर्ध्यैः । रड्डादेव्या एव याता भाग्यभावं विभूतयः ॥३३८२॥

कृतानुयात्रा सा दैवयात्रासु[1] क्षितिपाङ्गना । [2]राजलक्ष्मीरिवाभाति राजसामन्तमन्त्रिभिः ॥३३८३॥

सतीदेशे तीर्थसार्थास्त्यजन्त्यस्या निमज्जने । स्नानासक्तसतीमूर्तिस्पर्शनौत्सुक्यमञ्जसा ॥३३८४॥

चित्रे कालेत्र यात्रासु द्रष्टुं वृष्ट्युत्तरैः सदा । यत्प्रावृडिव --[1]यं जीमूतैरनुगम्यते ॥३३८५॥ 3385

३३६५. [1]) Emended ; A पत्त्रां. ३३६७. [1]) Thus A ; C करुणामुमयेति°.—[2]) The last *páda* and the following verse written by $A_5$. ३३६८. [1]) Emended with C ; $A_5$ R चक्रमिवे°. ३३६९. [1]) Thus A ; C °पर्गं. ३३७०. [1]) Thus A ; C °र्घितार्घे घने. ३३७१. [1]) Emended with C ; A °श्चतुरस्सुताः. ३३७३. [1]) Emended with C ; A ललितालित्य°.—[2]) Emended with C ; A पाल्मानः. ३३७४. [1]) The last two *pádas* and the following verse written by $A_5$ on new paper. ३३७६. [1]) Emended with C ; A °भृङ्गाङ्कास्वर्ण°. ३३७७. [1]) Emended ; A बालास्फुटा. ३३८०. [1]) Emended with C ; A मेमिला ; cf. viii. 3394. 3397.—[2]) Emended ; A संजाता. ३३८१. [1]) Doubtful emendation ; A विद्योतयात्रवद्यौ; C द्योतितावनवद्यौ. ३३८३. [1]) Emended with C : A यात्रास्वक्षि°.—[2]) These two *pádas* and the first *páda* of the following verse are written by $A_5$ on new paper. ३३८५. [1]) Thus A ; C supplements तैथेयं.

सा पार्थिवेषु तीर्थेषु स्नानाय प्रस्थिता[1] ध्रुवम् । दिव्यैर्वर्षमिवात्तीर्थैः प्रावृश्येत तदीर्ष्यया ॥३३८६॥
अभ्रंलिहान्न च गिरीन्न च कूलंकषा नदीः । मृद्गन्ती दुर्गमा मार्गे तीर्थौत्सुक्येन वेत्त्यसौ ॥३३८७॥
सुबह्वीभिः प्रतिष्ठाभिर्जीर्णोद्धारैश्च धीरया । तया चित्रं चतुरया पङ्कुर्दिष्टा विलङ्घिता ॥३३८८॥
अद्यापि त्रिक्षरत्क्षीरार्णवकान्तिच्छटाच्छलात् । यो भातीव सुधासूतिसितश्वेताश्मनिर्गतः ॥३३८९॥
3390 उपमन्योरुदन्याया दारिद्र्योपद्रवापहः । रुद्रो रुद्रेश्वरो नाम्ना श्रीमान्कश्मीरभूषणम् ॥३३९०॥
जगत्सौन्दर्यसारं स सस्वर्णामलसारकः । शान्तावसादप्रासादोद्धारश्च विहितस्तया ॥३३९१॥
सत्त्वानामिव भृत्यानां कोपौर्वविकृते नृपे । उदन्वतीव शरणं[1] सिन्धुर्हैमवतीव सा[2] ॥३३९२॥
स्थिरप्रसादे भूपाले निग्रहानुग्रही क्षणात् । भूभुजामपि संवृत्तावविच्छिन्नौ[1] तदिच्छया ॥३३९३॥
सोमपालात्मजो भूभृद्भूपालः प्रापितस्तया । मानिन्या मेनिलादेव्या विवाहेन महार्हताम् ॥३३९४॥
उत्पत्ति[1]भूमिसुलभानुभवो न भूम्ना कस्याप्यहो व्यभिचरत्यनुभावभावः ।
3395 तेजस्तमोविलुठनव्रतमुष्णभानोश्छेदं तदुत्थमकरोत्तमसोपि चक्रम् ॥३३९५॥
भुवनाद्भुतसाम्राज्यमार्जने[1] भूभुजाभवत् । प्रातिभाव्यं वृद्धं रत्नाक्रान्तसन्मण्डलावनिः ॥३३९६॥
ऊढायां मेनिलादेव्यां परिणेतुरभूदपि । पिता वैमत्यमुत्सृज्य निर्व्याजं राज्यदायकः ॥३३९७॥
राज्ञः प्राजिधरस्याजौ तरसा भूभुजोनुजः । वैरिभिर्निहतस्याग्रे वैरसंशोधनोद्यतः ॥३३९८॥
राज्ञां शरणमेत्योच्चमानौल्कटचो[1] घटोत्कचः । भेजे राज्यश्रियं प्राप्य चित्रं राज्याश्रियं पराम् ॥३३९९॥ कुलकम् ॥
3400 कृतसाहायकोमात्ये राज्ञः सञ्ज्ञिमङ्गदम् । राज्यात्प्राभ्रंशयद्भ्रातृवृद्धं[1] पञ्चवटं[2] नृपम् ॥३४००॥
अलङ्घ्यत्तत्प्रभावात्स्फारदानाम्बुनिर्भरात् । सरितं खड्गवल्लीं च कृष्णां[1] विद्वेषिगोचराम् ॥३४०१॥
द्वितीयस्योरशाभर्तुरकीर्तिं निर्जया[1]सृजत् । देवप्रभावायोधाममत्युग्रपुरमग्रहीत् ॥३४०२॥
शीतोष्णवारणशशियोतकल्लोलितास्ततः । बहवो वाहिनीनाथाः प्रथामित्थं प्रपेदिरे ॥३४०३॥
समाद्वाविंशती राज्यावाप्तेः प्राग्भूभुजो गता । तावत्येवाग्रराज्यस्य पञ्चविंशति[1]वत्सरे ॥३४०४॥
3405 इयद्दृष्टमनन्यत्र प्रजापुण्यैर्महीभुजः । परिपाकमनोज्ञत्वं स्थेयाः कल्पातिगाः समाः ॥३४०५॥
अम्भोपि प्रवहत्स्वभावमशनैराश्यानमश्मायते यावाम्भः[1] स्रवति द्रवत्वमुदितोद्रेकेषु चावेयुषः ।
कालस्यास्खलितप्रभावरभसं भाति प्रभुस्त्वेद्भुते कस्यामुत्र विधातृशक्तिघटिते मार्गे निसर्गः स्थिरः ॥३४०६॥
प्रयाते ह्यधिकेप्यर्धसमाषट्कशते कलेः । कश्मीरेष्वास्त गोनन्दः पार्थानां सेवया नृपः ॥३४०७॥
सूनुर्दामोदरो[1]स्याथ तस्य पत्नी यशोमती[2] । गोनन्दोन्यस्तत्सुतोपि ततोतीत्य महीपतीन्[3] ॥३४०८॥
पञ्चत्रिंशतमज्ञातान्महाभिजनाभिधाम् । राजाभवल्लवो[1] नाम सूनुस्तस्य कुशस्ततः ॥३४०९॥

---

३३८६. [1]) Emended; A प्रस्थितं. ३३९२. [1]) Emended with C; A सरणं.—[2]) The last *pâda* and the following two verses written by $A_5$ on new paper. ३३९३. [1]) Emended; $A_5$ R C °च्छिन्नस्तदि°. ३३९५. [1]) Emended with C; A उत्पत्तिर्भू°. ३३९६. [1]) Emended; A °मार्जनो. ३३९९. [1]) Emended; A °त्योच्च मानोत्क°. ३४००. [1]) Emended; A राज्यं प्रा°.—[2]) Doubtful emendation; A °वटो. ३४०१. [1]) The last *pâda* and the following verse written by $A_5$ on new paper. ३४०२. [1]) Doubtful emendation of G (*sec. manu*); A °कीर्तिर्मिज°. ३४०४. [1]) Emended with C; A °त्रिंशत्तु व°. ३४०६. [1]) Emended with C; A यावोम्भः. ३४०८ [1]) Emended with C; A दामोदरस्याथ.—[2]) Comp. यशोवती i. 70.—[3]) Emended with C; A °पती. ३४०९. [1]) Emended with C; A राजा वल्लभको; cf. अथाभवल्लवो नाम i. 84.

द्वौ खगेन्द्रसुरेन्द्राख्यौ पुत्रपौत्रावमुष्य तु[1] । गोधरोथान्यकुलजः सुवर्णाख्यस्तदात्मजः[2] ॥३४१०॥ 3410

तज्जन्मा जनकोप्यासीत्सूनुः शच्याः शचीनरः । अथाशोकोभवद्भूभृद्राशोस्य प्रपितृव्यजः ॥३४११॥

तज्जो जलौकाः संदिग्धवंशो[1] दामोदरस्ततः । तुल्यं त्रयोथ हुष्काद्यास्तुरुष्काभिजनोद्भवाः ॥३४१२॥

अभिमन्युस्तृतीयोथ गोनन्दोस्य विभीषणः । राजेन्द्रजिद्रावणश्च --श्चः क्रमशोभवत्[1] ॥३४१३॥

अन्यो विभीषणः[1] सिद्ध उत्पलाक्षश्च[2] तदनु[3] । पश्चात्ततो हिरण्याक्षहिरण्यकुलयोरभूत्[4] ॥३४१४॥

राजा वसुकुलस्तस्य सूनुः ख्यातस्त्रिकोटिहा[1] । क्षितिनन्दो बकात्तज्जाद्वसुनन्दस्तदात्मजः[2] ॥३४१५॥ 3415

नरोन्योक्षस्ततस्तस्माद्गोप्ता गोकर्णको नृपात् । तस्मान्नरेन्द्रादित्योभूत्सूनुरन्धयुधिष्ठिरः ॥३४१६॥

तस्य प्राभ्रंशितो भृत्यैरन्याभिजनसंभवः । भूपः प्रतापादित्योभूज्जलौकोपि तदात्मजः ॥३४१७॥

तुञ्जीने[1] निःसुते तज्जे विजयोन्यकुलोद्भवः । जयेन्द्रेस्य सुतेपुत्रे[2] सचिवः संधिमानभूत् ॥३४१८॥

युधिष्ठिरस्य पौत्रेण भूपादित्यात्मजन्मना[1] । श्रीमेघवाहनेनाथ गोनन्देभ्युदितं[2] कुले[3] ॥३४१९॥

.......................... | .............................. ||

ततः प्रवरसेनोन्यस्तोरमाणात्मजः[1] क्षितिम् । लेभे हिरण्यभ्रातृव्यस्तस्य पुत्रो युधिष्ठिरः[2] ॥३४२०॥ 3420

ततो नरेन्द्रादित्यश्च रणादित्यश्च भूपतिः । क्रमादभूतां तत्पुत्रो विक्रमादित्यभूपतिः[1] ॥३४२१॥

बालादित्यश्चोदभवद्रणादित्यस्य[1][2] नन्दनः । बालादित्यस्य जामाता ततो दुर्लभवर्धनः ॥३४२२॥

सूनुर्दुर्लभकस्तस्य चन्द्रापीडोभवत्ततः । तारापीडोनुजन्मा च मुक्तापीडोस्य[1] चानुजः ॥३४२३॥

भूपावास्तां कुवलयापीडो द्वैमातुरोस्य च । वज्रादित्यः सुतौ राज्ञो मुक्तापीडस्य तत्सुतौ ॥३४२४॥

पृथिव्यापीडसंग्रामापीडावनु नृपोभवत् । जयापीडोस्य मन्त्री च जज्जः[1] पुत्रावपि क्रमात् ॥३४२५॥ 3425

ललितापीडसंग्रामापीडौ[1] ज्येष्ठात्मजस्ततः । श्रीचिप्पटजयापीडः कल्यपाल्युद्भवोभवत् ॥३४२६॥

अभिचारेण तं हत्वा सांमत्यादितरेतरम्[1] । उत्पलाद्यैरसंप्राप्तराज्यैस्तन्मातुलैः कृतः ॥३४२७॥

भ्रातुः पुत्रोजितापीडो जयापीडस्य तत्पदे । अनङ्गापीडनामा च संग्रामापीडजस्ततः ॥३४२८॥

तमुत्पाट्योत्पलापीडोस्याजितापीडनन्दनः । अवन्तिवर्मा शूरेण[1] तं निवार्याथ मन्त्रिणा ॥३४२९॥

---

३४१०. [1]) The last three *pâdas* and the following verse are no longer found in A as the upper portion of fol. 327 has broken off; the text is given from R G.—[2]) Emended with C; R G (*prima manu*) सुवर्णाकुस्तदा°; cf. i. 97. ३४१२. [1]) Emended; R C °वंशो; the upper strokes of the letters are not legible in A. ३४१३. [1]) Thus A; C पितापुत्रौ क्रमान्नृपौ. ३४१४. [1]) Here the name of NARA is omitted.—[2]) Emended; A उत्पलाक्षश्च.—[3]) Thus A; doubtful.—[4]) Emended; A हिरण्याख्येहिरण्यकुलायोर°. ३४१५. [1]) C inserts here two *pâdas* श्रीमिहिरकुलो राजा बकाख्यस्तदनन्तरं.—[2]) Emended; A क्षितिनन्दो बकात्मजाद्वसु°. ३४१८. [1]) Emended; A तुञ्जने; cf. ii. 11.—[2]) Emended; A जयेन्द्रस्य- -पुत्रे; C जयेन्द्रस्तरसुतोऽपुत्रः. ३४१९. [1]) Thus A; but compare ii. 145 ffg.—[2]) Emended with C; A गोनन्दाभ्युदितं.—[3]) After this verse C inserts the following: ततः प्रवरसेनोभूद्भूपः काश्मीरमण्डले ॥ तत्सूनुश्च हिरण्योऽभूत् पालयन् क्षितिमण्डलं । मातृगुप्तोऽभवत्तत्राज्यस्तेन शकारिणा ॥. One verse containing the names of PRAVARASENA I., HIRANYA and MÂTRIGUPTA appears to have been omitted here by A. ३४२०. [1]) The remaining portion of this verse, the following verse and the first *pâda* of verse 3422 are no longer found in A, as the upper portion of fol. 327 has broken off; the text is given from R G.—[2]) Thus C; R पुत्रो -धिष्ठिरात्, corr. *sec. manu* as above; G पुत्राद्युधिष्ठिरात्. ३४२१. [1]) Thus C R; G तद्वच विक्रमादित्य उर्वरीम्. ३४२२. [1]) Thus C R; G °स्यश्चोरभवद्रणा°.—[2]) Emended with R G; A °दित्यश्च नं°. ३४२३. [1]) Thus C; R G °पीडस्य; in A three *aksharas* after मुक्ता have become illegible. ३४२५. [1]) Emended with C; A जज्जपुत्रावपि. ३४२६. [1]) Emended with C; A °पीडज्येष्ठा.° ३४२७. [1]) Emended with C; A सम्मत्या°. ३४२९. [1]) Here ends the text of A at the foot of fol. 327 *rev.*, the last leaf of the MS. being lost. The text of the remaining verses is given from R G.

3430 नग्नोत्पलस्य विदधे साम्राज्ये सुखवर्मजः । शूरः शंकरवर्मा स गोपालस्तस्य चात्मजः[1] ॥३४३०॥
रथ्यागृहीतः प्राभूच्च तद्भ्राता संकटाभिधः । सुगन्धाख्या तयोर्माता तां विनाश्याथ[1] भूभुजम् ॥३४३१॥
शूरवर्मप्रणष्टारं पार्थं तन्त्रिपदातयः । चक्रुर्निर्जितवर्माणं ततस्तस्य[1] च तत्क्रमात् ॥३४३२॥
चक्रवर्मा शूरवर्मा चेति निर्जितवर्मजः । [1]विहिता बहुशो राज्ये तत्स्तम्भे[2] शंभुवर्धनः ॥३४३३॥
तदन्तरे लब्धराज्ये मन्त्री व्यापाद्य तं नृपम् । चक्रवर्मण्यतीतेथ पापी पार्थात्मजः क्रमात् ॥३४३४॥
3435 उन्मत्तावन्तिवर्मासीत्तत्पुत्रे शूरवर्मणि । राज्याद्भ्रष्टे द्विजैश्चक्रे राज्ये मन्त्री यशस्करः ॥३४३५॥
प्रपितृव्यात्मजस्तस्य वर्णटस्तनयोनु तम् । राज्ये वक्राङ्किसंग्रामस्तस्थौ निष्पाट्य तं ततः ॥३४३६॥
अमात्यः पर्वगुप्ताख्यो राज्यं द्रोहेण लब्धवान् । क्षेमगुप्तः[1] सुतोस्यासीदभिमन्यौ तदात्मजे ॥३४३७॥
शान्ते मात्रा पाल्यमाने नन्दिगुप्ते च तत्सुते । ततस्त्रिभुवने भीमगुप्ते च क्रूरचेष्टया ॥३४३८॥
पौत्रे तथैव निहते[1] स्वयं दिद्दाख्यया कृतम् । राज्यं[2] संग्रामराजोपि भ्रातृव्योन्ते नृपः कृतः ॥३४३९॥
3440 हरिराजानन्तदेवावास्तां तस्यात्मजौ ततः । कलशोनन्ततनयः क्रमाद्भूपौ तदात्मजौ ॥३४४०॥
उभावुत्कर्षहर्षाख्यावपि निष्पाट्य भूपतिम् । हर्षदेवं तमुद्दामविक्रमोनन्यवंशजः ॥३४४१॥
भ्रातुः पुत्रस्य दिद्दाया जस्सराजस्य नप्तृतः । मल्लाभिधानादुद्भूतो भूपतामुच्चलोभजत् ॥३४४२॥
द्रोहेण तं हतवतां भृत्यानामपतस्ततः । शङ्कराजान्यनामाभूद्रड्डाख्यः क्षणिको नृपः ॥३४४३॥
गर्गेण निहते तस्मिन्सल्हो[1] द्वैमातुरोप्यभूत् । तस्योच्चलमहीभर्तुर्भ्राता निर्वध्य तं बली ॥३४४४॥
3445 सुस्सलाख्योमहीद्राज्यं माल्लिरुच्चलसोदरः । विरक्तैः पातिते तस्मिन्राज्याद्भृत्यैर्नृपः कृतः ॥३४४५॥
षण्मासान्हर्षभूभर्तुर्नप्ता भिक्षाचराभिधः । पुनर्निर्वास्य तं प्राप्तराज्ये सुस्सलभूभृति ॥३४४६॥
क्रमाल्लवन्यैर्विध्वस्तैर्द्विराज्योद्विजिते हते । लवन्यान्निखिलांस्तं च[1] हत्वा भिक्षाचरं नृपम् ॥३४४७॥
सुतः सुस्सलभूभर्तुः संप्रत्यप्रतिमक्षमः । नन्दयन्मेदिनीमास्ते जयसिंहो महीपतिः ॥३४४८॥
गोदावरी सरिदिवोत्तुमुलैस्तरङ्गैर्वक्त्रैः स्फुटं सपदि सप्तभिरापतन्ती ।
श्रीकान्ति[1]राजविपुलाभिजनाब्धिमध्यं विश्रान्तये विशति राजतरङ्गिणीयम् ॥३४४९॥

[1] इति श्रीमहाकविश्रीकल्हणकृतायां राजतरङ्गिण्यामष्टमस्तरङ्गः[1] ॥

समाप्तेयं राजतरङ्गिणी

कृतिः श्रीमहामात्यचण्पकप्रभुसूनोर्महाकवेः कल्हणस्य ॥

३४३०. [1]) The last two *pâdas* are found in the above form in C; in R G they are added *sec. manu*, being probably copied from C. ३४३१. [1]) Emended with C; R G निनाश्य°. ३४३२. [1]) Thus R G; cf. v. 287 ffg.; C ततः पार्थस्ततः क्रमात्. ३४३३. [1]) These two *pâdas* and the first half of the following verse are omitted in C.—[2]) Thus R; G --म्भे. ३४३७. [1]) Thus C R (*sec. manu*); G R (*prima manu*) सोमगुप्तः. ३४३९. [1]) Emended; R G C निहिते.—[2]) Emended; R G राज्ये; C कृते । राज्ये. ३४४४. [1]) Emended; R G C मल्हो; R (*sec. manu*) सल्हो. ३४४७. [1]) Thus R; G °लांस्ते च; C °लांस्तांश्च. ३४४९. [1]) Emended; R G C श्रीकान्त°; comp. vii. 1285. *Colophon.* [1])—[1]) This part of the Colophon is not found in G.

# CORRIGENDA AND ADDENDA.

Canto. Verse.

१. ६०. *For* स्कन्धावारे *read* स्कन्धावारं, *adding note:* [1]) Emended; A स्कन्धावारे.

१. १०३.[1]) *For* $A_2$ भून्येश्वरो *read* $A_1$ भून्येश्वरो.

१. २१०. *For* स्वादुभोक्तव्य° *read* स्वादु भोक्तव्य°.

२. १. *For* ललनादु° *read* लवभादु°

२. ४४. *For* बीक्षमाणाय *read* बीक्ष्यमाणाय.

२. ११६. *For* संवाशिनिखिला *read* संवाशि निखिला°.

२. १००. *For* जरठ° *read* जरठ°[1], *adding note:* [1]) A जरठ°.

३. १०३. *To* पुरुषाधमः *add note:* Subhâshitâvalî, 361, reads पुरुषोत्तमः.

३. ४३२. *To* निरुधस्थिरं *add note:* Subhâshitâvali, 579, reads विरुधस्थिरं

*To* जगतह्नित्यमां° *add note:* Subhâshitâvali, 579, reads जगतां स्थितम्°.

४. १२५. *For* योगं *read* यो गं.

*To* परापकरणाय *add note:* Subhâshitâvalî, 3133, reads जनापकरणाय.

४. १४८. *For* अशिश्रयंस्तं *read* अशिश्रियंस्तं.

४. २३४. *To* °न्कालेतिवालो° *add note:* Subhâshitâvali, 3028, reads °न्कालेपि वालो°.

४. ४९८.[1]) *For* $A_3$ वेश, $A_1$ वेश *read* $A_3$ वेशो, $A_1$ वेशं.

४. ७१२. *For* °नुत्तम्भ्य *read* °नुत्तम्भ्य[1], *adding note:* [1]) Emended; A°नुत्तम्भ्य.

५. १२५. *For* सत्कर्मजन्मसु *read* सत्कर्म जन्मसु.

५. १२६. *For* वर्षे एकोनषष्ठे *read* वर्षे एकोनषष्टे.

५. १३२. *For* °शिश्रयन् *read* °शिश्रियन्.

५. १४९. *For* °भुभुज् *read* °भुभुजः.

५. १९९.[1]) *For* वराहमल° *read* वराहमूल

५. २३३. *To* कमलुकाभिधाम् *add note:* Comp. the name of the Shâhiya King *Kamalû*, Albêrûnî's *Indica* (transl. by Sachau) ii. 13.

५. २६०. *For* °महका *read* °माहका.

५. २९५. *For* स्थपुतान्वि° *read* स्थपुतान्वि°.

५. ३२६. *For* भीडक° *read* भीडक°.

६. ९८. *For* समर्पयन् *read* समार्पयत्[1], *adding note:* [1]) Emended; A समर्पयन्.

६. १४५. *For* सहल *read* सहलम्.

६. १४९. *For* काश्मीरिकाबल° *read* काश्मीरकबल°.

७. ११०. *For* स्वल्पानुगोभवन् *read* स्वल्पानुगो भवन्.

७. ४६६. *For* °स्कन्धानां[1] *read* °स्कन्धानां[1], *adding note:* [1]) Emended; A °स्कन्धानां.

७. ५६०. *For* वैषमशिश्रयन् *read* वैषमाशिश्रियन्.

७. ५८०. *For* °क्षिपद्वेसे° *read* °क्षिपद्वेसे°.

७. ५८८. *To* कीर्तिन्यडवपुरा° *add note:* [1]) Thus A; perhaps read कीर्तिर्वडवपुरा°; comp. viii. 538.

७. ६९०. *For* काष्ठवाट° *read* काष्ठवाट°.

७. ६९२. *For* °न्यसकीर्णं *read* °न्यसंकीर्णं.

७. ७०३.[1]) *For* A प्रत्यासन्ने *read* $A_1$ प्रत्यासन्ने.

७. ७६२. *For* पक्षमशिश्रयन् *read* पक्षमशिश्रियन्.

७. ८०४. *To* स्थशिरसः *add note:* Subhâshitâvalî, 3132, reads निजशिरः,

*To* विख्या स्वैव *add note:* Subhâshitâvali, 3132, reads वेख्याः सैव.

७. ८४९. *For* जरठः *read* जरठः[1], *adding note:* [1]) A जरठः.

७. ८८९. *For* कोपाकुले *read* कोपाकुले

७. ८९९. *For* बुभुक्षु° *read* बुभुक्षु°.

७. ९५०. *For* विरलामु° *read* विरलोमु°.

७. ९७९. *For* काश्मीरिकाणां[1] *read* काश्मीरकाणां, *omitting note.*

७. १००८. *For* काश्मीरिकाणां[1] *read* काश्मीरकाणां, *omitting note.*

७. १०१२. *For* बुभुक्षु° *read* बुभुक्षु°.

७. ११३१. *For* संप्रत्यमुष्णमन्यत *read* संप्रत्यमुष्मिन्यतः.

७. ११८९. *For* काश्मीरिका[1]: *read* काश्मीरकाः, *omitting note.*

७. ११८९. *For* स्कन्धावारे *read* स्कन्धावारे[1], *adding note:* [1]) Emended; A स्कन्धावारे.

# CORRIGENDA AND ADDENDA.

Canto. Verse.

७. १४६७. *For* मन्नज्ञातीव° *read* मन्नज्ञातेव°[1], *adding note:* 1) Emended; A °ज्ञातीव°.

७. १६५८. *For* सर्वर्वाम्रु लोविघात् *read* सर्वर्वामुखलोविघात्.

७. १६९५. *For* भूतिभिक्षा° *read* भूतभिक्षा°.

८. ३५४. *For* °न्स्कन्वावारेषु *read* °न्स्कन्धावारेषु[1], *adding note:* 1) Emended; A° न्स्कन्वा°.

८. ४८९. *For* वेषाशी *read* वेषाशी[1], *adding note:* 1) Emended; A वेषाशी.

८. ६७७. *For* हम्ब *read* हम्बं.

८. ७४५. *For* तैर्जयो मोग्घिवा° *read* तैर्जयोमोग्घि वा°.

८. ८८७. *For* काश्मीरिक°[1] *read* काश्मीरक°, *omitting note.*

*For* °धाटव: *read* °पाटव:.

८. ९०२. *For* °सालारीनाद्य° *read* °सालाद्रिवाद्य°

८.९२२.९२३. *For* काश्मीरिका°[1] *read* काश्मीरका°, *omitting note.*

८. १००८. *For* °कान्वमुखरे *read* °कन्वमुखरे.

८. १०५५. *For* स्कन्वावारं *read* स्कन्धावारं[1], *adding note:* 1) Emended; A स्कन्वावारं.

८. १०८४. *For* °भिक्षिकास्यान *read* °भिक्षुकास्थान°.

८. ११४८. *For* काश्मीरके[1] *read* काश्मीरिके, *omitting note.*

८. १३२८. *For* राजात्मजजमात् *read* राजात्मजभ्रमात्.

८. १४४५ *For* भिजप्रभा: *read* निजप्रभो:.

८. २०१८. *For* ज्योतीरसा° *read* ज्योती रसा°.

८. २०४२. *For* °स्कोष्ठेश्वरी *read* °स्कोष्ठेश्वरो.

८. २१२१. *For* संस्तम्भेन°[1] *read* संस्तम्भैन°, *omitting note.*

८. २७४८.1). *For* PRITHVÎHARI's *read* PRITHVÎHARA's.

८. २७६७. *For* काश्मीरका:[1] *read* काश्मीरिका:, *omitting note.*

८. ३०३३.1). *For* सारसा *read* सारासा.

८. ३१७२. *For* °स्संस्तभ्य[1] *read* °स्संस्तम्भ्य, *omitting note*

८. ३१८१. *For* इन्दुवंश° *read* इन्दुवंशा°[1].

---

*N.B.—Some letters, especially* े *and* ि, *have occasionally broken in the printing.*